# ५

युधिष्ठिर उवाच ।
कथंवीर्यः समभवत्स राजा वदतां वरः ।
कथं च जातरूपेण समयुज्यत स द्विज ॥ १
क्व च तत्सांप्रतं द्रव्यं भगवन्नवतिष्ठते ।
कथं च शक्यमस्माभिस्तदवाप्तुं तपोधन ॥ २
व्यास उवाच ।
असुराश्चैव देवाश्च दक्षस्यासन्प्रजापतेः ।
अपत्यं बहुलं तात तेऽस्पर्धन्त परस्परम् ॥ ३
तथैवाङ्गिरसः पुत्रौ व्रततुल्यौ बभूवतुः ।
बृहस्पतिर्बृहत्तेजाः संवर्तश्च तपोधनः ॥ ४
तावपि स्पर्धिनौ राजन्पृथगास्तां परस्परम् ।
बृहस्पतिश्च संवर्तं बाधते स्म पुनः पुनः ॥ ५
स बाध्यमानः सततं भ्रात्रा ज्येष्ठेन भारत ।
अर्थानुत्सृज्य दिग्वासा वनवासमरोचयत् ॥ ६
वासवोऽप्यसुरान्सर्वान्निर्जित्य च निहत्य च ।
इन्द्रत्वं प्राप्य लोकेषु ततो वव्रे पुरोहितम् ।
पुत्रमङ्गिरसो ज्येष्ठं विप्रश्रेष्ठं बृहस्पतिम् ॥ ७
याज्यस्त्वङ्गिरसः पूर्वमासीद्राजा करंधमः ।

---

(for बभूव ह). — c) Ś1 रेजे (for ईजे). K5 T G3 स तत्र (by transp.); B1 यत्र स. — e) K4 Dc1 D1 मरुंतः; K5 मरुतैः; D3 मरुतः. Ś1 K2 B1 Dc1 D2.3 सह तैः; T1 G1 M4 सहितः. G2 मरुत्तस्य हि तत्सर्वैः. — f) K1.2 B1–3 D2–6 T1 G2 नराधिप.

Colophon. — *Adhy. name :* Ś1 K2.3 B3 Dc1 Dn1 D2.4–6 संवर्तमरुत्तीयं; K4 D1 मरुंतयज्ञसंभारः; M1–3 यज्ञप्रोत्साहनं. — *Adhy. no.* (figures, words or both): Ś1 K4 Dn1 D4.5 4 (as in text); G1 M 3. — *Śloka no. :* K2 Dn1 28; D4 24.

## 5

1 Ś1 K1.3 om. (hapl.) $1^{ab}$. — b) D2–4 transp. स and राजा. B1.2.4 Dc1 M ददतां; G2 दमतां (for वदतां). Dn1 D2.5.6 वर. T G3 स राजा पृथिवीपतिः. — c) K5 कदा (for कथं). B3 वा (for च). G3 जातरूपाणां. — d) K5 G1 M समायुज्यत. K1.2 D4–6 स द्विजः; T G M3 वै नृपः.

2 a) T सर्वं (for द्रव्यं). Ś1 K1.3 द्रव्यं च तत्कुतः प्राप्तं. — b) K3 D4 क्व च (for अव-). D6 -तिष्ठति; M1–3 -शिष्यते (for -तिष्ठते). Ś1 K1 भगवन्क्व च तिष्ठति. — d) Ś1 K1 ततो (for तद्). K1.2 तपोधनः; D6 °धनं.

3 Dc1 om. $3^{abc}$. — a) K2.5 B2–5 Dn1 सुराश्चैव (for [ए]व देवाश्च). — b) K4 D3 प्रजापते; B3 D6 °पतिः. — c) K4 Dn1 अपत्य- (for °त्यं). K4 D1 [illegible] (for तात). D3 अपत्यं वह तातस्य. — d) K4.5 D1 om. ते. K3 D2.4–6 संस्पर्ध(D6 °र्धे)त; Dc1 तत्स्प°; D3 स्पर्धयंतः; T1 ते स्पर्धंति.

4 a) T1 G3 च (for [ए]व). D4 [आं]गीरसः. M1–3 तथैवांगिरसावेतौ. — b) K2.4.5 D1.4 (marg.) G1.2 M पितृतुल्यौ; Dn1 ब्रह्म°; D5.6 तत्तुल्यौ वा; T वृत्ततुल्यौ (for व्रत°). — c) Dc1 om. बृहस्पतिर्. G1 महा- (for बृहत्). — d) K1 संवृत्तश् (for संवर्तश्). Ś1 तपोधनाः.

5 a) K4 B2–4 Dn1 D1 तावति-; Dc1 तान्प्रति- (for तावपि). K2 स्पर्धितौ; D1 -स्पर्धनौ. — b) K4 D1 ब्राह्मणावजितेंद्रियौ. — c) K2.3 Dc1 Dn1 D5.6 T2 G2 M3 स; K5 B T1 G1.3 M1.2.4 तु (for च). — d) K1 स; T1 तु (for स्म). M1.2 स नित्यशः (for पुनः पुनः).

6 a) K1 राध्यमानः (for बाध्य°). — b) T1 भ्राता. — c) M4 दिव्यांश्च (for दिग्वासा). — d) K1.3–5 B4 Dc1 D2 G1 M वने (for वन-). B1.2 अरोचत.

7 T1 om. $7^{a}$–$8^{b}$. — b) K2 B1–4 Dn1 D5.6 विजित्य (for निर्जित्य). K1 निरुत्य; K3 हनित्य (by metathesis); K5 B1.2.4 Dn1 D5.6 T2 G3 निपात्य; Dc1 निशाम्य (for निहत्य). — e) K2 T2 ज्येष्ठम् (for पुत्रम्). Dc1 आंगिरसो; D1 अंगिरसां. K1.5 श्रेष्ठं; K4 D1 श्रेष्ठं (sic); T2 पुत्रं (for ज्येष्ठं). — f) K5 B1.5 Dc1 G3 M विप्रज्येष्ठं. D1 बृहस्पतिः.

8 T1 om. $8^{ab}$ (cf. v. l. 7). — a) D3 यज्यस्. K4 D1 M1–3 [आं]गिरसः; D4 G3 [आं]गी°. — c)

वीर्येणाप्रतिमो लोके वृत्तेन च बलेन च ।
शतक्रतुरिवौजस्वी धर्मात्मा संशितव्रतः ॥ ८
वाहनं यस्य योधाश्च द्रव्याणि विविधानि च ।
ध्यानादेवाभवद्राजन्मुखवातेन सर्वशः ॥ ९
स गुणैः पार्थिवान्सर्वान्वशे चक्रे नराधिपः ।
संजीव्य कालमिष्टं च सशरीरो दिवं गतः ॥ १०
बभूव तस्य पुत्रस्तु ययातिरिव धर्मवित् ।
अविक्षिन्नाम शत्रुक्षित्स वशे कृतवान्महीम् ।
विक्रमेण गुणैश्चैव पितेवासीत्स पार्थिवः ॥ ११
तस्य वासवतुल्योऽभून्मरुत्तो नाम वीर्यवान् ।
पुत्रस्तमनुरक्ताभूत्पृथिवी सागराम्बरा ॥ १२
स्पर्धते सततं स स्म देवराजेन पार्थिवः ।
वासवोऽपि मरुत्तेन स्पर्धते पाण्डुनन्दन ॥ १३
शुचिः स गुणवानासीन्मरुत्तः पृथिवीपतिः ।
यतमानोऽपि यं शक्रो न विशेषयति स्म ह ॥ १४
सोऽशक्नुवन्विशेषाय समाहूय बृहस्पतिम् ।
उवाचेदं वचो देवैः सहितो हरिवाहनः ॥ १५
बृहस्पते मरुत्तस्य मा स्म कार्षीः कथंचन ।
दैवं कर्माथ वा पित्र्यं कर्तासि मम चेत्प्रियम् ॥ १६
अहं हि त्रिषु लोकेषु सुराणां च बृहस्पते ।

C. 14. B. 14. K. 14.

B1 वीर्यं च (for वीर्येण). D1 वीर्येणाप्रतिलोकेन. — d) D5.6 दत्तेन; T वित्तेन; M1–3 व्रतेन (for वृत्तेन). — After 8cd, K4 ins. 12*. K4 om. (hapl.) 8e–9b. — e) G1.2 ज्यायान् (for [ओ]जस्वी). — f) B3 स युधिष्ठिरः; K2 D1.4 शंसितव्रतः; K5 शंशि°.

9 K4 om. 9ab (cf. v. l. 8). — a) B3 तस्य; D3 पश्य; G1 स्वस्य; G2 स्वस्य (for यस्य). M1–3 यौधाश्. — b) D (except D1) मित्राणि (for द्रव्याणि). — Ś1 K1–3 B D ins. after 9ab: K4 after 8cd: K5 after 9:

12* शयनानि च मुख्यानि महार्हाणि च सर्वशः ।
[Ś1 K1.2 तु (for the first च). D2.5.6 महार्हानि.]

— G3 om. 9cd; D4 reads it on marg. — c) M1.2.4 (*inf. lin.* as in text) नादेनै(M1 °नै)व; M3 ध्मातादेव (for ध्याना°). K2 Dc1 D3 भवान् (for [अ]भवद्). Ś1 सर्वं (for राजन्). — d) Ś1 मुखं वातेन; B5 D1–3 मुखवातैश्च. Dc1 संयुगे (for सर्वशः).

10 a) K4 D1 राजन् (for सर्वान्). — b) Ś1 नराधिप; K2 °धिपान्. — c) Ś1 K1.3.5 समीक्ष्य; Dn1 संजीय; D1.5.6 स जीव्य (sic); T स जीवन् (for संजीव्य). K2 कालसिष्टं (sic); K3 °दिष्टं; K4 D1 °शिष्टं (for °मिष्टं). K2 D1 तु (for च). — d) Ś1 K3 स च वीरो; K1 सर्ववीरो (for सशरीरो).

11 a) Dc1 om. पुत्रस्तु. B5 D2.3 [s]पि; D4 om. (for तु). — b) K4 D1 धर्मराट् (for °वित्). D6 ययारिव स धर्मवित्. — c) D1 अविक्षन्; D2 अविच्छिन्; T G1.3 आविक्षिन्; G2 अवीक्ष्यो; M4 आवीक्षिन्. K1.2.5 D1–4 शत्रुजित्; K4 सर्वजित्; Dc1 D5.6 शत्रुंजित्; S (G2 damaged) शत्रुघ्नो (for °क्षित्). — d) S (G2 damaged) यो (for सः). Ś1 K3 वशी· (for वशे). — e) M4 विक्रमैश्च (for °मेण). Ś1 K1.3 चापि; K5 T G3 चापि (for चैव). — f) T1 पितैव. B5 D2–4 नराधिपः (for स पार्थिवः).

12 K3 om. (hapl.) 12a–13b. — b) K2 D3 मरुतो; Dc1 D1 मरुंतो. — c) G3 तद् (for तम्). K4 D4 T1 G अनुरक्तो.

13 K3 om. 13ab (cf. v. l. 12). — a) B1.2.4.5 Dc1 Dn1 D2.3.5.6 स स्म सततं (by transp.); B3 हि सदा यस्तु. K2 तस्माद्; K4 D1 तस्य; T G3 यस्तु; G1.2 यस्माद् (for स स्म). — b) K2 D1 पार्थिव; B Dc1 Dn1 D2–6 नित्यदा (for पार्थिवः). — c) K1 वामे वापि; D1 स वासवो (for वासवोऽपि). K2.4 Dc1 D1 मरुं(Dc1 °रु)तेन. — d) K2 D2 पांडुनंदनः.

14 a) K1 नाशुचिः (for शुचिः स). T G2 सद्; M1–3 स्व· (for स). — b) K2.4 Dc1 D1 मरुं(Dc1 °रु)तः. T स महीपतिः (for पृथिवी°). — c) K1 यातमानो; Dc1 G1 यज° (for यत°). B1.2 सं; D2.4 वै (for यं). — d) M4 हि (for ह). T G1.3 निर्विशेषयति स्म ह.

15 a) M1.2 न शक्नुवन् (for सोऽश°). — d) K1 हरिवाहनाः.

16 M4 om. 16–17. — a) K2.4 Dc1 D1 मरुं(Dc1 °रु)तस्य. — b) G3 मा (for स्म). G1 M3 कदाचन (for कथं°). — c) G3 कारयथाः (for कर्माथ वा). K3 B Dc1 Dn1 D3.4 T G1.2 पि(B1.2 पै)त्र्यं वा (by transp.); D6 पित्र्न्यं. — d) B1.2 (marg. as in

इन्द्रत्वं प्राप्तवानेको मरुत्तस्तु महीपतिः ॥ १७
कथं ह्यमर्त्यं ब्रह्मंस्त्वं याजयित्वा सुराधिपम् ।
याजयेर्मृत्युसंयुक्तं मरुत्तमविशङ्कया ॥ १८
मां वा वृणीष्व भद्रं ते मरुत्तं वा महीपतिम् ।
परित्यज्य मरुत्तं वा यथाजोषं भजस्व माम् ॥ १९
एवमुक्तः स कौरव्य देवराज्ञा बृहस्पतिः ।
मुहूर्तमिव संचिन्त्य देवराजानमब्रवीत् ॥ २०
त्वं भूतानामधिपतिस्त्वयि लोकाः प्रतिष्ठिताः ।
नमुचेर्विश्वरूपस्य निहन्ता त्वं बलस्य च ॥ २१
त्वमाजहर्थ देवानामेको वीर श्रियं पराम् ।
त्वं बिभर्षि भुवं द्यां च सदैव बलसूदन ॥ २२
पौरोहित्यं कथं कृत्वा तव देवगणेश्वर ।
याजयेयमहं मर्त्यं मरुत्तं पाकशासन ॥ २३
समाश्वसिहि देवेश नाहं मर्त्याय कर्हिचित् ।
ग्रहीष्यामि स्रुवं यज्ञे शृणु चेदं वचो मम ॥ २४
हिरण्यरेतसोऽम्भः स्यात्परिवर्तेत मेदिनी ।

---

text ) मम चेदिच्छसि प्रियं.

17 M4 om. 17 ( cf. v. l. 16 ). —$^{a}$) Ś1 K1.3 तु; K2.4.5 D1 T G3 च ( for हि ). —$^{b}$) K2.4 D1 बृहस्पतेः ( K2 °तिः ). —$^{d}$) K4 Dc1 D1 मरुंतस्. T स ( for तु ). G3 बृहस्पते ( for महीपतिः ).

18 Before 18, M4 ins. शक्रः. —$^{a}$) Dc1 corrupt. G1.2 हि मर्त्यं ( for ह्यमर्त्यं ). T1 G3 पूर्वं ( for ब्रह्मंस् ). K4 D1 अमर्त्यं त्वं कथं ब्रह्मन्; B1.4 कथं ह्यमर्त्यंब्रह्मन्. —$^{b}$) K4 यापयित्वा; D1 पाय° ( for याज° ). K3 नराधिपं ( for सुरा° ). —$^{c}$) K ( except K3 ) D6 G2.3 M1-3 याजयेन् ( for °येर् ). D3 जयन्मृत्युं स संयुक्तं. —$^{d}$) K4 Dc1 D1 मरुं( Dc1 °रु )तम्. M1-3 मरुत्तं पृथिवीपतिं.

19 $^{a}$) D3 वृणीथ. —$^{b}$) K4 Dc1 D1 मरुंतं. T2 मरुत्तमपि वा नृपं. —$^{c}$) K4 Dc1 D1 मरुंतं. —$^{d}$) D3 यथायोषं. D4 यजस्व ( for भ° ). Ś1 K1.5 वा ( for माम् ).

20 $^{a}$) K2-4 D1 T G1.3 M3.4 तु ( for स ). —$^{b}$) K2.4 शक्रेणाथ; T G3 देवेंद्रेण ( for देवराज्ञा ). —$^{c}$) G3 मरुत्तम् ( for मुहूर्तम् ). Ś1 G1.3 अपि; K1 अथ; K4 D1 इति ( for इव ). —$^{d}$) K2.4 T G3 देवराजमथाब्रवीत्; K5 राजन्वचनमब्र°.

21 Before 21, T G3 ins. बृहस्पतिः. —$^{a}$) T2 लोकानाम् ( for भूता° ). —$^{b}$) D5.6 G1.2 सनातनाः ( for प्रतिष्ठिताः ). —$^{d}$) Ś1 K1 विहंता; Dn1 *हंता ( for निहन्ता ). Dc1 तुमुलस्य; M त्वं बलस्य. G2 वा ( for च ). T हंता त्वं बलसूदन.

22 $^{a}$) K2 D1.6 त्वमाजहर्ष; K3 समागमार्थं; K5 समाजहार; B1-4 Dc1 त्वमा( B3 °या )जहिथ; T G3 त्वमाहर्ता च; G1.2 त्वमाजहार्षीद् ( for °हर्थ ). B1.2 भूतानाम्; T G3 दैत्यानाम् ( for देवा° ). —$^{d}$) K1 B1.2 M4 एकवीरः; K2.5 D1 M1-3 एकवीर; K3.5 Dc1 D4 एको वीरः. K1.3 D3 श्रियं परं; B1.2 परां श्रियं ( by transp. ). T G3 एकः श्रीमानत्तुमः; G1 एकवीर्यश्रियं परां. —$^{c}$) K1.3 D3 तु वंद्यां ( K3 °द्यं ) च; G3 महीं चैव ( for भुवं द्यां च ). —$^{d}$) G1 तथैव ( for सदैव ). K2 बलसूदनः; K5 °वाहनः; G1 M बलसूदन.

23 $^{a}$) T1 अहं ( for कथं ). K4 D1 त्यक्त्वा; K5 हित्वा ( for कृत्वा ). T2 पौरोहितत्वं ते कृत्वा; G3 °त्यं हि कृत्वा तु. —$^{b}$) K5 कथं ( for तव ). B2.3 G1.2 M सुरेश्वर ( for -गणे° ). —$^{c}$) D3 याजये ह ( for °येयम् ). Ś1 K1-3 B3 पुनर्; K4.5 T G M1.2 कथं ( for अहं ). —$^{d}$) K4 मरुंतं; D3 मरुतं. K4 D1 पाकशासनं.

24 $^{a}$) K2.4 B4 D1 देव त्वं; K3 B1-3.5 D ( except D1 ) देवेंद्र ( for देवेश ). —$^{b}$) K2 मर्ताय; B4 Dc1 Dn1 D2.4-6 मर्त्यस्य; D3 सत्यस्य; G3 अर्थाय ( for मर्त्याय ). K5 D2-4 कस्यचित् ( for कर्हि° ). —$^{c}$) K4 B3 D1.4.6 गृही( D4 °हि )ष्यामि; D2.3 ग्रहि° ( for ग्रही° ). K2 D1 श्रुचं; K4 श्रुतं; B ( except B4 ) D2 श्रुवं; Dn1 M4 ध्रुवं; D3 स्रुचं ( for स्रुवं ). Dn1 यज्ञं; D2 जज्ञे ( sic ) ( for यज्ञे ). —$^{d}$) K5 शृणुष्व ( for शृणु च ). K4 D3 वेदं; G2 M4 ( *inf. lin.* as in text ) देव ( for चेदं ).

25 $^{a}$) K5 हिरण्यरेताः. K2.4 B D S हिरण्यरेता नो( K2 °ता कृ-; T1 °तनो )ष्णः स्यात्. —$^{b}$) Dc1 परिवर्तत. K2 D6 G2 मेदिनीः. —$^{c}$) T1 भानं; G1 भासां ( for भासं ). K2 Dn1 D5.6 तु; B5 T G3 न ( for च ). B5 च; T G3 तु; G1.2 नो ( for न ). K4 [अ]धिकं ( for रविः ). —$^{d}$) K3 सत्त्वं च ( for

भासं च न रविः कुर्यान्मत्सत्यं विचलेद्यदि ॥ २५
बृहस्पतिवचः श्रुत्वा शक्रो विगतमत्सरः ।
प्रशस्यैनं विवेशाथ स्वमेव भवनं तदा ॥ २६

इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## ६

व्यास उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादं मरुत्तस्य च भारत ॥ १
देवराजस्य समयं कृतमाङ्गिरसेन ह ।
श्रुत्वा मरुत्तो नृपतिर्मन्युमाहारयत्तदा ॥ २
संकल्प्य मनसा यज्ञं करंधमसुतात्मजः ।
बृहस्पतिमुपागम्य वाग्मी वचनमब्रवीत् ॥ ३
भगवन्यन्मया पूर्वमभिगम्य तपोधन ।
कृतोऽभिसंधिर्यज्ञाय भवतो वचनाद्गुरो ॥ ४
तमहं यष्टुमिच्छामि संभाराः संभृताश्च मे ।
याज्योऽस्मि भवतः साधो तत्प्राप्नुहि विधत्स्व च ॥ ५
बृहस्पतिरुवाच ।
न कामये याजयितुं त्वामहं पृथिवीपते ।
वृतोऽस्मि देवराजेन प्रतिज्ञातं च तस्य मे ॥ ६

C. 14. 1
B. 14. 6
K. 14. 6

---

मत्सत्यं ). K4 D1 न चलेद् ; G1. 2 विफलेद् ( for विच° ). B Dc1 Dn1 D2–6 T2 न तु सत्यं चलेन्मयि ( T2 °द्यदि ).

26 Before 26, K2. 4. 5 D1. 2 T G M1 ins. व्यास उवाच ; B Dc1 D3. 6 M2. 3 वैशंपायन उवाच. — a ) K2. 4. 5 B3 T2 बृहस्पतेर्. — b ) G3 M4 [s]पि ( for वि- ). — c ) Ś1 प्रशंस्यैनं ; K1 प्रशस्यैनं ; K2 प्रशिस्येनं ( sic ) ; K5 प्रशास्येवं ; B4. 5 प्रणम्यैनं ; D3 प्रशश्यैनं ( sic ) ; T G3 विवेश्यैवं ( for प्रशस्यैनं ). Ś1 K1. 3. 5 [आ]शु ( for [अ]थ ). — d ) D6 स्वयम् ( hypermetric ) ( for स्वम् ). K5 ततः ; T1 G2 तथा ( for तदा ).

Colophon. — *Adhy. name :* Ś1 K2. 5 B ( except B3 ) Dn1 M4 संवर्तमरुत्ती( K2 °त्ती )यं ; K1 Dc1 संवृत्त- ( Dc1 °वात्त )मरुत्तीयं ; K4 D1 संवर्ती( D1 °र्तं )यं ; M1–3 शक्रबृहस्पतिसंवादः. — *Adhy. no.* ( figures, words or both ) : Ś1 K5 Dn1 D4. 5 5 ( as in text ) ; G1. 2 M 4. — *Śloka no.* : K2 Dn1 28.

### 6

1 c ) Dc1 तु ( for च ). D3 संवादे. — d ) K4 D1. 3 मरुं( D3 °रु )तस्य. B D ( except D1 ) G1 च धीमतः ; T महात्मनः ( for च भारत ).

2 a ) K5 B1 देवराजेन. M4 समयः. — b ) B3 अंगिरसेन ; D4 T2 आंगी°. B1 तं ; B2. 3. 5 D2–4 च ; T तु ( for ह ). M1–3 कृतमांगिरसं नृप. — c ) K4 D1 मरुतो. — d ) Ś1 B Dc1 Dn1 D2–6 यज्ञम् ; K1–4 D1 सत्रम् ; K5 क्रतुम् ; T1 यत्नम् ( for मन्युम् ). B D ( except D1 ) T परं ( for तदा ).

3 a ) T G3 संस्मृत्य ( for संकल्प्य ). — b ) K4 ·सुतात्मजं. — c ) K3 G1 समागम्य ( for उपा° ).

4 a ) K5 T G3 M1–3 त्वां ; D1 om. ( for यन् ). — b ) K4 Dc1 D1 G1. 2 अधिगम्य ( for अभि° ). B1 तपोधनं ; M3 धनं बहु. K2 आगतस्य तपोधनः. — c ) Dn1 T1 G1 कृता ; D2 कृत्वा ( for कृतो ). K2 [s]स्ति ; D6 [s]पि ; M1–3 हि ( for ऽभि- ). Ś1 Dn1 D6 यज्ञस्य ; M3 यागाय ( for यज्ञाय ). — d ) K2 D6 T2 G1 गुरोः. K4 D1 भवतो वचनाय च.

5 a ) K2 T G1. 2 M4 तद् ( for तम् ). K4 D3. 4 द्रष्टुम् ( for यष्टुम् ). G3 तदहं संप्रयच्छाशु. — b ) K4 D1 मया ; K6 तु मे ; D3. 4 च ये ( for च मे ). — c ) K2. 4 D1 M4 भवता ; K5 भगवन् ; T विधिवत् ( for भवतः ). — d ) G1 मां ( for तत् ). B1. 2 प्राप्नोहि. Ś1 K1. 3 नः ( for च ). T G3 तद्ब्रूहि विधिव( T1 °स )त्तम.

6 c ) Ś1 वृत्तो ; K1 धृतो ( for वृतो ). K3 -देवेन ( for -राजेन ). — d ) T1 यस्य ( for तस्य ).

3

मरुत्त उवाच ।

पित्र्यमस्मि तव क्षेत्रं बहु मन्ये च ते भृशम् ।
न चास्म्ययाज्यतां प्राप्तो भजमानं भजस्व माम् ॥ ७

बृहस्पतिरुवाच ।

अमर्त्यं याजयित्वाहं याजयिष्ये न मानुषम् ।
मरुत्त गच्छ वा मा वा निवृत्तोऽस्म्यद्य याजनात् ॥ ८
न त्वां याजयितास्म्यद्य वृणु त्वं यमिहेच्छसि ।
उपाध्यायं महाबाहो यस्ते यज्ञं करिष्यति ॥ ९

व्यास उवाच ।

एवमुक्तस्तु नृपतिर्मरुत्तो व्रीडितोऽभवत् ।
प्रत्यागच्छच्च संविग्नो ददर्श पथि नारदम् ॥ १०
देवर्षिणा समागम्य नारदेन स पार्थिवः ।
विधिवत्प्राञ्जलिस्तस्थावथैनं नारदोऽब्रवीत् ॥ ११
राजर्षे नातिहृष्टोऽसि कच्चित्क्षेमं तवानघ ।
क्व गतोऽसि कुतो वेदमप्रीतिस्थानमागतम् ॥ १२
श्रोतव्यं चेन्मया राजन्ब्रूहि मे पार्थिवर्षभ ।
व्यपनेष्यामि ते मन्युं सर्वयत्नैर्नराधिप ॥ १३
एवमुक्तो मरुत्तस्तु नारदेन महर्षिणा ।
विप्रलम्भमुपाध्यायात्सर्वमेव न्यवेदयत् ॥ १४
गतोऽस्म्यङ्गिरसः पुत्रं देवाचार्यं बृहस्पतिम् ।

---

7 K4 मरुंत; D3 मरुत (for मरुत्त). — [a]) B2 पित्र्यम्. B Dc1 Dn1 भवत् (for तव). B3.4 (marg.) क्षेमं; T2 G3 क्षत्रं. Cv as in text. — [b]) M4 मान्यं (for मन्ये). — [c]) K2.4 B D1-5 T2 तव (for न च). K1 [अ]स्य; G3 [अ]पि (for [अ]स्मि). K1.4 B D T2 M1-3 याज्यतां (for [अ]या°). T1 न चात्ययातसंप्राप्तो (sic). — [d]) M1.2 विधत्स्व (for भजस्व).

8 [a]) K2 ह; K5 हि; T G3 तु (for [अ]हं). — [b]) K4 B D कथं नरं (for न मानुषम्). K2 याजयिष्यामि मानुषं. — [c]) K4 D1.8 मरुं(D3 °रु)त. Ś1 K3 वा मा गा; K1 मा गा वा (for वा मा वा). — [d]) K2.4 D1 मर्त्य-; B Dc1 Dn1 D2-4 T2 [s]स्म्यन्य-; G1.2 याज्य- (for ऽस्म्यद्य). G3 त्वं निवृत्तोद्य याजनात्.

9 [a]) K2 D5 M1-3 त्वा; K3 त्वं; T G3 तु (for त्वां). K5 चास्मि; T1 सम्यग् (for [अ]स्म्यद्य). — [b]) G2.3 शृणु (for वृणु). K3 B4 Dc1 Dn1 यं त्वम् (by transp.); G1.2 M4 चान्यम्. G1.2 यद्; M1-3 यम् (for इह). — [c]) T G1 महाभाग (for °बाहो). G3 स वाच्योयं महाभाग. — [d]) D4 यज्ञं यस्ते (by transp.).

10 B1.2.4 om. the ref. — [a]) Ś1 K (except K3) D1 स (for तु). — [b]) K4 D1.3 मरु(D1 °रुं)तो. S (except G3) व्रीळितो (for व्रीडितो). D3 भवेत् (for ऽभवत्). — [c]) K1-3 B3.5 Dc1 D3.5 प्रत्या( B3 °त्य )गच्छंश्च. B1.2 समुद्विग्नो; B4 Dn1 D6 G1 M4 सुसंविग्नो; T2 च तं दीनो (for च संविग्नो). G3 प्रत्यागच्छत दीनोयं. — [d]) K2 दर्शयन् (for ददर्श). K3 यति- (for पथि).

11 [d]) Ś1 K1 यथैनं; K2 T G3 तथैवं; B1.2 अथैवं; G1.2 तदैवं (for अथैनं).

12 Before 12, K2.4.5 D1 M ins. नारदः. — [a]) Ś1 (before corr.) देवर्षे (for राजर्षे). K1 नाभिहृष्टो; K2.4 D1 न प्र°; B3 नातिकृष्टो (for °हृष्टो). — [b]) K1.2 कश्चिन्; K5 D4 कच्चित्; D1 केचित् (sic). — [c]) K1 न कुतो (for क्व गतो). K2 त्वं; Dc1 [s]स्ति; T [s]स्य (for ऽसि). T [आ]गतो (for कुतो). D6 चेदम्; M1 वापि (for वेदम्). — [d]) T G M3 मत्प्रीति- (for अप्रीति-). T G3 आगतः. M1 न प्रीतिस्त्वमिहागतः.

13 [a]) Ś1 तन्; D3 T2 च (for चेन्). K3 महाराज (for मया राजन्). — After 13[a], G3 reads 20[bcd] and om. 13[b]. — [b]) B1.2 ब्रूहि पार्थिवसत्तम. — [c]) K4 दैन्यं; D1.4 (marg. as in text).6 मृत्युं (for मन्युं). — [d]) G3 संप्रयत्नान् (for सर्वयत्नैर्). — After 13, Ś1 K3 ins. an addl. colophon [ *Adhy. name :* K3 संवर्त्तमरुत्तीयं. — *Adhy. no. :* Ś1 6 ].

14 Before 14, MSS. ins. व्यासः. — [a]) K4 D1 मरुंतस्. B1 [s]थ; Dn1 D5.6 स (for तु). T नारदेन ततः पृष्टः. — [b]) T कारणं तन् (for नारदेन). K1.3.5 सुरर्षिणा (for मह°). — [c]) G1 उपाध्यायं; G3 °ध्याये. — [d]) T M एतन् (for एव).

15 Before 15, Ś1 K2.3.5 B Dc1 D2.4-6 G M4 ins. मरुत्तः; K4 D1 मरुंत्तः; D3 मरुतः. — [a]) K1 ततो (for गतो). — [b]) B4 Dc1 देवान्प्रति (for देवाचार्यं). — [c]) G प्रष्टुं (for द्रष्टुं). — [d]) K2 D6 M1.2 मा. D2 सो (for न). K3 [अ]भ्यपद्यत; G1 ह्यमन्यत; G2.3

यज्ञार्थमृत्विजं द्रष्टुं स च मां नाभ्यनन्दत ॥ १५
प्रत्याख्यातश्च तेनाहं जीवितुं नाद्य कामये ।
परित्यक्तश्च गुरुणा दूषितश्चास्मि नारद ॥ १६
एवमुक्तस्तु राज्ञा स नारदः प्रत्युवाच ह ।
आविक्षितं महाराज वाचा संजीवयन्निव ॥ १७
राजन्नङ्गिरसः पुत्रः संवर्तो नाम धार्मिकः ।
चङ्क्रमीति दिशः सर्वा दिग्वासा मोहयन्प्रजाः ॥ १८
तं गच्छ यदि याज्यं त्वां न वाञ्छति बृहस्पतिः ।
प्रसन्नस्त्वां महाराज संवर्तो याजयिष्यति ॥ १९

मरुत्त उवाच ।
संजीवितोऽहं भवता वाक्येनानेन नारद ।
पश्येयं क्व नु संवर्तं शंस मे वदतां वर ॥ २०
कथं च तस्मै वर्तेयं कथं मां न परित्यजेत् ।
प्रत्याख्यातश्च तेनापि नाहं जीवितुमुत्सहे ॥ २१
नारद उवाच ।
उन्मत्तवेषं बिभ्रत्स चङ्क्रमीति यथासुखम् ।
वाराणसीं तु नगरीमभीक्ष्णमुपसेवते ॥ २२
तस्या द्वारं समासाद्य न्यसेथाः कुणपं क्वचित् ।

C. 14. 16
B. 14. 6.
K. 14. 6.

---

[अ]भ्यमन्यत (for °नन्दत). D3.4 M4 न च मां सो(M4 माम)भ्यनंदत.

16 G3 om. 16ᵃ–20ᵃ. —ᵃ) K6 तु (for च). B1 तेनाद्य; G2 येनाहं. —ᵇ) K4.5 B (except B4) D1–4 G1.2 M4 जीवितं. —ᶜ) D4 तु (for च). —ᵈ) Ś1 K1.3 दीक्षितश्च; D6 उषि° (for दूषि°). K2 [अ]पि (for [अ]स्मि).

17 G3 om. 17 (cf. v. l. 16). Before 17, MSS. ins. व्यास उवाच. —ᵃ) M1–3 स (for तु). K2 राजा (for राज्ञा). —ᵇ) B5 D2.4 नारदः प्रत्यभाषत. —ᶜ) K4 D2 M4 आवीक्षितं; Dc1 D6 अविक्षि(D6 °क्षी)तं; D5 आविक्षतं. T1 G1.2 M4 महाराजं. —ᵈ) T नृपं (for इव). K6 संवर्तो याजयिष्यति (= 19ᵈ).

18 G3 om. 18 (cf. v. l. 16). Before 18, MSS. ins. नारद उवाच. —ᵇ) K2 सवर्तो. D3 -धारिकः (for धार्मिकः). —ᶜ) K1.2.4 D3 चक्रमीति; Dc1 चंक्रामति; D6 चक्रमेति; M1.2 चक्रवर्ती (for चङ्क्रमीति). —ᵈ) Ś1 दिग्वासो.

19 G3 om. 19 (cf. v. l. 16). —ᵃ) K2 त्वं; B1 (marg. as in text) तद् (for तं). K1 राज्यं (for याज्यं). K2 त्वा (for त्वां). —ᶜ) K2.4 D1 प्रसन्नं. K1.2 M त्वा (for त्वां). B1.2.5 D (except D1) महातेजाः (for °राज).

20 G3 om. 20ᵃ (cf. v. l. 16). K2 मरुत्त; K4 D1 मरुत; D3 मरुत. —ᵃ) Dc1 स- (for सं-). K8 ह; D3 हो (for ऽहं). — G3 reads 20ᵇᶜᵈ after 13ᵃ. —ᶜ) B2 पश्यामि. B1–4 Dc1 कुत्र; B5 D2–4 क्व च (for क्व नु). —ᵈ) K8 वद (for शंस). T त्वं (for मे). G3 वचो मे वदतः शृणु.

21 ᵃ) K2.4 B1.2 D1 तस्मिन्; T G3 तत्र (for तस्मै). K1 D3 वर्तेय; D1 वार्तेयं. —ᵇ) K4 Dc1 D3 M4 मा (for मां). M1.2 कथं मां सोपि याजयेत्. —ᶜ) Ś1 K1 [ऽ]स्मि; K2–5 D1 G1 M1.2 हि; T G2.3 M3.4 [ऽ]पि (for च). D5.6 G3 [अ]हं (for [अ]पि). —ᵈ) D5.6 नापि (for नाहं). K1 उद्वहे (for उत्सहे). B6 जीवितुं नाहमुत्सहे.

22 ᵃ) Ś1 K1 B1–3 D2.4 -वेशं; K3 -वेगं; B4.5 -रूपं (for -वेषं). D6 बिभ्रन्. —ᵇ) K1 D6 चक्रमीति; G2 चक्रामति (for चङ्क्रमीति). B1.2.5 Dc1 D2–4 यथागतं; B1 दिशो दश (for यथासुखम्). M1.2 चक्रवर्ती महायशाः. —ᶜᵈ) Ś1 K3 Dn1 (marg. *sec. m.* as in text) D1 अभि- (for उप-). K2 B Dc1 Dn1 D2–6 वाराणस्यां महाराज (B3 °तेजा) दर्शनेप्सुर्महेश्वरं. — After 22, M3 ins.:

13* यत्र साक्षान्महादेवो देहान्ते परमेश्वरः ।
व्याचष्टे तारकज्ञानं जन्तूनामपवर्गदम् ।

23 D1 om. 23. —ᵃ) Ś1 K1 T2 तस्य; D6 तस्माद् (for तस्या). T उपागम्य (for समासाद्य). — D3 om. (hapl.) 23ᵇ–24ᶜ. —ᵇ) K2 पश्येथाः; B5 न्यवेथाः; G1 निषेधाः (sic); M1–3 न्यस्येथाः; M4 (*inf. lin.* as in text) न्यासस्यं (for न्यसेथाः). —ᶜ) G3 [अ]सौ (for यो). M4 (*inf. lin.* as in text) सं तु दृष्ट्वा पलायेत. —ᵈ) K2 B3.4 Dc1 Dn1 D1–6 transp. स and संवर्तः. D6 महीपतेः.

24 D3 om. 24ᵃᵇᶜ (cf. v. l. 23). D4 reads 24ᵃᵇ on marg. —ᵃ) B2 पृच्छतो (for पृष्ठतो). —ᶜ) D4 तस्याद्वारं (for तमेकान्ते). —ᵈ) K2.5 D4 T G M3.4 भज; M2 भजेद्.

तं दृष्ट्वा यो निवर्तेत स संवर्तो महीपते ॥ २३
तं पृष्ठतोऽनुगच्छेथा यत्र गच्छेत्स वीर्यवान् ।
तमेकान्ते समासाद्य प्राञ्जलिः शरणं व्रजेः ॥ २४
पृच्छेत्त्वां यदि केनाहं तवाख्यात इति स्म ह ।
ब्रूयास्त्वं नारदेनेति संतप्त इव शत्रुहन् ॥ २५
स चेत्त्वामनुयुञ्जीत ममाभिगमनेप्सया ।
शंसेथा वह्निमारूढं मामपि त्वमशङ्कया ॥ २६

व्यास उवाच ।

स तथेति प्रतिश्रुत्य पूजयित्वा च नारदम् ।
अभ्यनुज्ञाप्य राजर्षिर्ययौ वाराणसीं पुरीम् ॥ २७
तत्र गत्वा यथोक्तं स पुर्या द्वारे महायशाः ।
कुणपं स्थापयामास नारदस्य वचः स्मरन् ॥ २८
यौगपद्येन विप्रश्च स पुरीद्वारमाविशत् ।
ततः स कुणपं दृष्ट्वा सहसा स न्यवर्तत ॥ २९
स तं निवृत्तमालक्ष्य प्राञ्जलिः पृष्ठतोऽन्वगात् ।
आविविक्षितो महीपालः संवर्तमुपशिक्षितुम् ॥ ३०
स एनं विजने दृष्ट्वा पांसुभिः कर्दमेन च ।
श्लेष्मणा चापि राजानं ष्ठीवनैश्च समाकिरत् ॥ ३१
स तथा बाध्यमानोऽपि संवर्तेन महीपतिः ।
अन्वगादेव तमृषिं प्राञ्जलिः संप्रसादयन् ॥ ३२

---

25 $^{a}$) Ś1 K1.3 पृच्छेश्च; K5 पृच्छेथा; Dc1 पृच्छेस्त्वां; D6 T1 G3 M3.4 पृच्छेत्वा; T2 पृच्छेद्वा. — $^{b}$) D5.6 हे; G3 ह्य (for ह). — $^{c}$) D6 ब्रूयस्. G3 त्वां. — $^{d}$) G2 संतृप्त. K2 G इति (for इव). K4 B D T संवर्त कथितोऽसि मे.

26 $^{a}$) D3 न (for स). T1 G3 माम् (for त्वाम्). Ś1 K D1 [अ]भि- (for [अ]नु-). — $^{b}$) K1 समाभि-; K2 B5 G2 M3.4 समाधि-; B4 Dn1 D5.6 ममानु-; G1 मम वा (for ममाभि-). K3 Dc1 T G3 ममानुगमनेच्छया; B1.2 ममानुग्रहणेच्छया. — $^{c}$) K5 शंसस्व; B3.5 संशेथा (for शंसेथा). — $^{d}$) G1 M1.2 ममापि (for मामपि). B2 D3 त्वाम् (for त्वम्).

27 G1.2 om. the ref. — $^{a}$) K5 बाढेति (for तथेति). M4 प्रतिज्ञाय (for °श्रुत्य). — M4 om. 27$^{bc}$. — $^{b}$) D2.4 तु (for च). — $^{c}$) K1 अत्यनुज्ञाय; K2.4 D1 तमनुज्ञाय; K3 B2.3 Dc1 Dn1 D4 S (except G1; M4 om.) अभ्यनुज्ञाप्य. M1-3 देवर्षि (for राजर्षिर्).

28 $^{a}$) B2.4 यथोक्तः स; M1 यथाभीष्टं; M2 यथोद्दिष्टं (for यथोक्तं स). K2 च (for स). — $^{b}$) Ś1 K1.3 पुर-; K2 दुर्यो (for पुर्या). K1 महायशः.

29 $^{a}$) K1 partly damaged. K3 योगपद्येन. K1 G1.2 M स; K2.4.5 D1 तु (for च). — $^{b}$) K3 G3 पुर; T पुर्या (for पुरी-). Dn1 D5.6 G1.2 M पुरीद्वारं समा( Dn1 D5.6 °रमथा )विशत्. — $^{c}$) K2.4.5 D1 ततस्तु; B1-4 Dc1 स्थापितं (for ततः स). — D5 reads 29$^{d}$-31$^{a}$ on marg. — $^{d}$) D5.6 संवर्तः (for सहसा). Ś1 K2.3 B Dn1 संन्यवर्तत; M1-3.4 (*inf. lin.* as in text) स न्यवर्तयत् (for स न्यवर्तत).

30 D5 reads 30 on marg. — $^{a}$) Ś1 K1 च (for तं). S1 K1.3 तद्वृत्तम्; D3 निर्वृत्तम् (for निवृत्तम्). K2.4.5 B2-5 Dc1 D1-4 T G आलोक्य (for आलक्ष्य). — $^{b}$) K1.3 [ऽ]नुगात्; K5 B3.5 [ऽ]न्वयात् (for °गात्). — $^{c}$) K4 M1 आवीक्षितो; K5 Dc1 आवि°; D3 आविक्षिसो (for आविक्षितो). K1 M3 महीपाल (for °पालः). G3 अविक्षितो महाराज. — $^{d}$) K2 -लक्षितुं; K4.5 D1.2.4 -भिक्षितुं; B1.2 M3 -सेवितुं (for -शिक्षितुम्). D3 संवृत्तमूर्ध्निरक्षितुं (sic); T G संवर्तमभि-( G1.2 °मुप )वीक्षितुं.

31 D5 reads 31$^{a}$ on marg. — $^{a}$) B1-4 D (except D1) च तं; B5 तु तं (for एनं). K2 विजिने; M1.2 विजनं. — $^{b}$) K2.4.5 B (except B1) Dc1 D1.3-6 पांशुभिः. M1.2 पांसुभिः परिवारितं. — $^{c}$) B1.5 Dc1 Dn1 D4.6 G1.2 M3 चैव; M1.2 [अ]पि च (by transp.). — $^{d}$) K5 समवाकिरत्; D2.3.6 G3 च समाकिरन्. G1.2 अ( G2 च )न्यैश्च समवाकिरत्.

32 Ś1 K1 om. 32. — $^{a}$) K2 बाध्यमाने; K3 B5 तर्ज्यमानो; B3 मर्द्य° (sic); B4 D3 वध्य°; Dc1 Dn1 D2.4-6 M4 वध्य°; T G वर्त° (for बाध्य°). B4 Dc1 Dn1 D5.6 वै (for ऽपि). — $^{b}$) G1.2 संवर्त स (for °र्तेन). — $^{c}$) M3 तमृर्षि भूयः (hypermetric) (for तमृषिं). — $^{d}$) D3 स (for सं-).

33 $^{a}$) K2.4 B (except B3) Dc1 D1 T G3 M1.2.4 निवृत्तः; K5 Dn1 D2-6 निवर्त्य; M3 निर्वृत्तः (sic) (for निवृत्य). Dc1 संवृत्तः; D3 संवर्त्य. — $^{b}$) G1.3 स विश्रांत (for परिश्रान्त). — $^{c}$) Dc1 बहुशासकि (sic) (for °शासिनम्).

ततो निवृत्य संवर्तः परिश्रान्त उपाविशत् । शीतलच्छायमासाद्य न्यग्रोधं बहुशाखिनम् ॥ ३२

इति श्रीमहाभारते आश्वमेधिकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

# ७

संवर्त उवाच ।

कथमस्मि त्वया ज्ञातः केन वा कथितोऽस्मि ते ।
एतदाचक्ष्व मे तत्त्वमिच्छसे चेत्प्रियं मम ॥ १

सत्यं ते ब्रुवतः सर्वे संपत्स्यन्ते मनोरथाः ।
मिथ्या तु ब्रुवतो मूर्धा सप्तधा ते फलिष्यति ॥ २

मरुत्त उवाच ।

नारदेन भवान्मह्यमाख्यातो ह्यटता पथि ।
गुरुपुत्रो ममेति त्वं ततो मे प्रीतिरुत्तमा ॥ ३

संवर्त उवाच ।

सत्यमेतद्भवानाह स मां जानाति सत्रिणम् ।
कथयस्वैतदेकं मे क नु संप्रति नारदः ॥ ४

मरुत्त उवाच ।

भवन्तं कथयित्वा तु मम देवर्षिसत्तमः ।
ततो मामभ्यनुज्ञाय प्रविष्टो हव्यवाहनम् ॥ ५

---

Colophon. — *Adhy. name :* K2 संवर्तिकमरुत्तीयं; D4 संवर्तं; G3 मरुत्तसंवर्तसमागमः; M2 युधिष्ठिरनारदसंवादः. — *Adhy. no.* ( figures, words or both ): Ś1 7; K4 D1 G1.2 M 5; Dn1 D5.6 T2 G3 6 ( as in text ). — *Śloka no.:* Dn1 23.

## 7

1 K1 om. the ref. — a ) D5.6 इत्थं ( for अस्मि ). — c ) K2.4.5 S मे सत्यम्; B ( except B5 ) Dc1 मे सर्वम्; D5.6 तत्त्वेन ( for मे तत्त्वम् ). — d ) K1.2 B5 D2.4 ईप्ससे; T G3 M ईप्सितं ( for इच्छसे ). B6 Dn1 D2–6 मम प्रियं ( by transp. ); M4 मतो मम. K3.4 D1 ईप्ससे मत्प्रियं यदि; K5 ईप्सितं मे प्रियं प्रति; B1 मम चेदिच्छसि प्रियं; G1.2 जीवितं चेत्प्रियं तव.

2 a ) G3 मे ( for ते ). — b ) K2.4 संपश्यंते; B2 G1 °द्यंते; B4 Dc1 प्रपत्स्यंते ( for संप° ). — c ) K3.5 ते; Dn1 D5.6 च; G1.2 प्र- ( for तु ). B3 मूर्ध्ना. — d ) T G3 भविष्यति ( for फलि° ). K4 B D ( except D1 ) शतधा ते स्फुटिष्यति ( D6 स्फुटयिष्यति [ hypermetric ] ).

3 K4 D1 मरुंत; D3 मरुत. — b ) T [ s ]भ्यटता; G1.3 ह्यमतः ( for ह्यटता ). T1 भुवि ( for पथि ). — c ) B1.2 [ अ ]सि त्वं; G3 पितुस् ( for [ इ ]ति त्वं ). — K4 D1 प्रीतिसत्तमा.

4 Dc1 om. 4–5. — b ) K1 D6 M स मा; भवान् ( for स मां ). K4 संत्रिणं; T G सत्तम ( G1 ( for सत्रिणम् ). ❀ Cn : सत्रिणं, कपटवेषच्छन्नम् — c ) B5 G2 कथयतु ( for °यस्व ). D3.4 T ( for [ ए ]तद् ). K5 D2.5.6 G1 M1.4 एतन् ( for Ś1 K1 कथयाशु ( K1 °यस्ते ) तदेकं मे. — d ) ( for क ).

5 Dc1 om. 5 ( cf. v. l. 4 ). B5 om. th K4 D1 मरुंत; D3 मरुत. — a ) M एवं तां ( M4 त्वा ) ( for भवन्तं ). Ś1 K1–4 B4 D1–4 स च; M ( except M3 ) [ अ ]सौ ( for तु ). G1.2 स मे ( for मम ). D1 देवर्षिसत्तम. — c मनेत्यनु- ( for मामभ्यनु- ). D4 -ज्ञाप्य; M4 — d ) D3 प्रतिष्ठो; G1 प्राविशद् ( for प्रविष्टो ). प्रविष्टो जातवेध( B2 °साध्व )सं. — After 5, ins.:

14* योजनीयोऽहमधुना भवता मुनिसत्तम ।

6 K2 D1 om. the ref. — a ) Ś1 K3 [ ए ] [ ए ]वं ( for [ ए ]तत् ). — b ) B D ( except D1 प्रमुदं ( B1 Dc1 °शमं ) गतः. — c ) K4 B Dc1 D1

व्यास उवाच ।

[त्वा तु पार्थिवस्यैतत्संवर्तः परया मुदा ।
तावदहमप्येनं कुर्यामिति तदाब्रवीत् ॥ ६
तो मरुत्तमुन्मत्तो वाचा निर्भर्त्सयन्निव ।
क्षया ब्राह्मणो राजन्पुनः पुनरथाब्रवीत् ॥ ७
ातप्रधानेन मया स्वचित्तवशवर्तिना ।
त्वं विकृतरूपेण कथं याजितुमिच्छसि ॥ ८
ाता मम समर्थश्च वासवेन च सत्कृतः ।
र्तते याजने चैव तेन कर्माणि कारय ॥ ९
हं स्वं चैव याज्याश्च सर्वा गृह्याश्च देवताः ।
पूर्वजेन ममाक्षिप्तं शरीरं वर्जितं त्विदम् ॥ १०
नाहं तेनाननुज्ञातस्त्वामाविक्षित कर्हिचित् ।
याजयेयं कथंचिद्वै स हि पूज्यतमो मम ॥ ११
स त्वं बृहस्पतिं गच्छ तमनुज्ञाप्य चाव्रज ।
ततोऽहं याजयिष्ये त्वां यदि यष्टुमिहेच्छसि ॥ १२

मरुत्त उवाच ।

बृहस्पतिं गतः पूर्वमहं संवर्त तच्छृणु ।
न मां कामयते याज्यमसौ वासववारितः ॥ १३
अमरं याज्यमासाद्य मामृषे मा स्म मानुषम् ।
याजयेथा मरुत्तं त्वं मर्त्यधर्माणमातुरम् ॥ १४

---

2 G4 [ए]वं (for [ए]नं). D5.6 हताव इवमप्येवं (sic). — d) K3-5 B Dc1 D2.3 G1.2 M तम्; D4 द्; T G3 वचो (for तदा). D1 च मे मतिः (for दाब्रवीत्). Dn1 D5.6 शक्नुयामिति सोब्रवीत्. — After , Ś1 K1 ins. an addl. colophon [*Adhy. no.* : Ś1 8].

7 Before 7, Ś1 K1 ins. व्यासः. D5 reads 7 n marg. — a) K4 D1 मरुंतम्. K2.4.5 D1 संवर्तो for उन्मत्तो). G1.2 M3.4 ततः संवर्त उन्मत्तो. — c) Dc1 D5.6 रूक्षया. M बहुशो (for ब्राह्मणो). K1 ाज्ञा (for राजन्).

8 Before 8, K1 ins. व्यासः; M1 संवर्तः. — a) B4 (marg.) वाद-; T1 G2 M मद- (for वात-). Ś1 K1.3 वाद्प्रदानेन मया; T2 G3 पाद(G3 जीर्ण)यानेन तु या; G1 मधुप्रयोगदानेन. — b) T2 स्वावित्त-; G1 स-वत्त-. T1 G1 -परि- (for -वश-). — d) B4 Dn1 M4 ाजितुम्; D1 G3 याचितुम्. B5 इच्छसे; T G3 अर्हसि for इच्छसि).

9 a) G1.2 स शुद्धश् (for समर्थश्). Ś1 K1.3 हि for च). — b) Dn1 D5 च संगतः; D6 समागतः for च सत्कृतः). — c) Ś1 यजने. — d) D2 कर्मणि.

10 a) Ś1 T1 गृह्यं स्वं; K2 रहस्त्वं; K3 गृहस्वं (sic); D (except D1) गार्हस्थ्यं; T2 गृहस्थं; G1 गृहास्त्वं for गृहं स्वं). K2.4.5 D1 यज्ञाश्; K3 याज्यश्; B2-4 Dc1 T याज्यं (for याज्याश्). T2 तु (for च). — b) K2 सर्वयाद्याश्; K4 D1 सर्वा याज्याश्; K5 सर्वयज्ञाश्; T G3 सर्वगुह्याश्; G1 सर्वा ग्राह्याश्. M ाह्याथ (for गृह्याश्च). D3 सर्वगृह्यश्च देवता. — c) Dc1 पूर्वमेव; T G3 पूर्वं तेन (for पूर्वजेन). Ś1 K (except K3) B4 Dc1 D1-3 G3 समाक्षिप्तं (B4 Dc1 °प्ताः); B1.5 ममाक्षिप्ताः; T मम क्षिप्तं; G1 ममाक्षिप्तः. — d) K4 शरीरो. T1 वदतं; G3 वर्तितुं (for वर्जितं). B1.2 (marg. as in text) शरीरं त्वेकमुज्झितं.

11 a) Dc1 न हि; T सोहं (for नाहं). Ś1 K1.3 M4 [अ]ननुज्ञातं. — b) K4 आवक्षित; D5.6 आविक्षत; M आवीक्षित. — c) K3 याजयेय. K2 हि; B1 तु (for वै). — d) G1 वै; G2 M मे (for हि). D5.6 मतः; G1.2 M गुरुः (for मम).

12 b) M4 तद् (for तम्). B4 G2.3 वाव्रज; T मां व्रज; G1 चाग्रजं (for चाव्रज). — c) K4 [ऽ]हं; M4 त्वा (for त्वां). — d) G1.2 शुद्धो (for यदि). K5 यज्ञमिह; T G3 वा यष्टुम् (for यष्टुमिह).

13 D1 मरुंत; D3 मरुत. — b) K3 तं (for तत्). K4 D1 तत्संवर्त शृणुष्व मे; B3 संवर्त तच्छृणुष्व मां. — c) G1 M (except M1) मा (for मां). K2.5 रोचयते; B3 कार° (for काम°). — d) G1.2 मुनिर् (for असौ). K1.2 D1 -वारितः (K2 °तं); B1.2 (marg. as in text). 4.5 Dc1 Dn1 D2-6 -काम्यया (for -वारितः).

14 a) G3 वासवं (for अमरं). G1.2 अमरं वासवं याज्यं. — b) Ś1 K1.3 ह (for मा). K4 B D याजयिष्ये न मानुषं. — K4 D1 read $14^{cd}$ after 16*. — c) T G3 याजयैनं. K5 M1-3 च; G2.3 तं (for त्वं). — d) K5 G1.2 इत्युत (for आतुरम्). — B Dc1 Dn1 D2-6 subst. for $14^{cd}$ : K4 D1 ins. after $14^{ab}$ :

15* शक्रेण प्रतिषिद्धोऽहं मरुत्तं मा स्म याजयेः ।

स्पर्धते च मया विप्र सदा वै स हि पार्थिवः ।
एवमस्त्विति चाप्युक्तो भ्रात्रा ते बलवृत्रहा ॥ १५
स मामभिगतं प्रेम्णा याज्यवन्न बुभूषति ।
देवराजमुपाश्रित्य तद्विद्धि मुनिपुंगव ॥ १६
सोऽहमिच्छामि भवता सर्वस्वेनापि याजितुम् ।
कामये समतिक्रान्तुं वासवं त्वत्कृतैर्गुणैः ॥ १७
न हि मे वर्तते बुद्धिर्गन्तुं ब्रह्मन्बृहस्पतिम् ।
प्रत्याख्यातो हि तेनास्मि तथानपकृते सति ॥ १८

संवर्त उवाच ।

चिकीर्षसि यथाकामं सर्वमेतत्त्वयि ध्रुवम् ।
यदि सर्वानभिप्रायान्कर्तासि मम पार्थिव ॥ १९
याज्यमानं मया हि त्वां बृहस्पतिपुरंदरौ ।
द्विषेतां समभिक्रुद्धावेतदेकं समर्थय ॥ २०
स्थैर्यमत्र कथं ते स्यात्स त्वं निःसंशयं कुरु ।
कुपितस्त्वां न हीदानीं भस्म कुर्यां सबान्धवम् ॥ २१

मरुत्त उवाच ।

यावत्तपेत्सहस्रांशुस्तिष्ठेरंश्चापि पर्वताः ।
तावल्लोकान्न लभेयं त्यजेयं संगतं यदि ॥ २२
मा चापि शुभबुद्धित्वं लभेयमिह कर्हिचित् ।
सम्यग्ज्ञाने वैषये वा त्यजेयं संगतं यदि ॥ २३

C. 14. 17
B. 14. 7.
K. 14. 7.

[ K4 B6 Dn1 D1-3, 5, 6 याजय ( Dn1 °यः ; D5, 6 °ये ) ( for याजयेः ). ]
K4 D1 cont. :

16* न मां रोचयते राज्यमयाज्यं माममानुषम् ।

[ D1 याज्यम् ( for राज्यम् ). ]

15 [a] ) K2-4 B3-5 D ( except D2, 3 ) G1, 2 M हि ; B1, 2 स ( for च ). D5, 6 सदा ( for मया ). — [b] ) D5, 6 मया ( for सदा ). K6 च ; B3, 4 Dc1 Dn1 D5, 6 हि ; T G1, 3 M [ ए ]व ( for वै ). G2 स देवैः ( for सदा वै ). K4 B3-5 D स तु ; G2 M3, 4 स ह ; M1, 2 तव ( for स हि ). K2, 5 पार्थिव ; T2 G3 मानवः ; G2 वासवः ( for पार्थिवः ). B1, 2 सदा पार्थिवसत्तमः ( B2 °म ). — [c] ) G2 वा ( for च ). G1 [ उ ]क्ते. — [d] ) K1 त्राता ; G3 भ्राता. B1-4 Dc1 Dn1 बलसूदनः ; S बलवृत्रहा.

16 [a] ) K1 B1, 5 Dn1 D2, 3, 5, 6 T G अधिगतं ; B1 अपा° ; B2 उपा° ( for अभि° ). Dc1 प्रेक्ष्य ; D5, 6 प्रेम्ना ( sic ). — [b] ) K1, 2 याज्यत्वं न ; K4 B D °त्वेन ; G1 याज्यं तु न ; G2 याज्यवंतं ( for °वन्न ). Ś1 K1-3 Dc1 D1 बुभूषते ; D6 विभूषिते. — [c] ) K5 B5 Dn1 D2-6 G1, 2 M समाश्रित्य ; B3, 4 Dc1 अपा°. — [d] ) K2 मुनिपुंगवः.

17 [a] ) G2 गच्छामि ( for इ° ). — [b] ) K6 सर्वार्थेन. Ś1 K3 [ इ ]ह ( for [ अ ]पि ). K4 याचितुं. K1 सर्वसु ते हि योजितः ( corrupt ). — [c] ) Ś1 कामयेहमतिक्रांतुं ; K1, 2 B2, 3, 5 Dc1 °ये समति( K2 °प )क्रांतं ; K3 °योगमतिक्रांतुं ; S ( except T1 ) तं ( M2 कं ) कामयेतिक्रमितुं. — [d] ) K1 त्वद्गतैर् ; B3 दुष्कृतैर् ; B3 ( marg. ) तत्कृतैर्.

18 [a] ) D3, 8 बुद्धिं. — [b] ) K2, 4, 5 B1, 2 D1 G2 M1-3 ब्रह्मन्गंतुं ( by transp. ) ; M4 पुनर्गंतुं. — [c] ) K5 [ S ]स्मि ; D2-4 च ( for हि ). K5 [ अ ]पि ; T G3 [ अ ]हं ( for [ अ ]स्मि ). — [d] ) G2, 3 तदा ( for तथा ). K6 नापकृते ; G1 [ अ ]नुप° ( for [ अ ]नप° ).

19 K1 संवृत्त ( for संवर्त ). — [a] ) Ś1 B2-4 Dc1 चिकीर्षामि ; G1 °र्षति. — [b] ) D5, 6 सत्यम् ( for सर्वम् ). K6 अपि ध्रुवं ; T G3 ध्रुवं त्वयि ( by transp. ). — [d] ) B1 ( marg. as in text ) D1 ( before corr. ) कर्तास्मि. B6 यदि ( for मम ). D5, 6 मम कर्तासि पार्थिव.

20 [a] ) K2 वाच्यमानं ; M4 याज्यमानो. T1 G3 त्वा ( for त्वां ). — [c] ) K2 G3 द्विषतां ; K5 द्विष्येतां ; D3 द्वेषतां ; D4 द्वेषेतां ; M4 द्विषेथाः. Ś1 K3 समतिक्रुद्धाव्. — [d] ) Ś1 K1, 5 B1, 2 D1-4 G3 एवं ; K3 B4 T एव ( for एकं ). D5, 6 समर्थयेः ; T G3 विचिंतय ( T1 °ये ) ; G1, 2 समर्थये. M एतावेकः समर्पयेत् ( M4 °र्थये ).

21 [a] ) K2, 4, 5 D1 एतत ; M3, 4 मम ( for अत्र ). D ( except Dc1 D1 ) मे ; M4 तत् ( for ते ). K3 तेषां ( for ते स्यात् ). — [b] ) K1 B2, 4 D1 M सर्वं ; K2 सर्वा ; D4 सत्रं ( for स त्वं ). D2-6 निश्रेयसं ; T1 M4 निःसंशयः. Dc1 om. कुरु. — [c] ) Ś1 M3, 4 त्वा ( for त्वां ). K2 D3 मही ; B3 न तु ; D6 स हि. — [d] ) Ś1 K6 भस्मीकुर्यात् ; B1 D4 T G M3 भस्म कुर्यात्.

22 D6 om. the ref. D1 मरुत्त. — [a] ) Dn1 D5, 6 T2 तप्येत्. — [b] ) Dc1 देवताः ( for पर्वताः ). T तिष्ठे-

संवर्त उवाच ।
आविक्षित शुभा बुद्धिर्धीयतां तव कर्मसु ।
याजनं हि ममाप्येवं वर्तते त्वयि पार्थिव ॥ २४
संविधास्ये च ते राजन्नक्षयं द्रव्यमुत्तमम् ।
येन देवान्सगन्धर्वाञ्शक्रं चाभिभविष्यसि ॥ २५
न तु मे वर्तते बुद्धिर्धने याज्येषु वा पुनः ।
विप्रियं तु चिकीर्षामि भ्रातुश्चेन्द्रस्य चोभयोः ॥ २६
गमयिष्यामि चेन्द्रेण समतामपि ते ध्रुवम् ।
प्रियं च ते करिष्यामि सत्यमेतद्ब्रवीमि ते ॥ २७

इति श्रीमहाभारते आश्वमेधिकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

युर्वापि पर्वतान् (sic); G3 सिषेवे चात्र पर्वतान् (sic). — c) G1 त्वेकां (for लोकान्). Ś1 K1 M2 आलभेयं; K4.5 मा ल°; D2 G3 न लभ्येयं; G1 न लब्धेयं; M3 नालभेयं. — d) G1 संगतिं; G2 °रं. B (except B5) Dc1 त्यजेयं यदि संगतं.

23 D5.6 (hapl.) om. 23. — a) K3 मम; K4 D1 G2 मां च; B (except B5) G1.3 मा वा; T1 मया; T2 मा या; M4 मां वा (for मा च). T G शुद्ध- (G1 °द्धि-) (for शुभ-). D2 G2 -बुद्धिस्त्वं; M3 -बुद्धिं च; M1 -बुद्धिं त्वा. — b) T G3 द्विज (for इह). — T2 om. 23cd. — c) K2.4 D1 विषयेषु च ज्ञानेहं (K2 तथा ज्ञाने); K5 B Dc1 Dn1 D2-4 विषयैः संगतं चा(K5 मा; B1-4 Dc1 D3 वा)स्तु; T1 G1.2 M3 भोगेषु सम्यग्भोगांश्च; G3 भोगेष्वसम्यगज्ञानात्; M1.2 विषयेषु सम्यग्जानीहि (hypermetric); M3 भोगेषु सम्यग्ज्ञाने वा; M4 विषयेषु न जानीहि; Cv भोगेषु सम्यगज्ञानम्. — d) K3 संगते; G2 संगरं. K5 त्यजेयं यदि संगमं.

24 D6 om. the ref. — a) K4 M3 आवीक्षित; D3 आवि°. M4 (inf. lin. as in text) आविक्षितैतद्ध्रियतां. — b) Ś1 K3 धीयते; K1 ध्रीयते; K2 हीयते; K4 D1 यतते; B1.2.4.5 दीप्यतां; B4 (marg.) वर्धतां; Dn1 T1 वर्ततां; D2 M2 ध्रीयतां; D5.6 श्रूयतां; T2 G2.3 ध्रियतां; G1 प्रयतां (for धीयतां). B1.2 (marg. as in text) G2 M1-3 शुभ-; D1 वात-; T1 भुवि (for तव). M1 शुभकर्मसु याजनं. — c) K2 योजनं; M1 च (inf. lin. as in text) वितर्को (for याजनं). D1 च (for हि). K1 B3 समाप्येवं. K3 D6 [ए]व; M1.2 [ए]तद् (for [ए]वं). T G3 याजनं (T2 °जितुं) समवाप्ये(G3 °प्यै)वं. — d) K2.5 D1 तव; K4 B Dc1 Dn1 D2-6 हृदि (for त्वयि).

25 a) B1-3.4 (marg.) Dc1 Dn1 अभिधास्ये च; T G3 संविधास्यामि. M2 राज्यम् (for राजन्). — b) Ś1 B3 D1 अक्षय्यं; G1 नक्षत्रं. — d) G1 चाधि- (for चाभि-). Dc1 D3 -भविष्यति. T1 G3 शक्रं वापि (G3 °भि-) गमिष्यसि; T2 शक्रं वातिक्रमि°.

26 b) Ś1 वने; Dn1 धनं; G1 नेयं; G3 मयि (for धने). B2 राज्ये च; B3 राज्येथ; B4 राज्येषु; T1 G2 याज्ये च; G3 वान्येषु (for याज्येषु). — c) M1-3 च (for तु). K4 B D करिष्यामि; G3 न कुर्यामि (for चिकीर्षामि). G1.2 धर्मं चिकीर्षे विप्रियं. — K1 B5 om. (hapl.) 26d–27c; Ś1 reads the same on marg. — d) M1-3 इंद्रस्य (for चेन्द्रस्य). T G3 चाभिभो (for चोभयोः).

27 K1 B5 om. 27abc (cf. v. l. 26); Ś1 reads the same on marg. D5.6 om. 27. — a) K2 स गमिष्यामि; M4 तत्करि° (for गमयि°). Dn1 D2-4 शक्रेण; T G3 चेंद्रस्य. M1.2 गमिष्यामि सहेंद्रेण. — c) K6 तु (for च). Ś1 K2-5 D1 चिकीर्षामि (for करिष्यामि). — d) K3 [अ]हं (for ते).

Colophon om. in D6. — *Adhy. name:* K2-5 B Dc1 Dn1 M3.4 संवर्त(Dc1 °र्तक)मरुत्तीयं (K5 °रुत्त्तीयं); M1.2 संवर्तमरुत्तसंवादः. — *Adhy. no.* (figures, words or both): Ś1 9; Dn1 T G1.3 7 (as in text); D4 G2 M 6. — *Śloka no.:* Dn1 27.

# ८

संवर्त उवाच ।

गिरेर्हिमवतः पृष्ठे मुञ्जवान्नाम पर्वतः ।
तप्यते यत्र भगवांस्तपो नित्यमुमापतिः ॥ १
वनस्पतीनां मूलेषु टङ्केषु शिखरेषु च ।
गुहासु शैलराजस्य यथाकामं यथासुखम् ॥ २
उमासहायो भगवान्यत्र नित्यं महेश्वरः ।
आस्ते शूली महातेजा नानाभूतगणावृतः ॥ ३
तत्र रुद्राश्च साध्याश्च विश्वेऽथ वसवस्तथा ।
यमश्च वरुणश्चैव कुबेरश्च सहानुगः ॥ ४
भूतानि च पिशाचाश्च नासत्यावश्विनावपि ।
गन्धर्वाप्सरसश्चैव यक्षा देवर्षयस्तथा ॥ ५
आदित्या मरुतश्चैव यातुधानाश्च सर्वशः ।
उपासन्ते महात्मानं बहुरूपमुमापतिम् ॥ ६
रमते भगवांस्तत्र कुबेरानुचरैः सह ।
विकृतैर्विकृताकारैः क्रीडद्भिः पृथिवीपते ।
श्रिया ज्वलन्दृश्यते वै बालादित्यसमद्युतिः ॥ ७
न रूपं दृश्यते तस्य संस्थानं वा कथंचन ।
निर्देष्टुं प्राणिभिः कैश्चित्प्राकृतैर्मांसलोचनैः ॥ ८
नोष्णं न शिशिरं तत्र न वायुर्न च भास्करः ।
न जरा क्षुत्पिपासे वा न मृत्युर्न भयं नृप ॥ ९
तस्य शैलस्य पार्श्वेषु सर्वेषु जयतां वर ।
धातवो जातरूपस्य रश्मयः सवितुर्यथा ॥ १०

C. 14. 19[illegible]
B. 14. 8.
K. 14. 8.

---

## 8

1 $D_{5,6}$ om. the ref. — $^{a}$) $B_{1,2,5}$ (marg. as in text) $Dc_1$ $D_{2-4}$ $T_1$ $G_{1,2}$ $M_4$ मेरोर् (*for* गिरेर्). — $^{c}$) $D_3$ तपते. $Dn_1$ T $G_3$ तत्र (for यत्र). — $^{d}$) $G_3$ आस्ते (for तपो).

2 $^{b}$) $K_4$ $D_3$ कंटके; $Dn_1$ $D_{5,6}$ T $G_2$ शृंगेषु; $D_1$ कंटकेषु (hypermetric); $G_1$ गृहेषु; $G_3$ भंगेषु; $M_3$ स्कंधेषु (for टङ्केषु). $K_4$ B D T $G_3$ विषमेषु (for शिखरेषु). — $^{c}$) $T_1$ शुभेषु (sic) (for गुहासु).

3 $^{a}$) $G_1$ -सखा यो (for -सहायो). — $^{b}$) $G_2$ तत्र (for यत्र). — $^{d}$) $K_5$ -शतैर्युतः; $B_3$ $Dc_1$ $G_{1,2}$ M -समावृतः; $D_1$ T -गणैर्वृतः.

4 $^{a}$) $K_1$ ततो; $B_{1,2}$ यत्र (for तत्र). $M_{1,2}$ विश्वे (for रुद्राश्). — $^{b}$) $M_{1,2}$ रुद्राश् (for विश्वे). $K_5$ स-; $B_{1,2}$ $D_{5,6}$ S (except $M_{3,4}$) च (for ऽथ). — $D_1$ reads $4^{d}$–$6^{a}$ twice. — $^{d}$) $K_4$ $D_1$ (both times) सहानुगैः; $D_{5,6}$ °यवान् (for °नुगः). $K_2$ कुबेरश्च महाभुजः.

5 For the repetition in $D_1$, cf. v. l. 4. — $^{a}$) $Dc_1$ om. the first च. $D_{5,6}$ विशेषाश् (for पिशाचाश्). — $^{b}$) $K_3$ $B_4$ T तथा (for अपि). $K_{2,4,5}$ $B_{1,2}$ $Dc_1$ $Dn_1$ $D_1$ (both times) $G_{1,2}$ M नासत्यावपि चाश्विनौ. — $^{d}$) $Ś_1$ $K_1$ यक्ष- (for यक्षा).

6 For the repetition in $D_1$, cf. v. l. 4. — $^{a}$) $K_1$ आदित्य-. $K_2$ मरुताश्. — $^{b}$) $G_3$ सहस्रशः (for च सर्वशः). — After $6^{ab}$, $M_3$ ins.:

17* ब्रह्मादयश्च मरुतो मुनयोऽध्यात्मचिन्तकाः ।

— $^{c}$) $K_{2,4,5}$ $D_1$ उमापतिं; B $Dn_1$ $D_2$ $T_1$ G $M_{3,4}$ उपासते; $D_3$ °सतो (for °सन्ते). — $^{d}$) $K_{2,4,5}$ $D_1$ उपासते (for उमापतिम्).

7 $^{b}$) $K_1$ $B_2$ $Dc_1$ $D_{3,4}$ कुबेरोनुचरैः सह. — $K_4$ $D_1$ om. $7^{ef}$. — $^{e}$) $K_2$ न दृश्येते (sic); $K_3$ मृपते वै (for दृश्यते वै). — $^{f}$) $B_5$ -प्रभः (for -द्युतिः).

8 $^{a}$) $K_2$ तद् (for न). $K_4$ $B_1$ (marg. as in text), 2 (marg.), 4, 5 D (except $D_1$) शक्यते; $K_5$ विद्यते (for दृश्यते). $M_{1,2}$ तत्र (for तस्य). — $^{b}$) B $Dc_1$ $Dn_1$ $D_{5,6}$ कदाचन (for कथं°). — $^{cd}$) $Ś_1$ $K_1$ निर्दोषं; $K_4$ $Dc_1$ निर्दिष्टं; $M_4$ न द्रष्टुं (for निर्देष्टुं). $G_1$ *transp.* प्राणिभिः and प्राकृतैः. $K_4$ $D_1$ केचित्. $D_4$ -भोजनैः (for -लोचनैः).

9 $^{a}$) $G_1$ नौष्ण्यं च (for नोष्णं न). $M_{1,2}$ शिशिरस्. — $^{b}$) $G_1$ वाति (for न च). — $^{c}$) $Dc_1$ $M_1$ क्षुत्पिपासा; $M_2$ °पासो. $K_4$ $D_1$ च; $D_2$ न (for वा). — $^{d}$) $Ś_1$ $K_1$ $B_4$ (marg.) $D_{2-4}$ च मृत्युर्; $D_6$ मृत्युर्वा (for मृत्युर्न).

रक्ष्यन्ते ते कुबेरस्य सहायैरुद्यतायुधैः ।
चिकीर्षद्भिः प्रियं राजन्कुबेरस्य महात्मनः ॥ ११
तस्मै भगवते कृत्वा नमः शर्वाय वेधसे ।
रुद्राय शितिकण्ठाय सुरूपाय सुवर्चसे ॥ १२
कपर्दिने करालाय हर्यक्ष्णे वरदाय च ।
त्र्यक्ष्णे पूष्णो दन्तभिदे वामनाय शिवाय च ॥ १३
याम्यायाव्यक्तकेशाय सद्वृत्ते शंकराय च ।
क्षेम्याय हरिनेत्राय स्थाणवे पुरुषाय च ॥ १४
हरिकेशाय मुण्डाय कृशायोत्तारणाय च ।
भास्कराय सुतीर्थाय देवदेवाय रंहसे ॥ १५
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ।
गिरिशाय प्रशान्ताय यतये चीरवाससे ॥ १६
बिल्वदण्डाय सिद्धाय सर्वदण्डधराय च ।
मृगव्याधाय महते धन्विनेऽथ भवाय च ॥ १७

---

10 [b]) Ś1 K1 समेषु; K2 राजंते (for सर्वेषु). — [c]) D1 धावतो (by metathesis) (for धातवो).

11 [a]) Ś1 K2 D6 रक्षंते; K5 रक्षते; M1. 2 रक्ष्यते. K2. 4. 5 D1 G1. 2 तु (for ते). G3 राक्षिष्यंते कुबेरस्य. — [cd]) M4 चिकीर्षुभिः. Ś1 K1. 3. 5 B5 D2–4 कुबे(K3 °वी)रस्य प्रियं राजन् (by transp.). K4 D1 वित्तेशस्य चिकीर्षद्भिः प्रियं राजन्महात्मनः. — After 11, S ins.:

18* तत्र गत्वा त्वमन्वास्य महायोगेश्वरं शिवम् ।
कुरु प्रणामं राजर्षे भक्त्या परमया युतः ।
[(L. 1) T G3 अन्वास्त.]

12 [a]) K4 तस्मिन् (for तस्मै). — [b]) K1 B6 मनः (for नमः). K2. 4 B (except B2) D2. 3. 6 सर्वाय (for शर्वाय). — After 12[ab], T G ins.:

19* एभिस्त्वं नामभिर्देवं सर्वविद्याधिपं स्तुहि ।
[G1 सर्वविद्याधरं.]

— [c]) K4 D1 सित-; K5 [अ]सित-; D5 शित- (for शिति-). — [d]) Ś1 D3 स्व(D3 स)रूपाय; K4 B1–4 Dc1 Dn1 D4–6 M3 पुरुषाय; M1. 2 विरूपाय (for सुरू°).

13 D4 om. 13. — [a]) K4 D1 कपालाय; B1 (marg. as in text) Dc1 कपादाय; T G1. 2 M4 कपाळाय (for करालाय). — [b]) K1. 5 D2. 3 हर्यक्षे; M4 अर्यक्ष्णे; Cv हर्यक्ष- (for हर्यक्ष्णे). B1. 2 (marg.) D5. 6 धनदाय (for वर°). — [c]) D2. 3 त्र्यक्ष-; D6 क्षक्ष्णे (for त्र्यक्ष्णे). K2 T G3 पूष्णो (G3 °ष्ण-) दंतभिदे तस्मै (K2 त्र्यक्षे); K4. 5 D1 पूष्णो दंतविनाशाय; G1 त्र्यक्ष्णे दंतभिदे पूष्णो. — [d]) K5 तामसाय; G1 damaged (for वामनाय).

14 K2 G1 om. (hapl.) 14[ab]. — [a]) K3 T2 व्यक्त- (for [अ]व्यक्त-). K3 B2. 5 (marg.) D (except D1) T2 -रूपाय (for -केशाय). — [b]) K4 तद्वृत्ते; K5 महते; B4 (marg.) सत्वते; D1 सवृत्ते (sic); D3 संहते (sic); D6 सद्वृत्ताय (hypermetric); M4 संविदे (for सद्वृत्ते). G3 शंकराय स्थिराय च. — D4 om. 14[c]–15[d]. K5 om. (hapl.) 14[c]–15[b]. — [c]) Ś1 K1. 3 काम्याय; K2 B1 Dc1 क्षेमाय; K4 D1 क्षताय (for क्षेम्याय). K4 B1. 4. 5 D (except D1; D4 om.) -केशाय (for -नेत्राय). — [d]) K1. 3 स्थानवे.

15 D4 om. 15; K5 om. 15[ab] (cf. v. l. 14). — [a]) B1 (marg. as in text). 2 (marg.). 5 D2. 3. 6 -नेत्राय (for -केशाय). K4 D1 मुंजाय; B2 (marg. as in text) मुक्ताय; D3 मुंडाय (sic) (for मुण्डाय). — [b]) Ś1 K1. 3 B5 कृषाय; Dc1 Dn1 D5. 6 क्रुद्धाय; G1. 2 क्रोधाय; M1–3 क्राथाय (sic); M4 क्रथाय (for कृशाय). K3 [उ]तुरणाय; K4 B (except B3) D1–3 S [उ]त्तर°. — [c]) K1 B6 D2 भावराय; K3 G भासु° (for भास्क°). Ś1 स्वतीर्थाय; T G3 च तीव्राय (for सुतीर्थाय). — After 15, K2. 4 B2–4 Dc1 D1 ins.:

20* बहुरूपाय शर्वाय प्रियाय प्रियवाससे ।
[K4 सर्वाय (for श°). — After the prior half, K4 D1 read 16[ab] (transp.).]

16 K5 Dc1 om. 16. K3 transp. 16 and 17. K4 D1 read 16[ab] (transp.) after the prior half of 20*. — [a]) K2 सुनेत्राय (for सुवक्त्राय). — D4 om. 16[c]–17[b]. — [c]) K1. 2. 4 D1. 3 S (except G1) गिरीशाय. — [d]) Ś1 K1. 2 Dn1 D3. 6 T2 G1. 3 M4 पतये (for य°). G3 शर- (for चीर-).

17 D4 om. 17[ab] (cf. v. l. 16). K3 transp. 16 and 17. — [a]) G2 काल- (for बिल्व-). G1 शिष्टाय (for सिद्धाय). — [c]) G1 गृहमेधाय महते. — [d]) Ś1 K1. 3 B (except B3) D2–4 G3 M3 च (for ऽथ). K3 B (except B1) Dc1 D2–4 भगाय; M3 [अ]भवाय. K4 D1 भार्गवाय च धन्विने; T1 G1. 2 M1. 2. 4 धन्विने भार्गवाय च. — After 17, K3. 5 ins. 21*.

वराय सौम्यवक्त्राय पशुहस्ताय वर्षिणे ।
हिरण्यबाहवे राजन्नुग्राय पतये दिशाम् ॥ १८
पशूनां पतये चैव भूतानां पतये तथा ।
वृषाय मातृभक्ताय सेनान्ये मध्यमाय च ॥ १९
स्रुवहस्ताय पतये धन्विने भार्गवाय च ।
अजाय कृष्णनेत्राय विरूपाक्षाय चैव ह ॥ २०
तीक्ष्णदंष्ट्राय तीक्ष्णाय वैश्वानरमुखाय च ।
महाद्युतयेऽनङ्गाय सर्वाङ्गाय प्रजावते ॥ २१
तथा शुक्राधिपतये पृथवे कृत्तिवाससे ।
कपालमालिने नित्यं सुवर्णमुकुटाय च ॥ २२
महादेवाय कृष्णाय त्र्यम्बकायानघाय च ।
क्रोधनाय नृशंसाय मृदवे बाहुशालिने ॥ २३

---

18 K3.5 D4 om. (hapl.) $18^{ab}$. — $^{a}$) K2.4 D1 नराय; B3 वराह-; T G1 पराय (for व°). B (except B3) D (D4 om.) सोम- (for सौम्य-). — $^{b}$) K4 श्रुतहस्ताय; B1.2.4 (marg.).5 Dn1 D2.3.5.6 सिद्ध( D5 °द्धि )मंत्राय; B1 (marg.).4 D1 श्रुवहस्ताय; B3 Dc1 S (except G1) स्रुव° (for पशु°). B1–4 M3 चर्षये; B5 Dc1 Dn1 D2.3.5.6 चक्षुषे; T2 G3 चर्विजे (for वर्षिणे). — $^{c}$) K5 -वाससे (for -बाहवे). — B1.2 D2–6 ins. after 18: Ś1 K1 after $18^{ab}$: K3.5 after 17: K4 D1 after 19:

21* लेलिहानाय गोत्राय सिद्धमन्त्राय वृष्णये ।

[ Ś1 (before corr.) K3 रेरिहानाय (for लेलि°). Ś1 K1.4.5 D1 गोप्त्रे च; K3 गोत्रे च; B1.2 गोप्त्राय; D5.6 गोप्ताय. K3 सर्व-; B1.2 रुद्र- (for सिद्ध-). K3.5 चर्षये; K4 D1 मालिने; B1.2 वृष्णवे (for वृष्णये). Ś1 K1 सिद्धमित्राय चर्षये (for the post. half). ]

19 G3 om. $19^{ab}$. — $^{b}$) K2 B5 D (except Dc1 D1) T G1.2 नमः (for तथा). — D4 om. $19^{cd}$. — $^{c}$) K2.4.5 D1 वृक्षाय; M1.2 यमाय (for वृषाय). K5 -रुक्षाय (sic); M1 -भक्षाय (for -भक्ताय). Ś1 K1.3 वृक्षै( Ś1 °कै )रावृतकायाय. — $^{d}$) T1 सेनान्यै. K5 चाव्ययाय (for मध्यमाय). — After 19, K4 D1 ins. 21*.

20 K4 B3 D1 om. (hapl.) $20^{ab}$. — $^{a}$) K2 शूल-; B1.2 D3 श्रुव- (for स्रुव-). K5 सर्वेषां; B1.4 यतये (for प°). S अभि( M °हि )वक्त्राय पतये. — $^{b}$) K5 देवानां पतये नमः; T G1.3 सर्वदेवमयाय च. — After $20^{ab}$, B2 ins. 22* and om. $20^{c}$–$21^{c}$. — $^{c}$) Ś1 K1 सिताय; K5 श्वेताय; B1 शिताय (sic); B5 D2.4 सिद्धाय (for अजाय). Dc1 भस्म- (for कृष्ण-). — $^{d}$) T G3 सहस्राक्षाय (for विरूपा°). K3 D2 च; B3.5 D3–6 T G3 M1–3 हि (for ह). K2.4.5 D1 विश्वरूपाय चैव हि.

21 B2 om. $21^{abc}$ (cf. v.l. 20). — $^{a}$) T कृष्ण- (for तीक्ष्ण-). T1 G3 दक्षाय; M1.2 कृष्णाय (for तीक्ष्णाय). Ś1 K1.3.5 तीक्ष्णात्त( Ś1 K1 °क्ष्णात्त . . . तीक्ष्णाय. — After $21^{ab}$, K2 reads $22^{a}$ and B5 reads $23^{cd}$. K2 om. $21^{c}$. B5 D2–4 om. $21^{cd}$. B4 Dc1 read $21^{c}$ and Dn1 D5.6 repeat it after 22. — $^{c}$) Ś1 K1.3 B4 (marg.) महाद्युते अनं( B4 [orig.] °ते तरं )गाय; K4 °मखमुखायाथ; K5 B3 Dc1 Dn1 (second time) M °द्युतेरनंगा( Dn1 °ता )य; D1 °देवाय सर्वाय; T G3 °द्युतेरनंगस्य; G1.2 °त्मने चानंगाय. — B4 Dc1 om. $21^{d}$. B1.2 read $21^{d}$ after $23^{b}$. — $^{d}$) Ś1 सर्वज्ञाय; T G3 सर्वकाय-; M1 सर्वांशाय (for सर्वाङ्गाय). Ś1 K1.3 M1.4 प्रजापते; K2.5 प्रभू( K5 °सू )तये; K4 D1 च भूतये; T G प्रमाथिने (for प्रजावते). B3 Dn1 D5.6 श( B3 स )र्वाय पतये दि( D5 वि )शां. — Dn1 D5.6 ins. after 21: B1.4 Dc1 D2.3 (B1 D2.3 repeating after 24) ins. after $21^{ab}$: B2 (repeating after 24) ins. after $20^{ab}$: B5 D4 after 24:

22* विलोहिताय दीप्ताय दीप्ताक्षाय महौजसे ।

22 B1.2.5 D4 read $22^{ab}$ twice. K2 reads $22^{a}$ after $21^{ab}$. — $^{a}$) T2 G3 शुभ्राधि-; G1 रुद्राधि- (for शुक्राधि-). B1.2 (both first time).3.4 (marg. as in text).5 (first time) Dc1 Dn1 D5.6 वसुरेतः सुवपुषे. — $^{b}$) K2 वृपये (sic); B1.2 (both first time) D2.3.4 (second time) पशवे; T G3 प्रभवे (for पृथवे). K4 D1 कृत्त- (for कृत्ति-). B1.2 (both second time) D4 (first time) अनंताय महाद्युते; G2 सर्वदेवमयाय च. — D4 om. $22^{cd}$. — $^{c}$) G3 -भूषणे (for -मालिने). B1.2.4 Dc1 Dn1 D5.6 G1 चैव (for नित्यं). D3 कपालमालिनि नित्ये. — $^{d}$) T -कटकाय; G M -मकुटाय. — After 22, B4 Dc1 read and Dn1 D5.6 repeat $21^{c}$.

23 K2 om. $23^{ab}$. B4 Dc1 Dn1 D5.6 om. $23^{a}$. — $^{b}$) K4 D1 सुखाय; K5 [अ]व्ययाय (for [अ]नघाय). — After $23^{b}$, B1.2 read $21^{d}$. D4 om. $23^{c}$–$24^{b}$. B5 (partly damaged) reads $23^{cd}$ after $21^{ab}$. — $^{c}$) K1.2.5 B3.4 D (D4 om.) G2.3 M1–3 [आ]नृशंसाय. — $^{d}$) T1 G1 M3.4 मृत्यवे; G3 मृडाय (for मृदवे).

दण्डिने तप्ततपसे तथैव क्रूरकर्मणे ।
सहस्रशिरसे चैव सहस्रचरणाय च ।
नमः स्वधास्वरूपाय बहुरूपाय दंष्ट्रिणे ॥ २४
पिनाकिनं महादेवं महायोगिनमव्ययम् ।
त्रिशूलपाणिं वरदं त्र्यम्बकं भुवनेश्वरम् ॥ २५
त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसम् ।
प्रभवं सर्वभूतानां धारणं धरणीधरम् ॥ २६

ईशानं शंकरं सर्वं शिवं विश्वेश्वरं भवम् ।
उमापतिं पशुपतिं विश्वरूपं महेश्वरम् ॥ २७
विरूपाक्षं दशभुजं तिष्यगोवृषभध्वजम् ।
उग्रं स्थाणुं शिवं घोरं शर्वं गौरीशमीश्वरम् ॥ २८
शितिकण्ठमजं शुक्रं पृथुं पृथुहरं हरम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ २९
प्रणम्य शिरसा देवमनङ्गाङ्गहरं हरम् ।

---

24 D4 om. $24^{ab}$ (cf. v. l. 23). — $^{a}$) Ś1 K1. 3. 5 D2. 3 मुंडिने (for दण्डिने). G2 दस- (for तप्त-). — $^{b}$) K1 T G3 कृत-; Dc1 [अ]द्भुत- (for क्रूर-). Ś1 K1 M2. 3 -कर्मिणे (for -कर्मणे). — $^{d}$) T G3 सहस्रकिरणाय च. — $^{e}$) Ś1 K1 T1 तथा स्व-; K2-5 तथा सु-; G3 तस्मै सु- (for स्वधास्व-). G1. 2 M विरूपाय सुरूपाय. — $^{f}$) G1. 2 M महा- (for बहु-). — After 24, B1. 2 D2. 3 repeat while B5 D4 ins. 22*.

25 $^{a}$) Ś1 K1 महाभोगं; K5 °भागं; B1-3 °त्मानं; M1. 2 °योगिं (for °देवं). — $^{b}$) G1 -भोगिनम् (for -योगि°). M1. 2 महादेवं तमीश्वरं. — $^{c}$) D (except D1) -हस्तं (for -पाणिं). — $^{d}$) Ś1 (before corr. as in text) वरदेश्वरं; G3 परमे° (for भुवने°).

26 D4 om. $26^{ab}$. — $^{a}$) G1 त्रिणयनं. — $^{b}$) G2 त्रिकेशं च (for त्रिलोकेशं). — $^{c}$) G3 प्रसवं (for प्रभवं). K3 -देवानां (for -भूतानां). — $^{d}$) B5 कारणं; T G धातारं (for धारणं).

27 D4 om. $27^{ab}$. — $^{a}$) K2. 5 B3 Dc1 Dn1 D1. 5 S (except T1 G1) शर्वं (for सर्वं). — $^{b}$) K5 सर्वं (for शिवं). K5 G1 विभुं; B1. 2 हरं; T प्रभुं (for भवम्). — $^{d}$) G2 विरूपाक्षं (for विश्वरूपं).

28 D3 om. $28^{a}$–$29^{b}$. D1 om. (hapl.) 28. — $^{a}$) B4 Dc1 विरूपाख्यं. — $^{b}$) Ś1 B5 Dc1 तिव्यं; Dn1 D2. 4-6 दिव्य-; M4 त्र्यक्षं (for तिष्य-). B1-3. 4 (marg. as in text) तिर्थ्यगं गोवृषध्वजं; T G विर्घ्यदं (T1 त्रियक्षं; G1 विव्यदं; G2 वृषदं) गोवृषध्वजं; M1-3 तीव्रकोपं वृषध्वजं. — After $28^{ab}$, B ins.:

23* अनन्तं शाश्वतं देवं त्रिशृङ्गं वृषभेक्षणम् ।

— D4 om. $28^{cd}$. — $^{c}$) Ś1 K1 B1. 2 रुद्रं; K5 B3-5 Dc1 Dn1 D2. 5. 6 रौद्रं (for घोरं). — $^{d}$) Ś1 K1. 3 शंभुं; K2. 4 B2. 4. 5 T2 सर्वं (for शर्वं).

29 D3 om. $29^{ab}$ (cf. v. l. 28). — $^{a}$) D5. 6 शित- (for शिति-). B1-3 शुक्लं; G1. 2 M शुभ्रं (for शुक्रं). — $^{b}$) K2. 5 पृथं (for पृथुं). K3 धुरं; K4 B Dn1 D2. 4 वरं; K5 रिपुं; D1 धरं; D5. 6 चिरं; T परं; G3 विभुं (for हरम्). — Ś1 K1. 3 om. (hapl.) $29^{c}$–$30^{b}$. — $^{c}$) D1 विरूपाख्यं. — $^{d}$) K5 अरूपकं (for उमापतिम्).

30 Ś1 K1. 3 om. $30^{ab}$ (cf. v. l. 29). — $^{b}$) B2. 4 (marg.) Dc1 शिवं; T शुभं (for हरम्). G3 तं गंगागह्वरं हरं. — M3 om. $30^{cd}$. — $^{c}$) K3 D1 G1. 3 M4 यामि; B1. 2 गच्छ (for याहि). — $^{d}$) B2 चतुर्भुजं; T G3 °युगं (for °मुखम्). — T G M1. 2. 4 ins. after 30: M3 after $30^{ab}$:

24* विरोचमानं वपुषा दिव्याभरणभूषितम् ।
अनाद्यन्तमजं शंभुं सर्वव्यापिनमीश्वरम् ।
निस्त्रैगुण्यं निरुद्वेगं निर्मलं निधिमोजसाम् ।
प्रणम्य प्राञ्जलिः शर्वं प्रयामि शरणं हरम् ।
सामान्यं निश्चलं नित्यमकारणमलेपनम् । [5]
अध्यात्मवेदमासाद्य प्रयामि शरणं मुहुः ।
यस्य नित्यं विदुः स्थानं मोक्षमध्यात्मचिन्तकाः ।
योगिनस्तत्त्वमार्गस्थाः कैवल्यं पदमक्षरम् ।
यं विदुः सङ्गनिर्मुक्ताः सामान्यं समदर्शिनः ।
तं प्रपद्ये जगद्योनिमयोनिं निर्गुणात्मकम् । [10]
असृजद्यस्तु भूतादीन्सप्त लोकान्सनातनान् ।
स्थितः सत्योपरि स्थाणुस्तं प्रपद्ये सनातनम् ।
भक्तानां सुलभं तं हि दुर्लभं दूरपातिनाम् ।
अदूरस्थमजं देवं प्रकृतेः परतः स्थितम् ।
नमामि सर्वलोकस्थं व्रजामि शरणं शिवम् । [15]

[ (L. 2) M4 शुभ्रं (for शंभुं). — (L. 3) T2 G2. 3 निरुद्योगं (for °द्वेगं). M निर्ममं (for निर्मलं). — (L. 4) T सम्यक्; M3 सर्वं (for शर्वं). — (L. 5) M4 समानं. G2 निर्मलं; M1. 2 निश्वरं (for निश्चलं). G2 करणं चापलेपकं (sic); M अकर्मण्यमलेप(M4 °नुलोम)कं (for the post.

र्यो ग्रहाणामधिपो नक्षत्राणां च चन्द्रमाः ।
ः पितॄणामधिपः सरितामथ सागरः ॥ ६
म्भसां वरुणो राजा सत्त्वानां मित्र उच्यते ।
र्कोऽधिपतिरुष्णानां ज्योतिषामिन्दुरुच्यते ॥ ७
ग्निर्भूतपतिर्नित्यं ब्राह्मणानां बृहस्पतिः ।
ोषधीनां पतिः सोमो विष्णुर्बलवतां वरः ॥ ८
ष्टाधिराजो रूपाणां पशूनामीश्वरः शिवः ।
क्षिणानां तथा यज्ञो वेदानामृषयस्तथा ॥ ९
ृशामुदीची विप्राणां सोमो राजा प्रतापवान् ।
बेरः सर्वयक्षाणां देवतानां पुरंदरः ।
एष भूतादिकः सर्गः प्रजानां च प्रजापतिः ॥ १०
सर्वेषामेव भूतानामहं ब्रह्ममयो महान् ।
भूतं परतरं मत्तो विष्णोर्वापि न विद्यते ॥ ११
राजाधिराजः सर्वासां विष्णुर्ब्रह्ममयो महान् ।
ईश्वरं तं विजानीमः स विभुः स प्रजापतिः ॥ १२
नरकिंनरयक्षाणां गन्धर्वोरगरक्षसाम् ।
देवदानवनागानां सर्वेषामीश्वरो हि सः ॥ १३
भगदेवानुयातानां सर्वासां वामलोचना ।
माहेश्वरी महादेवी प्रोच्यते पार्वतीति या ॥ १४
उमां देवीं विजानीत नारीणामुत्तमां शुभाम् ।

---

' मरुतस् ( as in text ). T G1. 2 M लोकेस्मिन्नात्र ताय: ( = 3f ).

6 a ) T1 अथ वा ( for अधिपो ). K5 ग्रहाणामधिपः र्यो.

7 a ) K2 अंभसो. — b ) K1. 3 मरुतां ( for सत्त्वानां ). 2. 4 Dc1 इंद्र ( for मित्र ). Ś1 K2. 4. 5 B1. 3. 5 Dn1 1-6 मरुतामिंद्र उच्यते. — K2. 4 B3 D1 om. ( hapl. ) d. — d ) T G1. 2 M1-3 ज्येष्ठानाम्; M4 देवानाम् for ज्योतिषाम् ). B1. 2. 5 M1 मित्र; Dc1 T G M2-4 इ ( for इन्दुर् ).

8 a ) Dn1 D5. 6 औषधीनां. K5 सोमो नक्षत्रराजस्तु. . d ) K1 नरः: B2 पतिः ( for वरः ).

9 a ) B1 om.; D3 अष्टाधि- ( for त्वष्टाधि- ). Ś1 1. 3 B2 M1. 2 -राजा ( for -राजो ). Ś1 कारूणां; Dc1 4 रुद्राणां ( for रूपाणां ). — b ) K4 प्रभुः ( for शिवः ). 3 ( also as in text ) पशूनामीश्वरेश्वरः. — c ) K4. 5 D except Dc1 ) दीक्षितानां ( for दक्षिणानां ). K2. 4. 5 -3. 6 यथा ( for तथा ). K4 D1 दक्षो ( for यज्ञो ). . d ) Ś1 K1. 4 B Dc1 Dn1 D1 देवानाम् ( for वेदा° ). 1. 2. 4. 5 Dc1 M ऋषभस्; Dn1 मघवा ( for ऋषयस् ). 5 D2-4. 6 देवानामधिपस्तथा; T G वेदानामृच ( T1 G2 ं साम ) एव च.

10 b ) D3 सोम- ( for सोमो ). — c ) Ś1 K2. 3 D1 क्षानां; K1 -यज्ञानां; K4 -भूतानां; K5 B Dc1 Dn1 2-6 T2 G1 -रत्नानां; T1 -वृक्षाणां ( for -यक्षाणां ). . d ) K2. 3. 5 D1. 4 G2 देवानां च ( D1. 4 तु ); D2 दैवनां. — e ) K4. 5 B1. 5 Dn1 D1-6 T1 G2 भूताधिपः; B3. 4 Dc1 M3 °धिकः ( for °दिकः ). K4 सर्वः ( for सर्गः ). Ś1 K1. 3 एष भूतादिसंसर्गः. — f ) K4 B1 तु ( for च ).

11 b ) D5. 6 अयं ( for अहं ). G3 भवान् ( for महान् ). K4 D1 अहं ब्रह्म परंतपः. — D4 reads 11c–12b after 12. — c ) M4 भूतात् ( for भूतं ). T2 परतमं. K4 D1 विष्णोर् ( for मत्तो ). D3 न च भूतं परं मत्तो. — d ) B2 विष्णुर्. K2. 5 नान्यच्च ( for वापि न ). K4 D1 मत्तो नान्यच्च विद्यते.

12 For the sequence in D4, cf. v. l. 11. — a ) K1. 3 राजाधिराजा; K4 राजर्षिराजः. — c ) K4 D ईश्वरत्वं ( for °रं तं ). G2 तस्य ( for तं वि- ). K2. 4 D1 -जानीयात्; K5 °नीहि; B Dc1 Dn1 D2-4 °नीध्वं; D6 corrupt ( for -जानीमः ). — d ) B D ( except D1 ) कर्तारमकृतं हरिं ( D4 °रं ).

13 b ) B3 om. ( hapl. ) रग. K1. 2 B3 D3 -रक्षासां ( sic ). D6 गंधर्वो यक्षरक्षसां. — c ) B4 -यक्षाणां. — d ) B Dc1 हरिः ( for हि सः ).

14 a ) K3 भव-; K4 भगं; K5 भवो; G3 M3 भद्रा ( for भग- ). K1 भगदेवादयातानां; T G1. 2 भद्रा देवाभिजा( T2 °वा हि जा )तानां. — b ) Ś1 K1. 3 B ( except B5 ) T1 G1 सर्वेषां ( for सर्वासां ). K2 M3 -लोचनाः; D2. 3 -लोचनां. — c ) K2 सहेश्वरी; K4 D1 T G1 M3. 4 महे°. — d ) K5 प्रिया; B5 [इ]ति सा; Dn1 D2-6 हि सा; T1 G2 त्रिधा; T2 उमा; M4 हि या ( for [इ]ति या ).

15 a ) Ś1 T2 M1. 2 इमां ( for उमां ). K4 D1 विजानीयान्; Dn1 D2-5 °नीध्वं ( for °नीत ). D6 उमा

रतीनां वसुमत्यस्तु स्त्रीणामप्सरसस्तथा ॥ १५

धर्मकामाश्च राजानो ब्राह्मणा धर्मलक्षणाः ।
तस्माद्राजा द्विजातीनां प्रयतेतेह रक्षणे ॥ १६

राज्ञां हि विषये येषामवसीदन्ति साधवः ।
हीनास्ते स्वगुणैः सर्वैः प्रेत्यावाङ्मार्गगामिनः ॥ १७

राज्ञां तु विषये येषां साधवः परिरक्षिताः ।
तेऽस्मिँल्लोके प्रमोदन्ते प्रेत्य चानन्त्यमेव च ।
प्राप्नुवन्ति महात्मान इति वित्त द्विजर्षभाः ॥ १८

अत ऊर्ध्वं प्रवक्ष्यामि नियतं धर्मलक्षणम् ।
अहिंसालक्षणो धर्मो हिंसा चाधर्मलक्षणा ॥ १९

प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः ।
शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः ॥ २०

ज्योतिषां लक्षणं रूपमापश्च रसलक्षणाः ।
धरणी सर्वभूतानां पृथिवी गन्धलक्षणा ॥ २१

स्वरव्यञ्जनसंस्कारा भारती सत्यलक्षणा ।
मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वयात् ॥ २२

C. 14 B. 14 K. 14

---

देवी विजानीध्वं. — $^{b}$) K4 D1 भवां; K6 तु तां; D5 M4 शिवां (for शुभाम्). K1.3 नारीणामुत्तमं शुभं; D6 °मुत्तमा शुभा. — $^{c}$) D5.6 गतीनां; T G2 स° (for र°). K4 D1 वसुमंतस्; G1 °मत्यास्. K2 B3 च (for तु). Ś1 K1.3 रेवतीनां वसुमती (K3 °तीं). — $^{d}$) K4 अप्सरसं. D1 स्मृताः; M ततः (for तथा).

16 D4 om. $16^{ab}$. — $^{a}$) Ś1 D3 धर्मकामश्च; G1 वर्णक्रमश्च. B2–4 Dc1 तु (for च). K2 धर्मकामार्थ-राजानौ; G3 °कामौ च राजन्यो (sic). — $^{b}$) K1 Dc1 ब्रह्मणा. K2.4.5 D1 ब्रह्म- (for धर्म-). B Dc1 D2.3.5 -सेतवः; Dn1 -हेतवः; D6 -सेविनः (for -लक्षणाः). — $^{c}$) B4 ब्राह्मणानां (for द्विजाती°). — $^{d}$) Dc1 पूयते च; T2 प्रयते हि (for °तेत). K3 T1 हि; B1.2.5 Dc1 T2 G2 स्म; B4 [अ]स्य (for [इ]ह). G1 लक्षणं (for रक्षणे). Dn1 D2–6 G3 प्रयतेत्तस्य (G3 °देव) रक्षणे.

17 $^{a}$) Ś1 K1 D3 राज्ञा; G1 राज्ञश्च. T G1 च (for हि). K4 D1 स्यातुम्; G3 तेषाम् (for येषाम्). — $^{b}$) Ś1 D3 अवसीधंति; K4.5 D1 अनुसीदंति; T1 अविर्निदंति. — $^{c}$) M हतास् (for हीनास्). M1.2 तैः (for ते). K1 Dc1 स्म (for स्व-). K2 -गणैः (for -गुणैः). K1.2.5 M1 सर्वे. — $^{d}$) Ś1 K1.3.4 प्रीत्य (for प्रेत्य). K5 B4 Dn1 D2–6 चोन्मार्ग- (for [अ]वाङ्मार्ग-). D5.6 -वर्तिनः; G2 -कामिनः (for -गामिनः).

18 $^{a}$) K4 B3 Dn1 D2–6 G2.3 हि (for तु). — $^{b}$) D4 G3 -कीर्तिताः (for -रक्षिताः). — $^{c}$) K1–3 तास्मिँल्; T2 G1.3 अस्मिँल् (for तेऽस्मिँल्). — $^{d}$) K2.4 D1 G3 एव हि (K2 ह); K5 T2 अश्नुते (for एव च). Ś1 K1.3 प्रेत्य चानुत्तमं सुखं; B Dc1 Dn1 D2–4 सुखं प्रेत्य च (B1–4 च प्रेत्य) भुंजते; D5.6 प्रेत्य भोगं च भुंज(D6 °ज्य)ते. — Ś1 K1.3 om. $18^{ef}$. — $^{e}$) K3 महाराज (for °त्मान). — $^{f}$) G3 वेत्थ (for वित्त). — K5 B3–5 Dc1 ins. an addl. colophon after 18; Ś1 K1.3 ins. it after $18^{d}$ [ *Sub-parvan :* K3 अनुगीता. — *Adhy. name :* B3–5 Dc1 गुरुशिष्यसंवादः. — *Adhy. no.* : Ś1 46 ].

19 Before 19, Ś1 K1.3.5 B3–5 Dc1 ins. ब्रह्मोवाच; K2 ब्राह्मण उवाच. — $^{b}$) M1.2 विधिवद्; M3.4 विविधं (for नियतं). K3 ब्रह्म- (for धर्म-). — $^{c}$) Cf. 1. 11. $12^{a}$. K5 D (except D1) परमो (for -लक्षणो). — $^{d}$) Ś1 धर्मवि-; K4 वाधर्म- (for चा°). K2 Dc1 D3 -लक्षणं; K3 M1 -लक्षणः. — After 19, G1 reads $21^{c}$–$22^{b}$.

20 K3 D3 om. (hapl.) 20. B1.2 om. (hapl.) $20^{a}$–$21^{b}$. G3 om. (hapl.) $20^{a}$–$22^{b}$. — $^{b}$) Ś1 मानुषाः (for मनुष्याः). T2 G1.2 धर्म- (for कर्म-). — $^{d}$) D6 तत्; T1 सं- (for तु).

21 B1.2 om. $21^{ab}$; G3 om. 21 (for all, cf. v. l. 20). — $^{a}$) K3 ज्योतिषो (for °षां). Ś1 K1 तेजो; K3 नेत्रं (for रूपम्). — $^{b}$) T2 तु (for च). D3 -लक्षणं; T1 -लक्षणः. Ś1 K1.3 रूपश्च (Ś1 °पं च) रस-लक्षणः (Ś1 °णं) (sic). — G1 reads $21^{c}$–$22^{b}$ after 19. — $^{c}$) Ś1 K1.5 B1–4 Dc1 धारणी; K4 D1 धरिणी; B5 Dn1 D4 धारिणी (for धरणी). — $^{d}$) B1.2 धरणी (for पृथिवी).

22 For the sequence in G1, cf. v. l. 21. G3 om. $22^{ab}$ (cf. v. l. 20). D6 om. (hapl.) $22^{ab}$. — $^{b}$) B1.3–5 Dc1 Dn1 D2–5 शब्द-; B2 वाक्य- (for सत्य-). — $^{d}$) M1 lacuna; M2 corrupt. B5 Dn1 D2–6 चिंतोक्ता; Cv तथोक्ता (as in text). K4 D1 बुद्धिरत्र या; K5 B4 Dc1 M3.4 Cv °रन्वया; B (B4 marg.) Dn1 D2–6 °लक्षणा; G3 °निर्णया (for °रन्वयात्). K2 बुद्धिरध्यवसायिनी.

नसा चिन्तयानोऽर्थान्बुद्ध्या चैव व्यवस्यति ।
द्धिर्हि व्यवसायेन लक्ष्यते नात्र संशयः ॥ २३
क्षणं महतो ध्यानमव्यक्तं साधुलक्षणम् ।
वृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ॥ २४
स्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ।
न्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम् ।
तीतोऽद्वंद्वमभ्येति तमोमृत्युजरातिगम् ॥ २५
र्मलक्षणसंयुक्तमुक्तं वो विधिवन्मया ।
गुणानां ग्रहणं सम्यग्वक्ष्याम्यहमतः परम् ॥ २६
पार्थिवो यस्तु गन्धो वै घ्राणेनेह स गृह्यते ।
घ्राणस्थश्च तथा वायुर्गन्धज्ञाने विधीयते ॥ २७
अपां धातुरसो नित्यं जिह्वया स तु गृह्यते ।
जिह्वास्थश्च तथा सोमो रसज्ञाने विधीयते ॥ २८
ज्योतिषश्च गुणो रूपं चक्षुषा तच्च गृह्यते ।
चक्षुःस्थश्च तथादित्यो रूपज्ञाने विधीयते ॥ २९
वायव्यस्तु तथा स्पर्शस्त्वचा प्रज्ञायते च सः ।

---

23 [a]) B2 (marg.). 3. 5 Dn1 D2–6 T2 चिंतितान् (for न्तयानो). K2. 4 [ऽ]थ (for ऽर्थान्). K1 मनसा तयानोक्ता; B1. 2. 4 Dc1 °सा चिंतितं वे( B4 Dc1 ान्वे )त्ति. — [b]) Ś1 K1. 4 [ए]वेह; K3. 6 [ए]वाथ; B n1 D2–6 चेह; Dc1 वेत्तुं (for चैव). T1 व्यवस्यते. — [c]) D6 च (for हि). — [d]) Ś1 K1. 3 G3 लभ्यते; 4 Dc1 D4 लक्षते.

24 [a]) Ś1 B Dn1 D2–4. 6 T1 मनसो (for महतो). — [b]) D3 असक्तं (for अव्यक्तं). G3 सौम्य- (for साधु-). — K2. 5 B3 G3 om. (hapl.) 24[cd]. K3 reads 24[cd] without var.) thrice. — [d]) K4 D1 सज्ज्ञान-; D5. 6 वृत्ति- (for संन्यास-).

25 [a]) D3 ग्लानं (for ज्ञानं). — [b]) G3 संवसेद् or संन्य°). — [c]) Ś1 K1. 3. 5 संन्यसन्; K2 संन्यस्य; 4 D1 G3 संन्यास-; G1. 2 संन्यासे; M संन्यासाज् or संन्यासी). K1 M2 -संयुक्तं; B1. 2 -संपन्नः. — [e]) corrupt. Ś1 K1. 3 B3 अतीते; K2 B1. 2. 5 Dc1 ीत्य; G M3 अतीत-; M1. 2. 4 अतीव (for अतीतो). G1. 2 M1. 2 अत्येति (for अभ्येति). K4 अतीत्योर्ध्वोर्ध्व-येति (sic); T2 अतीतद्वंद्वमप्येति. — [f]) Ś1 K1 ोमृत्यु-; K4 D1 ततो मृत्यु-; M4 तमोमृत्योर्. K2. 4 D (except D5) -जरातिगः; G2 °दिकं.

26 [a]) K4 D1 धर्मलक्षणमित्येतद्; K6 °मित्युक्तम्. [b]) K4 D1 उक्तेश्च; K5 एतद्वो; D3 उक्तं वा (for क वो). G2. 3 तथा (for मया). — [c]) Ś1 K1. 3 रणं (for ग्रहणं). — [d]) K5 वदामि; G1. 2 M3. 4 ये तु (for वक्ष्यामि). G3 M1. 2 वक्ष्ये तु मह( M1 °क्ष्ये म )तः परं.

27 [b]) K4 D1 G2 [ए]व स; K5 B1. 2. 5 Dn1 D3. हि स; Dc1 ह स; D4 सम-; T2 G3 सह (for ]ह स). D2 घ्राणेन हि स दृश्यते; T1 G1 °न सह ह्यते. — [c]) K1 प्राणस्थश्; D1 घ्राणतश्. T2 G2 M तदा; G3 सदा (for तथा). — [d]) Ś1 K3 -स्थाने (for -ज्ञाने). G3 गंधज्ञानेन धीयते. — After 27, D1 reads 32.

28 Ś1 K1 om. (hapl.) 28. K3 om. (hapl.) 28–29. G2 repeats 28[ab] (without var.) after 30. — [a]) B Dn1 D2. 3 धातू रसो; G3 धारो रसो; Madras ed. अबाश्रयो (for धातुरसो). — [b]) K2. 5 गृह्यते रसः; K4 D1 G3 गृह्यते च सः ( G3 स तु ); B2 स च गृह्यते; B1 संप्रगृ°. — [c]) T1 G1 M तु (for च). G3 ततः; M1. 2. 4 तदा; M3 सदा (for तथा). K4 D1 जिह्वा-स्तब्धस्तदा सोमो; G2 °रसस्ततः सोमो. — [d]) G3 -स्थाने (for -ज्ञाने).

29 K3 om. 29 (cf. v. l. 28). M1. 2 om. (hapl.) 29. — [a]) T G1. 2 तेजसस्; M3. 4 चक्षुषस् (for ज्योतिषश्). Ś1 K1. 4. 5 B1. 2 D1 T G1. 2 M3. 4 तु (for च). Dc1 गुणे. — [b]) T प्र- (for च). — [c]) Some MSS. चक्षुस्थश्; K5 T G चक्षुषश्; M3 चक्षु*श्. K4 D1. 6 T2 G2 तदा; B3–5 Dc1 Dn1 D2–5 T1 G3 सदा (for तदा). B1. 2 सूर्यो; D3 नित्यो (for [आ]दित्यो). — [d]) K4 B4 D1 रूपं (for रूप-). G3 रूपज्ञानेन धीयते.

30 Ś1 K4 om. (hapl.) 30. — [a]) D1 S (except G3) च (for तु). K1. 3 B3–5 Dc1 Dn1 D2–6 सदा; K2 महा-; B1. 2 गुणः; D1 G2 तदा (for तथा). — [b]) K3 वि- (for प्र-). Dc1 om. सः. T1 स ह; G1. 2 M स च; G3 सदा (for च सः). D1 ज्ञायते स तु वै त्वचा; D5. 6 गृह्यते हि त्वचा द्विजाः. — [c]) T2 त्वचश्चैव; G1 त्वक्स्थ एव; M1 त्वक्संस्थश्च (for त्वक्स्थश्चैव). K2 B Dc1 Dn1 D2–6 T1 G2 सदा; G3 M2–4 तदा (for तथा). — [d]) B D (except D1) स्पर्शने स; T2 G3 °स्थाने (for °ज्ञाने). K3 स्पर्शज्ञानेन विद्यते. — After 30, G2 repeats 28[ab].

त्वक्स्थश्चैव तथा वायुः स्पर्शज्ञाने विधीयते ॥ ३०
आकाशस्य गुणो घोषः श्रोत्रेण स तु गृह्यते ।
श्रोत्रस्थाश्च दिशः सर्वाः शब्दज्ञाने प्रकीर्तिताः ॥ ३१
मनसस्तु गुणश्चिन्ता प्रज्ञया स तु गृह्यते ।
हृदिस्थचेतनाधातुर्मनोज्ञाने विधीयते ॥ ३२
बुद्धिरध्यवसायेन ध्यानेन च महांस्तथा ।
निश्चित्य ग्रहणं नित्यमव्यक्तं नात्र संशयः ॥ ३३
अलिङ्गग्रहणो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ।
तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ॥ ३४
अव्यक्तं क्षेत्रमुद्दिष्टं गुणानां प्रभवाप्ययम् ।
सदा पश्याम्यहं लीनं विजानामि शृणोमि च ॥ ३५
पुरुषस्तद्विजानीते तस्मात्क्षेत्रज्ञ उच्यते ।
गुणवृत्तं तथा कृत्स्नं क्षेत्रज्ञः परिपश्यति ॥ ३६
आदिमध्यावसानान्तं सृज्यमानमचेतनम् ।
न गुणा विदुरात्मानं सृज्यमानं पुनः पुनः ॥ ३७
न सत्यं वेद वै कश्चित्क्षेत्रज्ञस्त्वेव विन्दति ।
गुणानां गुणभूतानां यत्परं परतो महत् ॥ ३८
तस्माद्गुणांश्च तत्त्वं च परित्यज्येह तत्त्ववित् ।

31 G2 om. $31^{ab}$. — [a]) D5. 6 T2 शब्दः; G1 व्योम; Bom. ed. होष (for घोषः). — [b]) K2–4 D1 तु स (by transp.); B3. 4 स च; B5 Dc1 Dn1 D2–6 च स. G3 स तु श्रोत्रेण गृह्यते. — [c]) K4 D1. 5 श्रोत्रस्थश्. K2 दिशा. — [d]) T1 ॰ज्ञानेन; G3 ॰स्थाने प्र॰ (for ॰ज्ञाने प्र॰). K1. 3 प्रकीर्तितः; K4 D1. 5. 6 विधीयते; G2 प्रवर्तिताः.

32 D1 reads 32 after 27. — [a]) K1–4 B D (except D1) T2 च (for तु). — [b]) K2–4 Dc1 D1. 4–6 T2 M3. 4 सा (for स). K2. 4 Dc1 [अ]नु॰ (for तु). K2. 4 ॰दृश्यते (for गृह्यते). G3 प्रज्ञायाः साधु गृह्यते. — [c]) Ś1 K1 हृदिस्थश्. Dc1 Dn1 D6 T1 ॰चेतनो (for ॰चेतना॰). — [d]) G1 मनोज्ञानं.

33 D1 transp. $33^{ab}$ and $33^{cd}$. — [a]) K5 बुद्धेर्. Ś1 K1. 3 अध्यवसायाय; B1. 2 अव्यवसायेन; D2. 3 अध्यवसानेन. — [b]) Ś1 K1. 3 ध्यानाय; B Dc1 Dn1 D2–4. 5 (*sup. lin.* as in text) ज्ञानेन (for ध्या॰). K3 मनस् (for महांस्). — [c]) K4 D1 नित्यस्य; M3 निश्चित्य. Ś1 K1. 3 ग्रहणे; Dn1 T1 ॰णान्. B3 Dn1 D2–6 व्यक्तम् (for नित्यम्).

34 [a]) K2 नित्ये; K4 B3. 4 D1. 6 S (except T1) नित्यं. K3 अलिंगग्रहणे नित्याः. — [c]) Ś1 K1. 3 अव्यक्तलिंगः क्षेत्रज्ञः; K5 तस्मादलिंगं क्षेत्रज्ञं. — [d]) Ś1 K1. 3 केवलो; K2. 4 B2 D1 G3 केवल॰. K2. 5 Dc1 D6 M3. 4 ॰लक्षणं.

35 [a]) K1–3 अव्यक्त॰; G1 अव्ययं. K4 क्षेत्रवुद्दिष्टं; B3 D2–6 ॰लिंगस्थं. — [b]) K4 B4 D2 T2 प्रभवाप्ययं (B4 ॰यः); Dc1 D3 G3 ॰वोव्ययं (Dc1 ॰यः). — [c]) G2 तदा (for सदा). D6 ज्ञानं; G2 लिंगं; Bom. ed. लीनो (for लीनं). — [d]) Dc1 वः (for च).

36 [a]) Ś1 K1. 2. 5 तं; G1 तु (for तद्). ❀ पुरुषो नारायणः तदव्यक्ततत्त्वं विजानीते तस्मात्क्षेत्रज्ञ उच्यते इति योजना । ❀ — [c]) K2 D1 गुणावृत्तं; G2 गुणवृत्तिं. B1. 2 सदा; Dc1 D4 यथा; D5. 6 जडं; G2 तदा (for तथा). K4 कृष्णं; D2–4 वृत्तं; D5 क्षेत्रं; D6 क्षेत्रे (for कृत्स्नं). B4 (marg. as in text) शृणु वृत्तं यथा कृत्स्नं. — [d]) B2 Dc1 Dn1 क्षेत्रज्ञं.

37 [a]) K1. 3. 4 Dc1 आदिमध्यावसानांते; K2 B3–5 ॰नं तं; T1 G1 ॰नं तत्. — Ś1 K1. 3 om. (hapl.) $37^{bc}$. — [b]) K4 सचेतनं. — [c]) K4 D1 निर्गुणे; G1 M3 (*inf. lin.* as in text) सगुणा; G2 स गुणं. G3 अज्ञानं (for आत्मानं). — [d]) K3–5 D (except Dc1) सृज्यमानाः; B2 T G2. 3 ॰मानः. Dc1 om. one पुनः.

38 [a]) B3. 5 सतं; B4 च तं (for सत्यं). K1 विंदते; D6 विद्यते; T1 G1 वेदवित् (for वेद वै). Ś1 K3 Dn1 D2–5 न (K3 स) सतं (Ś1 सत्त्वं; K3 नित्यं) विंदते कश्चित्; K4 D1 न सत्यवेदितः कश्चित्; B1. 2 न च तं वेद कश्चित्तु; Dc1 न तं वेदयते कश्चित्; G3 न सत्यं वेत्ति वै किंचित्; Cv न सत्त्वं वेत्ति वै कश्चित्. — [b]) K4 D1 क्षेत्रज्ञे; G3 ॰ज्ञास्. K4 D1 स्वं च; B1. 2 त्वेष (for त्वेव). D4 पश्यति; T1 वेस्ति वै (sic); T2 G1. 2 M वेत्ति वै; G3 वेक्ष्यते (for विन्दति). — [d]) M1. 2 परः. Cv परं (as in text). Dn1 D2. 4–6 परमं; Cv परतो (as in text). K2 M2 महान्; Cv महत् (as in text). D3 परात्परतमं महत्.

39 [a]) K3. 4 गुणं. K2. 4 D1 सत्यं च; K5 B4 (marg. as in text). 5 सत्त्वं च; B1. 2 Dn1 D2–6 तत्त्वज्ञः (B1 D2. 3 ॰ज्ञ; Dn1 ॰ज्ञं); Dc1 सर्गं च; M स( M4 त )त्त्वांश्च (for तत्त्वं च). — [b]) K2 परिचिंतेत; K4 D1

क्षीणदोषो गुणान्हित्वा क्षेत्रज्ञं प्रविशत्यथ ॥ ३९
निर्द्वंद्वो निर्नमस्कारो निःस्वधाकार एव च ।
अचलश्चानिकेतश्च क्षेत्रज्ञः स परो विभुः ॥ ४०

इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

# ४४

ब्रह्मोवाच ।
यदादिमध्यपर्यन्तं ग्रहणोपायमेव च ।
नामलक्षणसंयुक्तं सर्वं वक्ष्यामि तत्त्वतः ॥ १
अहः पूर्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः ।
श्रविष्ठादीनि ऋक्षाणि ऋतवः शिशिरादयः ॥ २
भूमिरादिस्तु गन्धानां रसानामाप एव च ।
रूपाणां ज्योतिरादिस्तु स्पर्शादिर्वायुरुच्यते ।
शब्दस्यादिस्तथाकाशमेष भूतकृतो गुणः ॥ ३
अतः परं प्रवक्ष्यामि भूतानामादिमुत्तमम् ।
आदित्यो ज्योतिषामादिरग्निर्भूतादिरिष्यते ॥ ४
सावित्री सर्वविद्यानां देवतानां प्रजापतिः ।
ओंकारः सर्ववेदानां वचसां प्राण एव च ।

°षज्येत; G1 °त्यज्येत (for °त्यज्येह). Ś1 K1.3 B D (except D1) धर्मवित् (for तत्त्व°). — c) D6 क्षीणदोपे. B Dc1 Dn1 D2–4 गुणातीतः; D5.6 गुणीभूतः (for गुणान्हित्वा). — d) Dn1 D2–4.6 क्षेत्रज्ञः. K4 प्रविशंत्यथ; B1.2 °शत्युत; B3 T2 G2 °शद्यथा.

40 a) B5 निर्ममो; D2 निर्द्वंद्वं. K4 D1 निर्वषट्कारो. — b) Some MSS. निस्स्वधाकार; K2.4.5 B D G3 निःस्वाहाकार. — c) Ś1 अनलश्; K2 अवलश्; G3 असक्तश् (for अचलश्). — d) K3 G3 भुवि; D1.2 विदुः; T1 G1.2 विधिः (for विभुः).

Colophon om. in T G1.2 M1–3. — *Sub-parvan :* K2–4 अनुगीता. — *Adhy. name :* K2 B Dc1 Dn1 D1.4–6 गुरुशिष्यसंवादः; G3 क्षेत्रज्ञविवरणं. — *Adhy. no.* (figures, words or both) : Ś1 47; Dn1 G3 43 (as in text); D4 40; M4 (*inf. lin. sec. m.*) 44. — *Śloka no.* : Dn1 41.

## 44

1 T G1.2 M1–3 om. the ref. K4 M4 ब्राह्मण; D1 विप्र (for ब्रह्मा). — c) K3 ग्राम- (for नाम-).

2 a) M4 (*inf. lin.* as in text) ततः (for अहः). K5 सर्वं (for पूर्वं). — b) K3 D2.3 मासः. B3 शुक्ला- दयः; M4 चैत्रा° (for शुक्ला°). K4 D1 मासाः शुक्लादयस्तथा. — c) Ś1 B1–3.5 Dc1 Dn1 D2–6 श्रवणादीनि; K3 भविष्या°; K5 D4 (marg. *sec. m.*) अश्विन्या°; D1 अविष्ठा°; Cv श्रविष्ठा° (as in text). K1.2.5 B1.2.4 Dc1 D1.5.6 M4 (*inf. lin.*) Cv चर्क्षाणि; D2 वृक्षा°; D4 रुक्षा°; T G1.2 सर्वा°; G3 पक्षा°; M वर्षा° (for ऋक्षा°). K4 विष्ठ्यादीनि च पुष्याणि.

3 a) K2.4.5 B4 Dc1 D1 च (for तु). — c) Dc1 Dn1 D2–6 आदित्यः (for °स्तु). K2.4 D1 S रूपाणामादिरग्निस्तु (K2.4 D1 °रादित्यः). — d) K2.4.5 D (except Dc1) G3 स्पर्शानां (for स्पर्शादिर्). K4 एव च (for उच्यते). — M1–3 om. 3cf. — e) K4 शब्दश्च. G3 [अ]थ; M4 [आ]हुस् (for [आ]दिस्). — f) K5 corrupt. Dc1 G1 गुणाः. G3 एष भूतगुणः कृतः.

4 a) B1 च; B4.5 Dc1 T2 G3 M तु (for प्र-). — d) Ś1 K Dn1 D1–6 G2.3 M1 उच्यते (for इष्यते). Dc1 M2 अग्निर्भूताद(M2 °दि)रिच्यते (sic).

5 a) Dn1 -विधिनां (sic) (for -विद्यानां). — b) G1 प्रजानां च (for देवतानां). — c) K1.4 Dn1 D1.6 M2 -देवानां (for -वेदानां). — d) M4 (*inf. lin.*) उच्यते (for एव च). — e) K3 corrupt. Ś1 (marg.). तदादिर्; K2.4.5 B1–3.5 Dn1 D2–6 यदस्मिन्; G3 इत्य° (for यद्य°). G1 नियते. K5 लोके. — f) K3 D3 M1.2 सर्व- (for सर्वं). Ś1 K3.5 B1.3–5 Dc1 Dn1 D2–6 सावित्रिर्; K1.2 M2 °त्र; B2 °त्री; D1 °त्र्यम्.

6 a) G2 गायत्रं. K1 गायत्रीछंदमासाद्य. — T1 G

यद्यस्मिन्नियतं लोके सर्वं सावित्रमुच्यते ॥ ५
गायत्री छन्दसामादिः पशूनामज उच्यते ।
गावश्चतुष्पदामादिर्मनुष्याणां द्विजातयः ॥ ६
श्येनः पतत्रिणामादिर्यज्ञानां हुतमुत्तमम् ।
परिसर्पिणां तु सर्वेषां ज्येष्ठः सर्पो द्विजोत्तमाः ॥ ७
कृतमादिर्युगानां च सर्वेषां नात्र संशयः ।
हिरण्यं सर्वरत्नानामोषधीनां यवास्तथा ॥ ८
सर्वेषां भक्ष्यभोज्यानामन्नं परममुच्यते ।
द्रवाणां चैव सर्वेषां पेयानामापं उत्तमाः ॥ ९
स्थावराणां च भूतानां सर्वेषामविशेषतः ।
ब्रह्मक्षेत्रं सदा पुण्यं प्लक्षः प्रथमजः स्मृतः ॥ १०
अहं प्रजापतीनां च सर्वेषां नात्र संशयः ।
मम विष्णुरचिन्त्यात्मा स्वयंभूरिति स स्मृतः ॥ ११
पर्वतानां महामेरुः सर्वेषामग्रजः स्मृतः ।
दिशां च प्रदिशां चोर्ध्वा दिग्जाता प्रथमं तथा ॥ १२
तथा त्रिपथगा गङ्गा नदीनामग्रजा स्मृता ।

---

om. (hapl.) $6^{bc}$. — $^b$) K4 D1 एव च; B1.2 आदितः (for उच्यते). Ś1 B6 Dn1 D2-4.5 (marg. *sec. m.* as in text).6 T2 प्रजानां सर्ग उच्यते. — Dc1 repeats $6^d$–$7^a$ after कृतमादिर् (in $8^a$).

7 For the repetition in Dc1, cf. v. l. 6. — $^a$) K2.4.5 S च पक्षिणाम् (for पतत्रिणाम्). — $^b$) K5 घृतम्; T1 हितम् (for हुतम्). — $^c$) Hypermetric. K2.5 च (for तु). K4 सर्पाणां चैव सर्वेषां; B Dn1 D2-6 T G2 सरीसृपाणां स°; Dc1 (both times) सरीसर्पाणां स°; D1 परिसर्प्येसां चैव स°; G1 M4 प्र(M4 वि)सर्पिणां तु स°. — $^d$) K1 G1.3 ज्येष्ठाः; M श्रेष्ठः. G सर्वे; M4 सर्वो (for सर्पो). Ś1 K2.4 D1 M4 द्विजोत्तमः; B2 द्विजर्षभाः.

8 For the repetition in Dc1, cf. v. l. 6. — $^a$) Dc1 om. from युगानां च up to संशयः (in $8^b$). — After $8^b$, D1 reads from मम (in $11^c$) up to दिशां (in $12^c$). Ś1 reads $8^c$–$11^d$ on marg. — $^d$) K4.5 D1.6 औषधीनां. Ś1 K1 Dn1 यवस्तथा; K3 तथा यवाः (by transp.); D2 जवास्तथा.

9 Dc1 om. $9^a$–$10^a$. The portion of the text from 9 up to 14. 45. 20 is lost in Dn1 due to the folios being stuck together. Ś1 reads 9 on marg. — $^a$) B2 एव (for भक्ष्य-). K4 सर्वभक्षणभोज्यानाम्. — $^b$) K3 सर्वं (for अन्नं). Ś1 K1.3 परमिह; M4 तु परम् (for परमम्). — $^c$) D6 T2 G3 द्रव्याणां; G1.2 द्रविणं. — $^d$) D6 येषां नाम; G3 पयसाम्; M1 पेयानां च (for °नाम्).

10 Dn1 missing; Dc1 om. $10^a$ (for both, cf. v. l. 9). Ś1 reads 10 on marg. — $^{ab}$) Ś1 K1-3 B6 D2-6 तु (for च). Ś1 K1-3.5 सर्वेषां भूतानाम् (by transp.); G1 भूतानां सर्वासाम् (sic). B1.2.4 Dc1 च विशेषतः (for अवि°). — $^c$) K2.4 T G M4 (*inf. lin.*) ब्रह्मवृक्षः; K3 बहुक्षत्रं (for ब्रह्मक्षेत्रं). T G1.3 पुण्यः. D1 आमदक्षो महापुण्यः; M ब्रह्मभूतः सदा पुण्यः. — $^d$) G1 M4 (*inf. lin.* as in text) पक्षः (for प्लक्षः). K1 D (except D1; Dn1 missing) प्रथमतः; G2 °मकः. K3 प्लवः प्रथमं रजः (submetric); B1.2 प्लक्षश्च प्रथमः स्मृतः.

11 Dn1 missing (cf. v. l. 9). G3 om. $11^a$–$12^b$. Ś1 reads 11 on marg. — $^c$) D1 reads from मम up to दिशां (in $12^c$) after $8^b$. — $^d$) K2.4.5 Dc1 D1.3 यः; K3 B1-3 T2 G1.2 M3.4 सं- (for स).

12 For the sequence in D1, cf. v. l. 11. Dn1 missing (cf. v. l. 9). G3 om. $12^{ab}$ (cf. v. l. 11). G2 om. (hapl.) $12^{ab}$. — $^a$) K2 तथा (for महा-). — $^b$) K5 अग्रहा. — After $12^b$, M4 (*inf. lin. sec. m.*) reads $14^a$–$17^b$, repeating the same in its proper place. — $^c$) K1 corrupt. K3-5 B Dc1 D2-6 T M4 चोर्ध्वं. G3 दिशां चोपदिशां च स्युर्. — $^d$) B1 दिक्स्मृता; B4 दिग्धाता; M1.2 दिग्जातां; M3 दि(*sup. lin.* द्वि)जतां (sic) (for दिग्जाता). B Dc1 T2 G1.2 प्रथमा. Ś1 K1 तदा (for तथा). K2.4.5 D1-6 T1 दिक्पूर्वा प्रथमा तथा (K4 D5.6 स्मृता); G3 दिग्गजाः प्रथमाः स्मृताः.

13 Dn1 missing (cf. v. l. 9). — $^a$) Dc1 om. तथा. D6 तथा त्रिपथगां गंगां; G3 तथा गंगा नदीनां तु. — $^b$) G3 सर्वासाम् (for नदीनाम्). K3 प्रथमा (for अग्रजा). K4 D1 मता (for स्मृता). — $^c$) B4 (marg. as in text) सर्वोदपानानां; D5.6 सदोद°; M सरोदु° (for सरोद°). B1.2 कूपानां सरसां चैव; T1 G1 तथा चाश्वो वाहनानां; G3 सरसां सोदपानानां. — $^d$) K5 [ऽ]ग्रहः; B1.2 वरः (for ऽग्रजः). D5.6 सागरः सर्वतोग्रजः.

तथा सरोदपानानां सर्वेषां सागरोऽग्रजः ॥ १३
देवदानवभूतानां पिशाचोरगरक्षसाम् ।
नरकिंनरयक्षाणां सर्वेषामीश्वरः प्रभुः ॥ १४
आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान् ।
भूतं परतरं तस्मात्त्रैलोक्ये नेह विद्यते ॥ १५
आश्रमाणां च गार्हस्थ्यं सर्वेषां नात्र संशयः ।
लोकानामादिरव्यक्तं सर्वस्यान्तस्तदेव च ॥ १६
अहान्यस्तमयान्तानि उदयान्ता च शर्वरी ।
सुखस्यान्तः सदा दुःखं दुःखस्यान्तः सदा सुखम् ॥ १७
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ १८
सर्वं कृतं विनाशान्तं जातस्य मरणं ध्रुवम् ।
अशाश्वतं हि लोकेऽस्मिन्सर्वं स्थावरजङ्गमम् ॥ १९
इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये ।
सर्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते ॥ २०
तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्मा समाहितः ।
निर्ममो निरहंकारो मुच्यते सर्वपाप्मभिः ॥ २१

इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

14 Dn1 missing (cf. v. l. 9). M4 (*inf. lin. sec. m.*) reads $14^a$–$17^b$ for the first time after $12^b$. — $^a$) K2.4 D1 -यक्षाणां; D5.6 -दैत्यानां (for -भूतानां). — $^b$) K1.3 D1.3 G3 -राक्षसां (K3 °सं). — $^c$) K1 -यक्षानां; K2.4.5 D1 -भूतानां (for -यक्षाणां).

15 For the repetition in M4, cf. v. l. 14. Dn1 missing (cf. v. l. 9). — $^a$) K4 D1 सर्वस्य (for विश्वस्य). Ś1 K1.3 महतो (for जगतो). — $^b$) D3 विष्णु-. Ś1 K1 ब्रह्मविष्णुमयो महान्. — $^c$) B1.2 (marg. as in text) हृद्यं; G3 सूक्ष्मं; M1-3.4 (second time) ततः (for भूतं). D6 भव्यं परं (for परतरं). Dc1 D2.5.6 यस्मात्; T1 नास्ति; M1 lacuna; M2.3 *स; M4 न स (for तस्मात्). — $^d$) Ś1 K1 Dc1 त्रिलोके; K3 त्रैलोके. K2 ह; D6 [ए]व (for [इ]ह). B1.2 लोकेषु न च विद्यते; T1.2 (*sup. lin.*) G M (M4 both times) त्रिषु लोकेत्र वि°.

16 For the repetition in M4, cf. v. l. 14. Dn1 missing (cf. v. l. 9). — $^{ab}$) K2.5 T1 G2.3 तु; G1 om. (for च). K1.3 Dc1 गार्हस्थं. D2-6 M4 (second time) transp. गार्हस्थ्यं and सर्वेषां. B1.2 सर्वेषामुत्तमं स्मृतं (for $16^b$). — $^c$) B1.2 Dc1 T1 अव्यक्तः; Cv °क्तं (as in text). — $^d$) B5 [अं]ते; G3 M4 (first time) अंतं. K2-5 B4 D1 T G M4 (first time) तथा; B1-3 स (for तद्). M3 ह (for च).

17 For the repetition in M4, cf. v. l. 14. Dn1 missing (cf. v. l. 9). — $^a$) K4.5 B3.4 D1 M3.4 (second time) अहान्यस्तमनांतानि; D3 अहं मत्कृपयांतानि (sic). — $^b$) Ś1 lacuna. Dc1 M4 (first time) उदयांतानि; D3 उभयांता च (sic). — $17^{cd}$ = (var.) 3. 48. $45^{ab}$; 12. 26. $23^{ab}$, 149. $84^{ab}$, 168. $18^{cd}$. — $^c$) K5 B Dc1 D2.4 T2 G2.3 [अं]तं; D3 [अं]ते (for [अ]न्तः). Ś1 K T G तथा (for सदा). — $^d$) B D (Dn1 missing) T2 G2.3 [अं]तं (for [अ]न्तः). Ś1 K T G तथा (for सदा).

18 = 11. 2. 3; (var.) 12. 27. 29, 317. 20; Rām. 2. 105. 16; 7. 52. 11; Gobhilasmṛti 3. 43; Kathāsaritsāgara 51. $26^c$–$27^b$. Dn1 missing (cf. v. l. 9). G1 om. $18^c$–$19^b$. — $^c$) B1-3 D2-4 संयोगाश्च वियोगांता; B4 °गो विप्रयोगांतो; D6 °गांता वियोगांतं. — $^d$) K3 मरणांते; M3 °तश्च. B3-5 Dc1 D2-6 T G1.3 M च; G2 तु (for हि). D6 जीविते.

19 Dn1 missing (cf. v. l. 9). G1 om. $19^{ab}$ (cf. v. l. 18). T2 om. $19^{ab}$. — $^a$) D5.6 एवं (for सर्वं). G3 विनाशतुं (sic); M2 °शांतान्. — $^d$) B Dc1 D2-6 G3 M4 सदा (for सर्वं).

20 Dn1 missing (cf. v. l 9). — $^b$) Ś1 K1 व्रताश्च; D3 या व्रता (sic); T1 G1 भूतानि (for व्रतानि). K4 B1.2 D1 तथा (for च ये). G3 व्रतानि विविधानि च. — $^d$) D6 G2 ज्ञानस्यांतं. K4 D1 नान्यस्यांतं हि विद्यते.

21 Dn1 missing (cf. v. l. 9). — $^b$) K4 D1 प्रसन्नोयं (for °न्नात्मा). B Dc1 D2-6 प्रशांतात्मा जितेंद्रियः. — $^d$) G3 -पाप्मनः (for °भिः). B1.2 मुच्यते

# ४५

ब्रह्मोवाच ।

बुद्धिसारं मनस्तम्भमिन्द्रियग्रामबन्धनम् ।
महाभूतारविष्कम्भं निमेषपरिवेष्टनम् ॥ १
जराशोकसमाविष्टं व्याधिव्यसनसंचरम् ।
देशकालविचारीदं श्रमव्यायामनिस्वनम् ॥ २
अहोरात्रपरिक्षेपं शीतोष्णपरिमण्डलम् ।
सुखदुःखान्तसंक्लेशं क्षुत्पिपासावकीलनम् ॥ ३
छायातपविलेखं च निमेषोन्मेषविह्वलम् ।
घोरमोहजनाकीर्णं वर्तमानमचेतनम् ॥ ४
मासार्धमासगणितं विषमं लोकसंचरम् ।
तमोनिचयपङ्कं च रजोवेगप्रवर्तकम् ॥ ५
सत्त्वालंकारदीप्तं च गुणसंघातमण्डलम् ।

---

कर्मबंधनात्; D3 मुच्यंते सर्वपद्मभिः (sic).

Colophon. Dn1 missing. — *Sub-parvan :* K2.3 S (except G2) अनुगीता. — *Adhy. name :* K2 B Dc1 D4–6 गुरुशिष्यसंवादः. — *Adhy. no.* (figures, words or both): Ś1 48; Dc1 41; T1 34; T2 G1.2 M 33; G3 44 (as in text); M4 (*inf. lin.*) 45.

## 45

☞ D4 om. (hapl.) this adhy.

1 Dn1 missing up to 20 (cf. v. l. 14. 44. 9). K4 D1.6 M3.4 ब्राह्मण (for ब्रह्मा). — a) Ś1 K1 ब्रह्मसारं; K4 D1 बुद्धिसार-; D6 बुद्धिपरं. — b) T G1.2 M -वर्धनं (for -बन्धनम्). G3 इंद्रियाणामवर्धनं. — c) Ś1 K3 D5 महाभूतात्म(Ś1 °न्य)विष्कंभं; K2.4 B4 D1 °भूतपरिस्तंभं; K5 B5 D2.3 °भूतपरिस्कंधं; B1.2 D6 °भूतपरिस्कंद- (B2 [marg.] °ष्पंद-; D6 °ष्कंदं); B3 Dc1 °भूतपरिस्कंभं; T1 °भूताकलिष्कंभं; G2.3 °भूतादिवि°. — d) B4.5 -वेशनं; Dc1 -वेशिनं; M4 (*inf. lin.*) -वेषणं (for -वेष्टनम्). Ś1 K1.3.5 विशेष(K1 °श)-परिवेषनं (K1.5 °शनं); K2.4 B3 D1 निवेशपरिवेषणं (B3 °नं); B1.2 D2.3.5.6 निवेशपरिवेशनं.

2 Dn1 missing (cf. v. l. 1). — a) K4 D1 जघच्छोक- (sic) (for जराशोक-). Dc1 -शमाविष्टं; D5 G2 -समाविष्ट-. — b) Ś1 -संचितं; B3 D2.3.5.6 -संभवं; M -पंजरं (for -संचरम्). G3 व्याधिव्यसनजं परं. — c) G2 काले देश- (for देशकाल-). G3 देशकाले विचरितं. — d) Ś1 K1 देश-; K3 D5 -दोष-; K5 B1.2.4.5 शम-; B3 सम-; D2.3.6 दम- (for श्रम-). Some MSS. -निःस्वनं.

3 Dn1 missing (cf. v. l. 1). — a) K1 पुरो रात्र-; B1 D6 अहोरात्रं. K5 -परिक्षेपे. — b) K4 शीतोष्णी; D3 °ष्णं. — Ś1 K1 om. (hapl.) $3^{c}$–$4^{b}$. — c) C corrupt. K5 D2.3.5.6 -दुःखार्ति- (for °न्त-). T M2.4 -संश्लेशं. K3 B1.2 सुखदुःखांतरं क्लेशं; K4 L °दुःखांतमक्लेशं; T1 G3 °दुःखसमं श्लेषं (G3 श्रेष्ठं); G1 °दुःखमशेषं तु. — d) K3 -केलनं; B1.3.5 Dc1 -कीलकं; G3 -कीर्णनं (for -कीलनम्). B2 क्षुत्पिपासेति कीलकं; D6 शून्ययासावकालनं (sic).

4 Dn1 missing (cf. v. l. 1). Ś1 K1 om. $4^{ab}$ (cf. v. l. 3). — a) K2 -विलेख्यं; K4 D1.2 -विलेपं; D5.6 M4 -विलेपं. — b) K2 निमिषोन्मेषविह्वलं. — c) K3 घोरं; T G M4 (*inf. lin.*) शोक- (for घोर-). K2.5 D6 T1 G -जराकीर्णं; K4 B D1 T2 -जला°; M4 (*inf. lin.*) -समा° (for -जना°). — d) G2 सुचेतनं (for अ°).

5 Dn1 missing (cf. v. l. 1). K1 om. $5^{a}$. — a) G -गुणितं. — b) K2 विषम-; D1 om. (for विषमं). G1 लेख- (for लोक-). D1 -संकरं (for -संचरम्). B5 विषयेंद्रियसंचरं. — c) B3–5 Dc1 D2.3 तपो-; D1 मनो- (for तमो-). Ś1 K1.3.5 -नियति-; K2.4 D1 -निरय-; B Dc1 D2.3.5.6 -नियम-; G2 -प्रचय-; G3 -नियत- (for -निचय-). — d) K5 -निवर्तनं; D6 -प्रवर्तके; T1 G2.3 M °र्तनं (for °र्तकम्).

6 Dn1 missing (cf. v. l. 1). — a) Ś1 K1 नत्वाहंकार- (sic); K2.4 सदाहं°; K3 B5 (marg.) Dc1 तत्त्वालं°; B5 D1–3.5.6 महाहं°; T2 Cnp सत्त्वाहं° (for सत्त्वालं°). — b) D1 G2 M1–3 -संपात-; M4 -संवाद- (for -संघात-). D5 -वर्तनं (for -मण्डलम्). B5 D2.3.6 गुणसंजातवर्तनं. ❀ Cn : पाठान्तरे मंडलं संघातः । ❀ — c) K2.4 D1 सूर्य-; K5 अरि-; T G1.2 सार- (for स्वर-). Ś1 K1.3 B Dc1 D2.3.5 अरतिग्रहणाभी(Ś1 D2.3.5 °नी)कं; D6 अतिग्रहणनाकं च;

तथा सरोदपानानां सर्वेषां सागरोऽग्रजः ॥ १३
देवदानवभूतानां पिशाचोरगरक्षसाम् ।
नरकिंनरयक्षाणां सर्वेषामीश्वरः प्रभुः ॥ १४
आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान् ।
भूतं परतरं तस्मात्त्रैलोक्ये नेह विद्यते ॥ १५
आश्रमाणां च गार्हस्थ्यं सर्वेषां नात्र संशयः ।
लोकानामादिरव्यक्तं सर्वस्यान्तस्तदेव च ॥ १६
अहान्यस्तमयान्तानि उदयान्ता च शर्वरी ।
सुखस्यान्तः सदा दुःखं दुःखस्यान्तः सदा सुखम् ॥ १७
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ १८
सर्वं कृतं विनाशान्तं जातस्य मरणं ध्रुवम् ।
अशाश्वतं हि लोकेऽस्मिन्सर्वं स्थावरजङ्गमम् ॥ १९
इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये ।
सर्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते ॥ २०
तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्मा समाहितः ।
निर्ममो निरहंकारो मुच्यते सर्वपाप्मभिः ॥ २१

इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

14 Dn1 missing (cf. v. l. 9). M4 (*inf. lin. sec. m.*) reads $14^a$–$17^b$ for the first time after $12^b$. — $^a$) K2.4 D1 -यक्षाणां; D5.6 -दैत्यानां (for -भूतानां). — $^b$) K1.3 D1.3 G3 -राक्षसां (K3 °सं). — $^c$) K1 -यक्षानां; K2.4.5 D1 -भूतानां (for -यक्षाणां).

15 For the repetition in M4, cf. v. l. 14. Dn1 missing (cf. v. l. 9). — $^a$) K4 D1 सर्वस्य (for विश्वस्य). Ś1 K1.3 महतो (for जगतो). — $^b$) D3 विष्णु-. Ś1 K1 ब्रह्मविष्णुमयो महान्. — $^c$) B1.2 (marg. as in text) हृद्यं; G3 सूक्ष्मं; M1–3.4 (second time) ततः (for भूतं). D6 भव्यं परं (for परतरं). Dc1 D2.5.6 यस्मात्; T1 नास्ति; M1 lacuna; M2.3 *स; M4 न स (for तस्मात्). — $^d$) Ś1 K1 Dc1 त्रिलोके; K3 त्रैलोके. K2 ह; D6 [ए]व (for [इ]ह). B1.2 लोकेषु न च विद्यते; T1.2 (*sup. lin.*) G M (M4 both times) त्रिषु लोकेत्र वि°.

16 For the repetition in M4, cf. v. l. 14. Dn1 missing (cf. v. l. 9). — $^{ab}$) K2.5 T1 G2.3 तु; G1 om. (for च). K1.3 Dc1 गार्हस्थं. D2–6 M4 (second time) transp. गार्हस्थ्यं and सर्वेषां. B1.2 सर्वेषामुत्तमं स्मृतं (for $16^b$). — $^c$) B1.2 Dc1 T1 अव्यक्तः; Cv °क्तं (as in text). — $^d$) B5 [अं]ते; G3 M4 (first time) [अं]तं. K2–5 B4 D1 T G M4 (first time) तथा; B1–3 स (for तद्). M3 ह (for च).

17 For the repetition in M4, cf. v. l. 14. Dn1 missing (cf. v. l. 9). — $^a$) K4.5 B3.4 D1 M3.4 (second time) अहान्यस्तमनांतानि; D3 अहं मत्कृपयां-तानि (sic). — $^b$) Ś1 lacuna. Dc1 M4 (first time) उदयांतानि; D8 उभयांता च (sic). — $17^{cd}$ = (var.) 3. 48. $45^{ab}$; 12. 26. $23^{ab}$, 149. $84^{ab}$, 168. $18^{cd}$. — $^c$) K5 B Dc1 D2.4 T2 G2.3 [अं]तं; D3 [अं]ते (for [अ]न्तः). Ś1 K T G तथा (for सदा). — $^d$) B D (Dn1 missing) T2 G2.3 [अं]तं (for [अ]न्तः). Ś1 K T G तथा (for सदा).

18 = 11. 2. 3; (var.) 12. 27. 29, 317. 20; Rām. 2. 105. 16; 7. 52. 11; Gobhilasmṛti 3. 43; Kathāsaritsāgara 51. $26^c$–$27^b$. Dn1 missing (cf. v. l. 9). G1 om. $18^c$–$19^b$. — $^c$) B1–3 D2–4 संयोगाश्च वियोगांता; B4 °गो विप्रयोगांतो; D6 °गांता वियोगांतं. — $^d$) K3 मरणांते; M3 °तश्. B3–5 Dc1 D2–6 T G1.3 M च; G2 तु (for हि). D6 जीविते.

19 Dn1 missing (cf. v. l. 9). G1 om. $19^{ab}$ (cf. v. l. 18). T2 om. $19^{ab}$. — $^a$) D5.6 एवं (for सर्वं). G3 विनाशतुं (sic); M2 °शांताज्. — $^d$) B Dc1 D2–6 G3 M4 सदा (for सर्वं).

20 Dn1 missing (cf. v. l 9). — $^b$) Ś1 K1 व्रताश्च; D3 या व्रता (sic); T1 G1 भूतानि (for व्रतानि). K4 B1.2 D1 तथा (for च ये). G3 व्रतानि विविधानि च. — $^d$) D6 G2 ज्ञानस्यांतं. K4 D1 नान्य-स्यांतं हि विद्यते.

21 Dn1 missing (cf. v. l. 9). — $^c$) K4 D1 प्रसन्नोयं (for °न्नात्मा). B Dc1 D2–6 प्रशांतात्मा जितें-द्रियः. — $^d$) G3 -पाप्मनः (for °भिः). B1.2 मुच्यते

# ४५

ब्रह्मोवाच ।

बुद्धिसारं मनस्तम्भमिन्द्रियग्रामबन्धनम् ।
महाभूतारविष्कम्भं निमेषपरिवेष्टनम् ॥ १
जराशोकसमाविष्टं व्याधिव्यसनसंचरम् ।
देशकालविचारीदं श्रमव्यायामनिस्वनम् ॥ २
अहोरात्रपरिक्षेपं शीतोष्णपरिमण्डलम् ।
सुखदुःखान्तसंक्लेशं क्षुत्पिपासावकीलनम् ॥ ३
छायातपविलेखं च निमेषोन्मेषविह्वलम् ।
घोरमोहजनाकीर्णं वर्तमानमचेतनम् ॥ ४
मासार्धमासगणितं विषमं लोकसंचरम् ।
तमोनिचयपङ्कं च रजोवेगप्रवर्तकम् ॥ ५
सत्त्वालंकारदीप्तं च गुणसंघातमण्डलम् ।

---

कर्मबंधनात्; D3 मुच्यंते सर्वपद्मभिः (sic).

Colophon. Dn1 missing. — *Sub-parvan:* K2.3 S (except G2) अनुगीता. — *Adhy. name:* K2 B Dc1 D4–6 गुरुशिष्यसंवादः. — *Adhy. no.* (figures, words or both): Ś1 48; Dc1 41; T1 34; T2 G1.2 M 33; G3 44 (as in text); M4 (*inf. lin.*) 45.

## 45

☞ D4 om. (hapl.) this adhy.

1 Dn1 missing up to 20 (cf. v. l. 14. 44. 9). K4 D1.6 M3.4 ब्राह्मण (for ब्रह्मा). — a) Ś1 K1 ब्रह्मसारं; K4 D1 बुद्धिसार-; D6 बुद्धिपरं. — b) T G1.2 M -वर्धनं (for -बन्धनम्). G3 इंद्रियाणामवर्धनं. — c) Ś1 K3 D5 महाभूतारम(Ś1 °न्य)विष्कंभं; K2.4 B4 D1 °भूतपरिस्तंभं; K5 B5 D2.3 °भूतपरिस्कंधं; B1.2 D6 °भूतपरिस्कंद- (B2 [marg.] °ष्पंद-; D6 °ष्कंदं); B3 Dc1 °भूतपरिस्कंभं; T1 °भूताकलिष्कंभं; G2.3 °भूतादिवि°. — d) B4.5 -वेशनं; Dc1 -वेशिनं; M4 (*inf. lin.*) -वेषणं (for -वेष्टनम्). Ś1 K1.3.5 विशेष(K1 °श)-परिवेषनं (K1.5 °शनं); K2.4 B3 D1 निवेशपरिवेषणं (B3 °नं); B1.2 D2.3.5.6 निवेशपरिवेशनं.

2 Dn1 missing (cf. v. l. 1). — a) K4 D1 जघच्छोक- (sic) (for जराशोक-). Dc1 -शमाविष्टं; D5 G2 -समाविष्ट-. — b) Ś1 -संचितं; B3 D2.3.5.6 -संभवं; M -पंजरं (for -संचरम्). G3 व्याधिव्यसनजं परं. — c) G2 काले देश- (for देशकाल-). G3 देशकाले विचरितं. — d) Ś1 K1 देश-; K3 D5 -दोष-; K5 B1.2.4.5 शम-; B3 सम-; D2.3.6 दम- (for श्रम-). Some MSS. -निःस्वनं.

3 Dn1 missing (cf. v. l. 1). — a) K1 पुरो रात्र-; B1 D6 अहोरात्रं. K5 -परिक्षेपे. — b) K4 शीतोष्णी; D3 °ष्णं. — Ś1 K1 om. (hapl.) 3c–4b. — c) G2 corrupt. K5 D2.3.5.6 -दुःखार्ति- (for °न्त-). T2 M2.4 -संश्लेशं. K3 B1.2 सुखदुःखांतरं क्लेशं; K4 D1 °दुःखांतमक्लेशं; T1 G3 °दुःखसमं श्लेषं (G3 श्रेष्ठं); G1 °दुःखमशेषं तु. — d) K3 -केलनं; B1.3.5 Dc1 -कीलकं; G3 -कीर्णनं (for -कीलनम्). B2 क्षुत्पिपासेति कीलकं; D6 शून्ययासावकालनं (sic).

4 Dn1 missing (cf. v. l. 1). Ś1 K1 om. 4ab (cf. v. l. 3). — a) K2 -विलेख्यं; K4 D1.2 -विलेषं; D5.6 M4 -विलेपं. — b) K2 निमिषोन्मेषविह्वलं. — c) K3 घोरं; T G M4 (*inf. lin.*) शोक- (for घोर-). K2.5 D6 T1 G -जराकीर्णं; K4 B D1 T2 -जला°; M4 (*inf. lin.*) -समा° (for -जना°). — d) G2 सुचेतनं (for अ°).

5 Dn1 missing (cf. v. l. 1). K1 om. 5a. — a) G -गुणितं. — b) K2 विषम-; D1 om. (for विषमं). G1 लेख- (for लोक-). D1 -संकरं (for -संचरम्). B5 विषयेंद्रियसंचरं. — c) B3–5 Dc1 D2.3 तपो-; D1 मनो- (for तमो-). Ś1 K1.3.5 -नियति-; K2.4 D1 -निरय-; B Dc1 D2.3.5.6 -नियम-; G2 -प्रचय-; G3 -नियत- (for -निचय-). — d) K5 -निवर्तनं; D6 -प्रवर्तके; T1 G2.3 M °र्तनं (for °र्तकम्).

6 Dn1 missing (cf. v. l. 1). — a) Ś1 K1 नत्वाहंकार- (sic); K2.4 सदाहं°; K3 B5 (marg.) Dc1 तत्त्वालं°; B5 D1–3.5.6 महाहं°; T2 Cnp सत्त्वाहं° (for सत्त्वालं°). — b) D1 G2 M1–3 -संपात-; M4 -संवाद- (for -संघात-). D5 -वर्तनं (for -मण्डलम्). B5 D2.3.6 गुणसंजातवर्तनं. ❀ Cn: पाठान्तरे मंडलं संघातः। ❀ — c) K2.4 D1 सूर्य-; K5 अरि-; T G1.2 सार- (for स्वर-). Ś1 K1.3 B Dc1 D2.3.5 अरतिग्रहणाभी(Ś1 D2.3.5 °नी)कं; D6 अतिग्रहणनाकं च;

स्वरविग्रहनाभीकं शोकसंघातवर्तनम् ॥ ६
क्रियाकारणसंयुक्तं रागविस्तारमायतम् ।
लोभेप्सापरिसंख्यातं विविक्तज्ञानसंभवम् ॥ ७
भयमोहपरीवारं भूतसंमोहकारकम् ।
आनन्दप्रीतिधारं च कामक्रोधपरिग्रहम् ॥ ८
महदादिविशेषान्तमसक्तप्रभवाव्ययम् ।
मनोजवनमश्रान्तं कालचक्रं प्रवर्तते ॥ ९
एतद्द्वंद्वसमायुक्तं कालचक्रमचेतनम् ।
विसृजेत्संक्षिपेच्चापि बोधयेत्सामरं जगत् ॥ १०

कालचक्रप्रवृत्तिं च निवृत्तिं चैव तत्त्वतः ।
यस्तु वेद नरो नित्यं न स भूतेषु मुह्यति ॥ ११
विमुक्तः सर्वसंक्लेशैः सर्वद्वंद्वातिगो मुनिः ।
विमुक्तः सर्वपापेभ्यः प्राप्नोति परमां गतिम् ॥ १२
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ताः सर्वे गार्हस्थ्यमूलकाः ॥ १३
यः कश्चिदिह लोके च ह्यागमः संप्रकीर्तितः ।
तस्यान्तगमनं श्रेयः कीर्तिरेषा सनातनी ॥ १४
संस्कारैः संस्कृतः पूर्वं यथावच्चरितव्रतः ।

---

G3 सारविग्रहनारीकं. — $^d$) B3 T2 G2 M -वर्तकं; Dc1 -वर्तुलं; G1 -वर्त्मकं; G3 -वर्धनं (for -वर्तनम्). K2 शोकसंताय*त्तनं; K4 D1 °संहारवर्तकं.

7 Dn1 missing (cf. v. l. 1). — $^a$) Ś1 K1.2 B1 Dc1 T G2 -करण- (for -कारण-). — $^b$) G3 नाग- (for राग-). K5 रागं विस्तरमायतं. — $^c$) K4 लोभेशा- (sic); T1 लोकेप्सा- (for लोभेप्सा-). Ś1 G2.3 -संघातं; K3 -संख्याते; B1.2 -विक्षेपं; B3-5 Dc1 -विख्यातं; D2.3.5.6 -विक्षोभं (for -संख्यातं). — $^d$) Ś1 K1.3 corrupt. K4 D1 विचित्र-; B1.2.4.5 Dc1 विविध-; B3 विधित्सा-; D2.5.6 G3 M4 विचिंता-; D3 विचिंत- (for विविक्त-). T -संप्लवं (for -संभवम्). M4 (*inf. lin.*) विद्धि चिंतनसंभवं.

8 Dn1 missing (cf. v. l. 1). — $^a$) B2 -परीवादं; D3 -परिवारं. — $^b$) K2 D6 भूतं (for भूत-). K4 D1 भूतसंमोहनात्मकं. — $^c$) T2 अनंत- (for आनन्द-). K3 B1.3 D2.3.5.6 G3 -प्री(G3 -प्र)तिचारं; B2 -प्रतिवारं; Dc1 M2 -प्रतिधारं; M4 -प्रीतिसारं (for °धारं). K2.4 D1 अनंतपरिवारे (K2 °रं) च; G1.2 अनंतप्रीतिदारं (G2 °यानं) च.

9 Dn1 missing (cf. v. l. 1). — $^b$) K4 G1 अव्यक्त-; B1-4 Dc1 D3.6 अशक्त-; T1 G2.3 असक्तं. K1.3.4 D1.5.6 -प्रभवाप्ययं (for °व्ययम्). — $^c$) K2.5 D5 मनोजवमविश्रांतं; K4 D1 °जवमनश्रांतं; B Dc1 D2.3 °जवं मनःकां(B1.2 °नःक्रां)तं; D6 corrupt; T1 G3 °जवपरि(G3 °सम)श्रांतं. — Dc1 om. $9^d$–$10^d$.

10 Dn1 missing (cf. v. l. 1). Dc1 om. 10 (cf. v. l. 9). — $^a$) K2 एवं; D6 तद्वद् (for एतद्). — $^b$) K4 D1 सचेतनम् (for कालचक्रम्). — $^c$) B4 G2 M3 [ए]व (for [अ]पि). D3 विसृजेशं क्षिपेच्चापि (sic); T G1 विसृजेच्च क्षिपेच्चैव; G3 °जन्संक्षिपंश्चापि; M4 विजयत्संक्षिपेच्चैव. — $^d$) K2 T G1.2 मोहयेत्; M मोहयन् (for बोधयेत्). K2 om. सामरं. K4 D1 मोहवत्स्थापयेज्जगत्; G3 बोधयन्स्वापयञ्जगत्.

11 Dn1 missing (cf. v. l. 1). — $^a$) K2 Dc1 कालचक्रं. K5 कालचक्रस्य संयोगं; M4 °क्रं प्रवृत्तं च. — $^b$) K5 प्रवृत्तिं; Dc1 M4 निवृत्तं. K2 वापि; K4.5 D1 चापि (for चैव). — $^c$) K4 D1 न स वेदविदो (D1 °द नरो) नित्यं. — $^d$) K5 भूतेषु स (by transp.); M3 संभूतेषु. K2 T2 G1.2 M (M4 *inf. lin.* as in text) मुह्यते; B2 मुंचति.

12 Dn1 missing (cf. v. l. 1). — $^a$) K1.3 B Dc1 D2.3.5.6 -संस्कारैः (for -संक्लेशैः). Ś1 निर्मुक्तः सर्वसंस्कारैः; K4 D1 विमुक्तसर्वसंक्लेशः. — $^b$) B1.2 D2.3.5.6 सर्वद्वंद्वविवर्जितः. — $^c$) Ś1 K2.5 निर्मुक्तः. — $^d$) D5.6 गतिमाप्नोति चोत्तमां.

13 Cf. Manu. 6. 87. Dn1 missing (cf. v. l. 1). — $^a$) Ś1 K1.3.4 D1 वा (for च). — K4 D1 om. $13^b$–$14^a$. — $^d$) Dc1 सर्व- (for सर्वे). Ś1 K1 गार्हस्थ- (for °स्थ्य-). B4 -सूचकाः (for -मूलकाः).

14 Dn1 missing (cf. v. l. 1). K4 D1 om. $14^a$ (cf. v. l. 13). — $^a$) G2 यत्किंचिद् (for यः कश्चिद्). K2 जीव- (for इह). G3 मूले (for लोके). K2 B Dc1 D2.3.5.6 [ऽ]स्मिन्; K5 G3 वा (for च). — $^b$) Ś1 K1.3.5 [अ]प्यागमः; K2 आगमः; T G1 M3 आश्रमः; G2.3 ह्याश्रमः (for ह्यागमः). K4 D1 आगतः संप्रवर्तकः; B Dc1 D2.3.5.6 आगमः परिकीर्तितः. — Ś1 K1 om. (hapl.) $14^c$–$15^b$. — $^c$) B Dc1 [अ]नु- (for [अ]न्त-). G3 तस्यांतर्गमनं ज्ञेयं.

जातौ गुणविशिष्टायां समावर्तेत वेदवित् ॥ १५
स्वदारनिरतो दान्तः शिष्टाचारो जितेन्द्रियः ।
पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेत ह ॥ १६
देवतातिथिशिष्टाशी निरतो वेदकर्मसु ।
इज्याप्रदानयुक्तश्च यथाशक्ति यथाविधि ॥ १७
न पाणिपादचपलो न नेत्रचपलो मुनिः ।
न च वागङ्गचपल इति शिष्टस्य गोचरः ॥ १८
नित्ययज्ञोपवीती स्याच्छुक्लवासाः शुचिव्रतः ।
नियतो दमदानाभ्यां सदा शिष्टैश्च संविशेत् ॥ १९
जितशिश्नोदरो मैत्रः शिष्टाचारसमाहितः ।
वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ॥ २०
अधीत्याध्यापनं कुर्यात्तथा यजनयाजने ।
दानं प्रतिग्रहं चैव षड्गुणां वृत्तिमाचरेत् ॥ २१
त्रीणि कर्माणि यानीह ब्राह्मणानां तु जीविका ।
याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः ॥ २२
अवशेषाणि चान्यानि त्रीणि कर्माणि यानि तु ।

---

15 Dn1 missing (cf. v. l. 1). Ś1 K1 om. 15[ab] (cf. v. l. 14). — [a]) D3 संकरैः (for संस्कारैः). K4 D3. 5. 6 संस्कृतं; M1. 2 °तिः. — [c]) K4 D1 जाता; K5 B1. 2 D2. 3. 5. 6 T G M1-3 जातो; Cv जातौ (as in text). D3 om. from गुण up to जितेन्द्रि (in 16[b]). M4 जातो गुणविशिष्टानां. — [d]) K4. 5 D1 वैदिकं; D2. 3. 5. 6 तत्त्ववित् (for वेद°).

16 Dn1 missing (cf. v. l. 1). D3 om. up to जितेन्द्रि (in 16[b]) (cf. v. l. 15). — [a]) K4 D1 स्वाचार- (for स्वदार-). Dc1 om.; D5 -निरते. B (except B3) Dc1 D2. 5. 6 नित्यं (for दान्तः). — [d]) Ś1 K1. 2 जयेत ह; K3 B1. 2 Dc1 जितेंद्रियः; K4 D1 दयेदिह; B2 (marg.). 3-5 D2. 3. 5. 6 यजेदिह; G3 यजेत वा (for °त ह).

17 Dn1 missing (cf. v. l. 1). — [a]) T1 -विष्टाशी (for -शिष्टाशी). — [b]) K2. 4 D1 T2 नियतो (for निरतो). B1. 2 Dc1 G3 देव- (for वेद-). — [c]) T1 G1 नित्यं (for इज्या-). K1 Dc1 G1. 2 -प्रधान- (for -प्रदान-). B1. 2 -संयुक्तः (for -युक्तश्च). K4 D1 इष्टा-ध्ययनयुक्तश्च. — [d]) K5 यथा शक्तिर्; B1. 2 शक्तितोथ (for यथाशक्ति). K4. 5 D1 यथाश्रुतिः; D2. 3. 5. 6 यथासुखं (for °विधि).

18 Cf. Manu. 4. 177. Dn1 missing (cf. v. l. 1). — [c]) K2 G1. 2 corrupt. K4 D1 वागंत-; G3 वागंध- (for वागङ्ग-). D3. 6 -चपलम्. — [d]) K4 शिष्टश्च. K2 इति शिष्टानुशासनं.

19 Dn1 missing (cf. v. l. 1). — [a]) K5 B Dc1 D2. 3. 5. 6 T G नित्यं (for नित्य-). K2 नित्ययज्ञोपवीतः स्यात्. — [b]) K2. 3 शुचिवासाः; D3 शुक्ली° (for शुक्ल°). — [c]) B5 D2. 3. 5. 6 यम- (for दम-). — [d]) G3 तदा; M3 न च (for सदा). K1. 3 संवसेत्; K4 B4. 5 Dc1 D1 Cnp संविदः; K5 संविदं; B1. 2 संगतः; T G M1-3. 4 (*inf. lin.*) संवदन्; M4 संपदा (for संविशेत्).

20 Dn1 missing (cf. v. l. 1). — [a]) D1 -शश्नो-दरो; D5 -शिश्नो°; D6 -शिलो°. K4 D1 मैत्री; G3 जैत्रः. — [b]) Ś1 K1. 3 M2 शिष्टाचारः. B D2. 3. 5. 6 T2 -समन्वितः (for -समाहितः). — 20[cd] = Manu. 4. 36[ab]. — [c]) D1. 5. 6 वैणवीं. K4 B2 D1 धारयन् (for °येद्). — [d]) K1 corrupt. — After 20, T G M3 ins.:

84* त्रीणि धारयते नित्यं कमण्डलुमतन्द्रितः ।
एकमाचमनार्थाय एकं वै पादधावनम् ।
एकं शौचविधानार्थमित्येतात्रितयं तथा ।

[(L. 2) M3 आचमनार्थं वै (for °र्थाय). —(L. 3) M3 इत्येते नित्यदा विभो (for the post. half).]

21 Dn1 resumes. — [a]) D3 प्रधीत्य (for अधीत्य). K1 [आ]ख्यापनं; K2 [अ]ध्ययनं; B1. 2. 4 (marg. as in text) Dc1 Cnp. [आ]प्लवनं (for [अ]ध्यापनं). D1 अथ*ध्ययनं कुर्यात्. — D3 om. (? hapl.) 21[c]-22[b]. — [c]) Ś1 धाम्नां (for दानं). K2. 4. 5 B D5. 6 चापि; Dc1 Dn1 T1 वापि; G3 चैषां (for चैव). — [d]) Ś1 K1. 3 षाड्गुण्यां (K1 °णां; K3 °ण्यं); Dc1 षड्गुणं. K1. 3 वृत्तम्. D5. 6 आश्रयेत्; T G1 आचरन्. K5 षट्कर्माणि द्विजन्मनां.

22 D3 om. 22[ab] (cf. v. l. 21). Dc1 om. (hapl.) 22[a]-23[a]. — [a]) K4. 5 D1 जानीहि; B1. 2. 5 Dn1 D2. 5. 6 जानीत; B3 जानीह (for यानीह). — [b]) K2. 4 D1 च; B1. 2 हि (for तु). — [c]) K2 D3 यजनाध्यापने. Dn1 चोभौ. — [d]) Ś1 विशुद्धाच्च; K1. 3 विशुद्धश्च; K2 D1. 5. 6 शुद्धश्चैव; K4 शुद्धं चैव; K5 शुद्धाच्चैव; D3 शुद्धात्वापि (sic); M4 शुभाच्चापि (for शुद्धा°). K3 B3 G2 परिग्रहः (G2 °हं) (for प्रति°).

दानमध्ययनं यज्ञो धर्मयुक्तानि तानि तु ॥ २३
तेष्वप्रमादं कुर्वीत त्रिषु कर्मसु धर्मवित् ।
दान्तो मैत्रः क्षमायुक्तः सर्वभूतसमो मुनिः ॥ २४
सर्वमेतद्यथाशक्ति विप्रो निर्वर्तयञ्शुचिः ।
एवं युक्तो जयेत्स्वर्गं गृहस्थः संशितव्रतः ॥ २५

इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

# ४६

ब्रह्मोवाच ।
एवमेतेन मार्गेण पूर्वोक्तेन यथाविधि ।
अधीतवान्यथाशक्ति तथैव ब्रह्मचर्यवान् ॥ १
स्वधर्मनिरतो विद्वान्सर्वेन्द्रिययतो मुनिः ।
गुरोः प्रियहिते युक्तः सत्यधर्मपरः शुचिः ॥ २
गुरुणा समनुज्ञातो भुञ्जीतान्नमकुत्सयन् ।
हविष्यभैक्ष्यभुक्चापि स्थानासनविहारवान् ॥ ३
द्विकालमग्निं जुह्वानः शुचिर्भूत्वा समाहितः ।
धारयीत सदा दण्डं बैल्वं पालाशमेव वा ॥ ४
क्षौमं कार्पासिकं वापि मृगाजिनमथापि वा ।

23 Dc1 om. 23ᵃ (cf. v. l. 22). — ᵃ) Ś1 K4 B Dn1 D2. 3. 5. 6 अथ शेषाणि; K1 अविशे° (for अवशे°). — ᵇ) B1. 2 च; S [उ]त (for तु). — Ś1 K4. 5 B5 D1 om. (hapl.) 23ᶜᵈ. — ᵈ) S (except G3) यानि (for तानि). K2 B1. 2 च (for तु).

24 ᵃ) K1 [अ]प्रसादं; K3 प्रमादं; B3 प्रसादं; M2 [अ]प्रदानं (for °मादं). K4 D1 कुर्वन्वै; D5. 6 कुर्वति. — ᵇ) Dc1 लोकेषु (for कर्मसु). Ś1 K3. 4 B1 D1 T G1. 3 कर्मवित् (G3 °कृत्) (for धर्म°). — ᶜ) K4 दानो; T2 शांतो (for दान्तो). K2. 4. 5 क्रिया- (for क्षमा-). D1 दानं मैत्रा*या युक्तः. — ᵈ) B4 -तत्त्व- (for -भूत-).

25 ᵃ) Ś1 K1 यथा शक्तिर्. — D1 om. (hapl.) from. 25ᵇ up to 14. 46. 1ᶜ. — ᵇ) Dc1 विप्रे. Ś1 K1–4 G2. 3 निर्वर्तयेत्. K5 ब्राह्मणोवर्तयच्छुचिः. — ᶜ) Dc1 युक्ते. T1 G3 यजेत्; M1. 2 [ऽ]जयत् (for जयेत्). K2. 4 D2 T1 G3 सर्वं (for स्वर्गं). — ᵈ) K2 D6 शंसितव्रतः; K4 संसित°.

Colophon om. in D1. 4 T G1. 2 M1–3. — *Sub-parvan:* K2. 4 अनुगीता. — *Adhy. name:* B Dc1 Dn1 D2. 3. 5. 6 गुरुशिष्यसंवादः. — *Adhy. no.* (figures, words or both): Ś1 49; Dn1 G3 45 (as in text); M4 46. — *Śloka no.:* Dn1 25.

46

1 D1 om. 1ᵃᵇᶜ (cf. v. l. 14. 45. 25). T G1. 2 M1–3 om. the ref.. M4 ब्राह्मण (for ब्रह्मा). K3 reads 1ᶜᵈ twice. — ᶜ) K4. 5 D2 यथा शक्तिस्.

2 ᵇ) K2 -जितो; K4. 5 D1 -समो; Dc1 D4 -युतो (for -यतो). B2 सर्वेंद्रियवतो मुनिः. — ᶜ) K3 प्रिये (for प्रिय-). — ᵈ) D5. 6 धर्मसत्य-; S (except G3) सर्वधर्म- (for सत्य°). B3. 5 -रतः (for -परः).

3 ᵇ) G3 [अ]न्नानि. — ᶜ) K4. 5 Dc1 Dn1 -भैक्ष्यं; D2. 5. 6 -भक्ष्य-; D3. 4 -भक्ष-; T2 G2 M1. 4 -भैक्ष-. K (except K3) Dc1 Dn1 D1 -भुक्त्वापि; D6 -भुक्कापि; T G1. 3 M1. 2. 4 -भुग्वापि; G2 -भुक्चैव. M3 हविर्ष्यं भैक्षभुग्वापि.

4 ᵃ) Ś1 K1 M1. 3. 4 द्विष्कालम्; B3 त्रिका°. T G1. 2 जुहुयात्; G3 जिह्वानां (sic) (for जुह्वानः). M2 द्विकालमग्निर्जुह्वानं. — ᶜ) Ś1 K1. 3 B1. 2 G3 धा(K1 दा)रयेत. G3 तथा (for सदा). — ᵈ) K4 विल्वं. K2. 4. 5 B3 D1. 6 T G1 च (for वा).

5 D3 om. 5. — ᵃ) K3 D1 कर्पासिकं; Dc1 कार्पं°; T2 कार्पासकं. Ś1 चैव; K2. 5 Dn1 D1. 5. 6 चापि (for वापि). K4 क्षौमं कार्पासमेवापि. — ᵇ) B2 कृष्णाजिनम्

सर्वं काषायरक्तं स्याद्वासो वापि द्विजस्य ह ॥ ५
मेखला च भवेन्मौञ्जी जटी नित्योदकस्तथा ।
यज्ञोपवीती स्वाध्यायी अलुप्तनियतव्रतः ॥ ६
पूताभिश्च तथैवाद्भिः सदा दैवततर्पणम् ।
भावेन नियतः कुर्वन्ब्रह्मचारी प्रशस्यते ॥ ७
एवं युक्तो जयेत्स्वर्गमूर्ध्वरेताः समाहितः ।
न संसरति जातीषु परमं स्थानमाश्रितः ॥ ८
संस्कृतः सर्वसंस्कारैस्तथैव ब्रह्मचर्यवान् ।
ग्रामान्निष्क्रम्य चारण्यं मुनिः प्रव्रजितो वसेत् ॥ ९
चर्मवल्कलसंवीतः स्वयं प्रातरुपस्पृशेत् ।
अरण्यगोचरो नित्यं न ग्रामं प्रविशेत्पुनः ॥ १०
अर्चयन्नतिथीन्काले दद्याच्चापि प्रतिश्रयम् ।
फलपत्रावरैर्मूलैः श्यामाकेन च वर्तयन् ॥ ११
प्रवृत्तमुदकं वायुं सर्वं वानेयमा तृणात् ।
प्राश्नीयादानुपूर्व्येण यथादीक्षमतन्द्रितः ॥ १२
आमूलफलभिक्षाभिरर्चेदतिथिमागतम् ।
यद्भक्षः स्यात्ततो दद्याद्भिक्षां नित्यमतन्द्रितः ।
देवतातिथिपूर्वं च सदा भुञ्जीत वाग्यतः ।

---

( for मृगा° ). G3 मृगाजिनधरोपि वा. —c ) Ś1 K1 सर्व- ( for सर्वं ). K2.4 B1.2 ( marg. as in text ). 5 Dn1 D2 वा ( for स्याद् ). B3.4 Dc1 सर्वं का( B3 °र्वका )-षाय( B4 °यि )कं स्याच्च ; D5.6 काषायरक्तं ( D6 °क्ते ) वा सर्वं. —d ) K5 D1.4 द्विजस्य हि ; B1.2 द्विजोचितं ; D6 द्विजेन ह.

6 Dc1 om. 6. —a ) B2 मेखलावान् ; D3 त्रिवृत्प्रोक्षणा ( for मेखला च ). K3.5 [अ]पि ; B5 D2.4 वा ( for च ). —b ) G1 जीन- (sic) ( for जटी ). K2 corrupt ; K4.5 S ( except G3 ) नित्योदकी. K4.5 सदा ( for तथा ). D1 जटी नित्योदका सह ( sic ). —c ) K1 यज्ञोपवीते ; G3 °वीत-. —d ) K2.4.5 ह्यलुप्त- ; B Dn1 D2-6 अ( B2 ह्य )लुब्धो ; D1 ह्यगुप्त- ( for अलुप्त- ). K2.4 D1 M1.2.4 -नियम- ( for °त- ). G3 अलुप्तनियमद्युतिः.

7 a ) K3 सदैव ; B1.2 सदा च ; B4 Dc1 तथा च ( for तथैव ). T1 G1 M पूता( T1 G1 °जा )भिश्चाप्यथाद्भिस्तु ( T1 G1 °श्च ) ; G2 पूताभिः कार्यमद्भिश्च ; G3 °भिः स पवित्राभिर्. —b ) K3 तथा ; G3 अद्भिर् (for सदा). K5 -कर्मसु ( for -तर्पणम् ). B1 तथा दैवततर्पकः. —c ) Ś1 K3 भवेत्तु ; M1.2 भावने ( for भावेन ). B3 T1 G1 नियतं ; T2 G3 नियमं. M1 कुर्याद् ( for कुर्वन् ).

8 a ) B1.3 सर्गम् ; D ( except Dc1 D1 ) लोकान् ( for स्वर्गम् ). —b ) D ( except Dc1 D1 ) वानप्रस्थो जितेंद्रियः ( =16d ). — K4 D1 om. ( hapl. ) 8cd. —c ) G3 एतेषु ( for जातीषु ). —d ) B2 परमास्थानम्. Ś1 K1 आस्थितः ; M2 आश्रितं.

9 b ) K4 D1 तथैव ब्रह्मचर्यया. —c ) K2 B Dc1 Dn1 D2-6 चारण्ये ; K4 D1 योरण्यं. —d ) K4 प्रवसितो. K2 व्रजेत् ; G1 भवेत् ( for वसेत् ).

10 K5 om. ( ? hapl. ) 10ab. —a ) B5 D Dc1 D1 ) -संवासी ( for -संवीतः ). —b ) Bom. ( for स्वयं ). —d ) M1.2 ग्रामे. Ś1 K1-3 मुपुनः ).

11 a ) Ś1 K1 अर्चयेद् ; K2 °येच्च ; K4.5 D1 °यच्च ; Dc1 °यंति ( for °यन् ). B2 G1.3 अतिथिं. —b ) D6 om. च. G3 विद्यया ; M2 दद्याद्वा ( for दद्याच्च ). Ś1 K1.2.4 D1 प्रतिग्रहं ; K3 परिग्रहं ; D6 प्रतिश्रियं. —c ) Ś1 K1.3 -पत्रवनैर् ; K2.4.5 D1 -पत्रैर्वरैर् ; B1.2 -पत्रादिभिर् ; S -पत्रचयै( M1-3 °रै )र् ( for -पत्रावरैर् ). G3 वन्यैः ( for मूलैः ). —d ) K4 D1 प्रवर्ज( D1 °र्त )येत् ; K5 M1.2 च वर्तयेत्.

12 a ) D5 प्रदत्तम् ; T G स नित्यम् ( for प्रवृत्तम् ). K5 चार्यं ; D5 वापि ; D6 वाचि ; T1 G2 वा( G2 पा )-यन् ; M1.2 वायुः ( for वायुं ). —b ) Ś1 K1.3.5 Dn1 D2-6 आश्रयेत् ; K2 आ तृणं ; B1.2 ईदृशं ; T2 आवृणात् ; G2 M1.2 आतृणोत्. K4 D1 सर्वं वानेयकं तृणं ; G3 सर्वं वान्यस्तथा तृणं. —c ) K3.5 D5.6 -पूर्वेण. K2.4 D1 अश्नीयादानुपूर्वेण. —d ) D1 -दीप्तम् ; G3 -भिक्षुर् ( for -दीक्षम् ). D1 अतंद्रितं.

13 a ) Ś1 K3.5 अप्मूल- ; K1 M1.2.4 ( *inf. lin.* ) अमूल- ; K4 आमूलं ; Dn1 D2-5 समूल-. D1 T1 -शाखाद्यैर् ; M3.4 -भक्षाभिर् ( for -भि° ). B D6 समूलफलपत्राभिर् ; Dc1 समूलफलपाचाद्भिर् ; T2 G समूलफलशाखाद्यैर्. —b ) D6 अतिथिं च समागतं. —c ) K4 Dn1 D2.3.5.6 G2.3 यद्भक्ष्यं ; K5 D4 यद्भक्षं ; B ( except B3 ) D1 यद्भक्ष्यः. B3 तथा ( for ततो ). —d ) K1 D1 नित्यभिक्षाम् ; K2 नित्यं भैक्षम् ; K5 नित्यं भिक्षाम् ( by transp. ) ; G3 भक्ष्यान्नित्यम्.

निश्चयं नाधिगच्छामः संमूढाः सुरसत्तम ॥ २५
इदं श्रेय इदं श्रेय इत्येवं प्रस्थितो जनः ।
यो हि यस्मिन्रतो धर्मे स तं पूजयते सदा ॥ २६
तत्र नो विहता प्रज्ञा मनश्च बहुलीकृतम् ।
एतदाख्यातुमिच्छामः श्रेयः किमिति सत्तम ॥ २७
अतः परं च यद्गुह्यं तद्भवान्वक्तुमर्हति ।
सत्त्वक्षेत्रज्ञयोश्चैव संबन्धः केन हेतुना ॥ २८
एवमुक्तः स तैर्विप्रैर्भगवाँल्लोकभावनः ।
तेभ्यः शशंस धर्मात्मा याथातथ्येन बुद्धिमान् ॥ २९

इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## ४९

ब्रह्मोवाच ।
हन्त वः संप्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः ।
समस्तमिह तच्छ्रुत्वा सम्यगेवावधार्यताम् ॥ १
अहिंसा सर्वभूतानामेतत्कृत्यतमं मतम् ।

---

25 Dn1 missing (cf. v. l. 9). K4 om. 25 (cf. v. l. 19). D1 om. 25 (cf. v. l. 21). Dc1 om. 25. — a) D6 व्युत्पादिते; T G1 संस्थापिते; G2 उत्था°. — b) K2 B3-5 D2-4 विप्रधाविते; K5 D5 T1 °बोधिते; B1 च प्रबोधिते; B2 च प्रबाधिते; D6 विप्रबाधिते; T2 G वै प्रधावति. — c) D6 निश्चये. K2, 5 D3 M1-3 °गच्छामि (*for* °मः). — d) K2 °सत्तमाः. S श्रेयः किमिति सत्तम (T1 G1 °मः).

26 Dn1 missing (cf. v. l. 9). K4 om. 26 (cf. v. l. 19). D1 om. 26 (cf. v. l. 21). — a) K1 Dc1 श्रेयम् (for the first श्रेय). D4 इदं श्रेयमिदं श्रेयम्. — b) K2 प्रास्थितो; B D (D1 om.; Dn1 missing) व्युत्थितो (D2 °ते); S प्रस्थिता. K1 D3 G3 M जनाः. — c) Ś1 K1-3 स्थितो; K5 श्रितो; G3 स्मृतो (for रतो). G3 धर्मः. — d) G3 सततं पूजये- त्सदा.

27 Dn1 missing (cf. v. l. 9). K4 om. 27 (cf. v. l. 19). D1 om. 27 (cf. v. l. 21). K5 om. 27ab. G3 repeats 27c–28b, preceded by the ref. ऋषयः, after 14. 49. 21. — a) D4-6 तेन; T2 अत्र (for तत्र). K1-3 B (except B3) Dc1 D2, 3, 5, 6 T G1, 3 (first time) M नो वि( K2 नावि )हिता; G2 संविहता (for नो वि°). K3 D3 G3 (first time) प्राज्ञा. G3 (second time) तत्र नो विहितप्रज्ञं. — b) K2 पुनश्च बहुलीकृता. — c) Ś1 K2 B1, 5 आख्यातम्; B1 D5, 6 विज्ञातुम्; B2 वेदितुम्. Dc1 इच्छाम. K1 एतदाख्यातमिच्छामि. — d) M3, 4 इह (for इति).

28 For the repetition in G3, cf. v. l. 27. Dn1 missing (cf. v. l. 9). K4 om. 28 (cf. v. l. 19). D1 om. 28 (cf. v. l. 21). Before 28, G3 (second time) ins. ब्रह्मा. — a) B4 D5, 6 G3 (second time) तु (for च). — b) K2 D4 G1 M2 अर्हसि. G3 (second time) तत्तु धूमविवर्जितं. — K2 om. 28cd. — c) M1, 2 तत्त्व- (for सत्त्व-). D5, 6 [अ]पि (for [ए]व).

29 Dn1 missing (cf. v. l. 9). K4 om. 29 (cf. v. l. 19). D1 om. 29 (cf. v. l. 21). — a) K2, 5 तु (for स). G3 एवमापृच्छतां तेषां. — c) B5 D2-4 शशंस तेभ्यो धर्मात्मा. — d) Ś1 K1, 3 Dc1 D2, 4, 6 T G M2 यथातथ्येन. B1, 2 सर्वशः (for बुद्धिमान्).

Colophon missing in Dn1; om. in K4 D1. — *Sub-parvan*: K3 T G1 M अनुगीता. — *Adhy. name*: G3 तत्त्वनिर्णयप्रश्नः. — *Adhy. no.* (figures, words or both): Ś1 53; D4 45; T1 36; T2 G1, 2 M 35; G3 48 (as in text); M1 (*inf. lin.*) 49.

## 49

1 Dn1 missing from 1–26 (cf. v. l. 14. 48. 9). K4 om. 1–6 (cf. v. l. 14. 48. 19). D1 om. 1–6 (cf. v. l. 14. 48. 21). M3, 4 (*inf. lin.* as in text) ब्राह्मणः (for ब्रह्मा). — a) K2 हंत वै; G3 भवतां.

अस्नानं केचिदिच्छन्ति स्नानमित्यपि चापरे ।
आहारं केचिदिच्छन्ति केचिच्चानशने रताः ॥ १८
कर्म केचित्प्रशंसन्ति प्रशान्तिमपि चापरे ।
देशकालावुभौ केचिन्नैतदस्तीति चापरे ।
केचिन्मोक्षं प्रशंसन्ति केचिद्भोगान्पृथग्विधान् ॥ १९
धनानि केचिदिच्छन्ति निर्धनत्वं तथापरे ।
उपास्यसाधनं त्वेके नैतदस्तीति चापरे ॥ २०
अहिंसानिरताश्चान्ये केचिद्धिंसापरायणाः ।
पुण्येन यशसेत्येके नैतदस्तीति चापरे ॥ २१
सद्भावनिरताश्चान्ये केचित्संशयिते स्थिताः ।
दुःखादन्ये सुखादन्ये ध्यानमित्यपरे स्थिताः ॥ २२
यज्ञमित्यपरे धीराः प्रदानमिति चापरे ।
सर्वमेके प्रशंसन्ति न सर्वमिति चापरे ॥ २३
तपस्त्वन्ये प्रशंसन्ति स्वाध्यायमपरे जनाः ।
ज्ञानं संन्यासमित्येके स्वभावं भूतचिन्तकाः ॥ २४
एवं व्युत्थापिते धर्मे बहुधा विप्रधावति ।

---

D2–6 ( D2–4 after the first occurrence of $17^{ab}$ ) read $19^{cd}$. — $^{c}$ ) B ( except B1 ) Dc1 D4 केचिन् ( for चान्ये ). — $^{d}$ ) G1 मूढाः ( for मुण्डाः ). K5 किंचिद्. B3. 5 D2 च संवृताः ( for असं° ).

18 Dn1 missing ( cf. v. l. 9 ). K5 om. $18^{ab}$. — $^{a}$ ) M4 अस्यानं. — $^{b}$ ) M4 स्थानम्. K3 B Dc1 D2–4 G3 इच्छंति ; K4 D1 अन्येति ( for इत्यपि ). D5. 6 स्नानमप्यपरे जनाः. — After $18^{b}$, D1–4 repeat $17^{ab}$. — $^{c}$ ) K5 अश्नंतं ; G3 अशनं ( for आहारं ). — $^{d}$ ) K3 अनशने ; K4 D1 निर° ( for चान° ).

19 Dn1 missing ( cf. v. l. 9 ). — $^{a}$ ) B ( except B5 ) Dc1 केचित्कर्म ( by transp. ). — $^{b}$ ) Ś1 K1. 2. 5 G3 M1. 2 प्रशांतम् ; K4 नैष्कर्म्यम् ; D1 तेकर्म ( for प्रशान्तिम् ). Ś1 K1. 3. 5 इति ( for अपि ). D5. 6 T1 प्रशांतिं चा( T1 °तिम )परे जनाः ; G1 न प्रशंसंति चापरे. — K4 B4 G3 om. ( hapl. ) $19^{cd}$. B5 D2–6 read $19^{cd}$ after $17^{ab}$, D2–4 repeating it in its proper place. — $^{c}$ ) D1 -कालभुजः ; Cv -कालावुभौ ( as in text ). T चैतं ( for केचिन् ). — $^{d}$ ) M3 तद् ( for [ए]तद् ). — Ś1 K1 om. ( hapl. ) $19^{e}$–$20^{b}$. K2 om. ( hapl. ) $19^{e}$–$20^{d}$. K4 om. $19^{e}$–49. $6^{d}$. — $^{e}$ ) G2 सत्यमेके ( for केचिन्मोक्षं ). — $^{f}$ ) T पृथक्पृथक्.

20 Dn1 missing ( cf. v. l. 9 ). Ś1 K1 om. $20^{ab}$ ; K2. 4 om. 20 ( for all, cf. v. l. 19 ). — $^{a}$ ) G2 तथा न ( for धनानि ). — $^{b}$ ) B1 D1–6 अथ ( for तथा ). — $^{c}$ ) B1 Dc1 उपास्यं. D1 -साधकं ( for °नं ). D1 त्वन्ये ; M केचिन् ( for त्वेके ). T2 G2. 3 उपास्याः साधवस्त्वेके. Cv cites उपास्यां साधयंति. — $^{d}$ ) Ś1 K1. 3 ने( K3 [ऽ]न्ये )ति चान्ये तथा जनाः ( K3 विधिः ).

21 Dn1 missing ( cf. v. l. 9 ). K4 om. 21 ( cf. v. l. 19 ). D1 om. from 21 up to 14. 49. 6. — $^{a}$ ) K2 T2 G1. 2 M केचित् ( for चान्ये ). — $^{b}$ ) Dc1 T2 हिंसां. — $^{c}$ ) K2 त्वन्ये ; K3 त्वेके ; D5. 6 चान्ये ( for [इ]त्येके ). — $^{d}$ ) Ś1 तद् ( for [ए]तद् ). K3 इच्छंति ( for अस्तीति ). — After 21, K5 T1 read $23^{cd}$.

22 Dn1 missing ( cf. v. l. 9 ). K4 om. 22 ( cf. v. l. 19 ). D1 om. 22 ( cf. v. l. 21 ). K5 om. ( hapl. ) $22^{a}$–$23^{b}$. — $^{a}$ ) K1 corrupt. G3 Cv सद्भावे. Ś1 K1 तु ( for च ). — $^{b}$ ) Ś1 K1. 2 संशयते ; B5 सांख्यमते ; T G1. 2 संशयिता ; Cv °यिते ( as in text ). K2 व्रताः (sic) ( for स्थिताः ). D5. 6 केचित्संशयमास्थिताः. — $^{c}$ ) Ś1 K1. 3 शिवाद् ( for सुखाद् ). G3 दुःखान्यन्ये सुखान्यन्ये. — $^{d}$ ) D5. 6 जनाः ( for स्थिताः ).

23 Dn1 missing ( cf. v. l. 9 ). K4 om. 23 ( cf. v. l. 19 ). D1 om. 23 ( cf. v. l. 21 ). K5 om. $23^{ab}$ ( cf. v. l. 22 ). — $^{a}$ ) Ś1 K3 T G1 M2. 4 यज्ञ ; K1 G3 यज्ञा ( for यज्ञम् ). D5. 6 विप्राः ( for धीराः ). — $^{b}$ ) Ś1 K1. 3 प्रधानम् ; Dc1 प्रज्ञा° ; S दानमेव ( for प्रदानम् ). D5. 6 प्रदानमपरे जनाः. — After $23^{b}$, K5 D4–6 T read 24. B Dc1 D2. 3 transp. $23^{cd}$ and $24^{ab}$. T2 om. $23^{cd}$. K5 T1 read $23^{cd}$ after 21. — $^{c}$ ) T1 G M4 ( *inf. lin.* ) सत्यम् ( for सर्वम् ). M4 ( *inf. lin.* as in text ) एते ( for एके ). — $^{d}$ ) T1 G M4 ( *inf. lin.* ) सत्यम् ( for सर्वम् ). K1. 3 B3–5 Dc1 D2. 3 न स( D3 श )र्वमपरे जनाः.

24 For the sequence in K5 B Dc1 D2–6 T1, cf. v. l. 23. Dn1 missing ( cf. v. l. 9 ). K4 om. 24 ( cf. v. l. 19 ). D1 om. 24 ( cf. v. l. 21 ). — $^{a}$ ) K2 नयस्त्वेके ; B1. 2 Dc1 तपश्चान्ये ( Dc1 °श्चैके ). — $^{b}$ ) D6 च परे ; T G1 M1. 2 इतरे ( for अपरे ). — $^{c}$ ) K1–3 B1. 2 D2–4 G1 ज्ञान- ( for ज्ञानं ). B2 [अ]न्ये ( for [ए]के ). — $^{d}$ ) K2 इतरे जनाः ; M4 भूतिचिंतकाः.

निश्चयं नाधिगच्छामः संमूढाः सुरसत्तम ॥ २५
इदं श्रेय इदं श्रेय इत्येवं प्रस्थितो जनः ।
यो हि यस्मिन्रतो धर्मे स तं पूजयते सदा ॥ २६
तत्र नो विहता प्रज्ञा मनश्च बहुलीकृतम् ।
एतदाख्यातुमिच्छामः श्रेयः किमिति सत्तम ॥ २७
अतः परं च यद्गुह्यं तद्भवान्वक्तुमर्हति ।
सत्त्वक्षेत्रज्ञयोश्चैव संबन्धः केन हेतुना ॥ २८
एवमुक्तः स तैर्विप्रैर्भगवाँल्लोकभावनः ।
तेभ्यः शशंस धर्मात्मा याथातथ्येन बुद्धिमान् ॥ २९

इति श्रीमहाभारते आश्वमेधिकपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## ४९

ब्रह्मोवाच ।
हन्त वः संप्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः ।
समस्तमिह तच्छ्रुत्वा सम्यगेवावधार्यताम् ॥ १
अहिंसा सर्वभूतानामेतत्कृत्यतमं मतम् ।

25 Dn1 missing (cf. v. l. 9). K4 om. 25 (cf. v. l. 19). D1 om. 25 (cf. v. l. 21). Dc1 om. 25. —$^a$) D6 व्युत्पादिते; T G1 संस्थापिते; G2 उत्था°. —$^b$) K2 B3-5 D2-4 विप्रधाविते; K5 D5 T1 °बोधिते; B1 च प्रबोधिते; B2 च प्रबाधिते; D6 विप्रबाधिते; T2 G वै प्रधावति. —$^c$) D6 निश्चये. K2, 5 D3 M1-3 -गच्छामि (for °मः). —$^d$) K2 -सत्तमाः. S श्रेयः किमिति सत्तम (T1 G1 मः).

26 Dn1 missing (cf. v. l. 9). K4 om. 26 (cf. v. l. 19). D1 om. 26 (cf. v. l. 21). —$^a$) K1 Dc1 श्रेयम् (for the first श्रेय). D4 इदं श्रेयमिदं श्रेयम्. —$^b$) K2 प्रास्थितो; B D (D1 om.; Dn1 missing) व्युत्थितो (D2 °ते); S प्रस्थिता. K1 D3 G3 M जनाः. —$^c$) Ś1 K1-3 स्थितो; K5 श्रितो; G3 स्मृतो (for रतो). G3 धर्मः. —$^d$) G3 सततं पूजयेत्सदा.

27 Dn1 missing (cf. v. l. 9). K4 om. 27 (cf. v. l. 19). D1 om. 27 (cf. v. l. 21). K5 om. 27$^{ab}$. G3 repeats 27$^a$–28$^b$, preceded by the ref. ऋषयः, after 14. 49. 21. —$^a$) D4-6 तेन; T2 अत्र (for तत्र). K1-3 B (except B3) Dc1 D2, 3, 5, 6 T G1, 3 (first time) M नो वि(K2 नावि)हिता; G2 संविहता (for नो वि°). K3 D3 G3 (first time) प्राज्ञा. G3 (second time) तत्र नो विहितप्रज्ञं. —$^b$) K2 पुनश्च बहुलीकृता. —$^c$) Ś1 K2 B1, 5 आख्यातम्; B1 D5, 6 विज्ञातुम्; B2 वेदितुम्. Dc1 इच्छामः. K1 एतदाख्यातमिच्छामि. —$^d$) M3, 4 इह (for इति).

28 For the repetition in G3, cf. v. l. 27. Dn1 missing (cf. v. l. 9). K4 om. 28 (cf. v. l. 19). D1 om. 28 (cf. v. l. 21). Before 28, G3 (second time) ins. ब्रह्मा. —$^a$) B4 D5, 6 G3 (second time) तु (for च). —$^b$) K2 D4 G1 M2 अर्हसि. G3 (second time) तत्तु धूमविवर्जितं. — K2 om. 28$^{cd}$. —$^c$) M1, 2 तत्त्व- (for सत्त्व-). D5, 6 [अ]पि (for [ए]व).

29 Dn1 missing (cf. v. l. 9). K4 om. 29 (cf. v. l. 19). D1 om. 29 (cf. v. l. 21). —$^a$) K2, 5 तु (for स). G3 एवमापृच्छतां तेषां. —$^c$) B5 D2-4 शशंस तेभ्यो धर्मात्मा. —$^d$) Ś1 K1, 3 Dc1 D2, 4, 6 T G M2 यथातथ्येन. B1, 2 सर्वशः (for बुद्धिमान्).

Colophon missing in Dn1; om. in K4 D1. — *Sub-parvan:* K3 T G1 M अनुगीता. — *Adhy. name:* G3 तत्त्वनिर्णयप्रश्नः. — *Adhy. no.* (figures, words or both): Ś1 53; D4 45; T1 36; T2 G1, 2 M 35; G3 48 (as in text); M4 (*inf. lin.*) 49.

## 49

1 Dn1 missing from 1–26 (cf. v. l. 14. 48. 9). K4 om. 1–6 (cf. v. l. 14. 48. 19). D1 om. 1–6 (cf. v. l. 14. 48. 21). M3, 4 (*inf. lin.* as in text) ब्राह्मणः (for ब्रह्मा). —$^a$) K2 हंत वै; G2 नत्वा.

एतत्पदमनुद्विग्नं वरिष्ठं धर्मलक्षणम् ॥ २
ज्ञानं निःश्रेय इत्याहुर्वृद्धा निश्चयदर्शिनः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वपातकैः ॥ ३
हिंसापराश्च ये लोके ये च नास्तिकवृत्तयः ।
लोभमोहसमायुक्तास्ते वै निरयगामिनः ॥ ४
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।
तेऽस्मिँल्लोके प्रमोदन्ते जायमानाः पुनः पुनः ॥ ५
कुर्वते ये तु कर्माणि श्रद्दधाना विपश्चितः ।
अनाशीर्योगसंयुक्तास्ते धीराः साधुदर्शिनः ॥ ६
अतः परं प्रवक्ष्यामि सत्त्वक्षेत्रज्ञयोर्यथा ।
संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः ॥ ७
विषयो विषयित्वं च संबन्धोऽयमिहोच्यते ।
विषयी पुरुषो नित्यं सत्त्वं च विषयः स्मृतः ॥ ८
व्याख्यातं पूर्वकल्पेन मशकोदुम्बरं यथा ।
भुज्यमानं न जानीते नित्यं सत्त्वमचेतनम् ।
यस्त्वेव तु विजानीते यो भुङ्क्ते यश्च भुज्यते ॥ ९
अनित्यं द्वंद्वसंयुक्तं सत्त्वमाहुर्गुणात्मकम् ।
निर्द्वंद्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ॥ १०

— $^{b}$ ) T1 M मा ( for मां ). K2 सत्तम. — After 1$^{b}$, B3. 5 Dc1 D2-6 ins. :

87* गुरुणा शिष्यमासाद्य यदुक्तं तन्निबोधत ।
[ D2 तदुक्तं. ]

— $^{c}$ ) G3 तत्त्वेन ( for तच्छ्रुत्वा ). B1. 2 समस्तमेतद्व्यस्तेन. — $^{d}$ ) G3 श्रुत्वा चैव ( for सम्यगेव ). M4 [उ]प- ( for [क्ष]व- ). K2 -धार्यते.

2 Dn1 missing ; K4 D1 om. 2 ( for all, cf. v. l. 1 ). — $^{a}$ ) K2. 5 अहिंसा सत्यवचनम्. — $^{b}$ ) D3 न तत् ( for एतत् ). Ś1 K1 B3 महत्; B2 परं; D3 ततं ( for मतम् ). K2 एतत्परतरं सतं ( sic ); K3 एतत्कृत्यतरं परं; T1 G1 एतत्सत्यं तदुत्तमं. — $^{c}$ ) K5 अनुदिष्टं ( for °द्विग्नं ). — $^{d}$ ) B1. 2 साधु- ( for धर्म- ).

3 Dn1 missing ; K4 D1 om. 3 ( for all, cf. v. l. 1 ). — $^{a}$ ) K3 G1 ज्ञान-. K1 निःश्रेयम्. B1 G3 ज्ञानं निःश्रेयसं प्रा( G3 ह्या )हुर्; B2 ज्ञानिनः श्रेयमित्याहुर्; T G1. 2 M ज्ञानं निःश्रेयसमिति; Cv ज्ञानान्निश्रेयसं प्राहुर्. — $^{b}$ ) K5 B Dc1 D5. 6 निश्चित-. G3 -दर्शनाः; Cv -दर्शिनः ( as in text ). T G1. 2 M प्राहुर्वृद्धा वि( G2 °धर्मवि-; M2 °विद्धा वि-; M3. 4 °विप्रा वि )निश्चिताः. — $^{d}$ ) Ś1 K1 मुच्यंते. D5. 6 -किल्बिषैः ( for -पातकैः ).

4 Dn1 missing ; K4 D1 om. 4 ( for all, cf. v. l. 1 ). — $^{a}$ ) Ś1 ( by corr. ) D5. 6 केचिद्; B1-3 D2-4 लोका ( for लोके ).

5 Dn1 missing ; K4 D1 om. 5 ( for all, cf. v. l. 1 ). — $^{c}$ ) K5 D4 T2 G1 तस्मिँल्; G2 अस्मिँल् ( for तेऽस्मिँल् ).

6 Dn1 missing ; K4 D1 om. 6 ( for all, cf. v. l. 1 ). — $^{a}$ ) B1. 2 D2-4 च ( for तु ). — $^{c}$ ) D5. 6 प्रेम- ( for योग- ). Ś1 K1. 3 -युक्तास्तु ( for -संयुक्तास् ). — $^{d}$ ) B3-5 D2-4 नराः ( for धीराः ). T1 तत्त्व-.( for साधु- ). B1. 2 G3 ते वै निरयगामिनः ( sic ).

7 Dn1 missing ( cf. v. l. 1 ). — $^{a}$ ) T G1 ततः ( for अतः ). G1. 2 M तु ( for प्र- ). — $^{c}$ ) K4 D1 M संयोगा विप्रयोगाश्च. — $^{d}$ ) Ś1 K3 तान् ( for तन् ).

8 Dn1 missing ( cf. v. l. 1 ). D3 om. ( hapl. ) 8$^{ab}$. — $^{a}$ ) G3 विषये. Ś1 K ( except K2 ) D1. 4. 6 G3 विषयत्वं. — $^{b}$ ) D2. 4 G2 इष्यते ( for उच्यते ). — $^{c}$ ) K3 विषये; K4 D1 विनयः ( for विषयी ). D1 पुरुषे. — $^{d}$ ) M1. 2 सत्यं ( for सत्त्वं ). K4 D1 विषये स्मृतं M4 ( *inf. lin.* as in text ) °याः स्मृताः.

9 Dn1 missing ( cf. v. l. 1 ). — $^{a}$ ) D1 -कल्पे ( for °न ). K4 व्यावृत्तं पूर्वकल्पेषु. — $^{b}$ ) D2 तथा. K D1 G3 मशकोदुंबरे ( G3 °रो ) यथा. — $^{c}$ ) G2 बुध्यमानं; Cv भुज्य° ( as in text ). K3 M1. 2 समानीं ( K3 °नीत ) ( for न जानीते ). — K4 D1 om. ( hapl. 9$^{de}$. — $^{e}$ ) K2. 3 corrupt. Ś1 K1 तज्ज्ञास्त्वेवं; B Dc1 D2-6 यस्त्वेवं तं ( B1. 2 च ; Dc1 तु ); T G1. 2 ज्ञात्वैव तु ( for यस्त्वेव तु ). K5 तत्रैव ह्यनुजानीते; G3 ज्ञात्वैव तु विजानाति.

10 Dn1 missing ( cf. v. l. 1 ). K1 damaged. — $^{a}$ ) K3. 4 T2 G2. 3 अनित्य-. B D ( Dn1 missing ) नित्यं द्वंद्वसमायुक्तं. — $^{b}$ ) G2 सत्यम्. K4 D1 सत्त्वमार्ग- ( for °माहुर् ). D5. 6 मनीषिणः ( for गुणात्मकम् ). — K4 D1 om. ( ? hapl. ) 10$^{cd}$. — $^{c}$ ) K2 निर्गुणो; B3 G3 निर्ममो; B4 D2-4 निर्मलो ( for निष्कलो ). K3 M4 नित्यं.

11 Dn1 missing ( cf. v. l. 1 ). — $^{a}$ ) Ś1 K2. 4

समः संज्ञागतस्त्वेवं यदा सर्वत्र दृश्यते ।
उपभुङ्क्ते सदा सत्त्वमापः पुष्करपर्णवत् ॥ ११
सर्वैरपि गुणैर्विद्वान्व्यतिषक्तो न लिप्यते ।
जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः ।
एवमेवाप्यसंसक्तः पुरुषः स्यान्न संशयः ॥ १२
द्रव्यमात्रमभूत्सत्त्वं पुरुषस्येति निश्चयः ।
यथा द्रव्यं च कर्ता च संयोगोऽप्यनयोस्तथा ॥ १३
यथा प्रदीपमादाय कश्चित्तमसि गच्छति ।
तथा सत्त्वप्रदीपेन गच्छन्ति परमैषिणः ॥ १४
यावद्द्रव्यगुणस्तावत्प्रदीपः संप्रकाशते ।
क्षीणद्रव्यगुणं ज्योतिरन्तर्धानाय गच्छति ॥ १५
व्यक्तः सत्त्वगुणस्त्वेवं पुरुषोऽव्यक्त इष्यते ।
एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः ॥ १६
सहस्रेणापि दुर्मेधा न वृद्धिमधिगच्छति ।
चतुर्थेनाप्यथांशेन बुद्धिमान्सुखमेधते ॥ १७
एवं धर्मस्य विज्ञेयं संसाधनमुपायतः ।

---

D3 सम-. K4 D1 संज्ञागतिस्; D4 G2 M3 °गमस्; T2 °निनस्. Dc1 D3 [ए]व (for [ए]वं). D5.6 Bom. ed. समः (Bom. ed. समं) संज्ञानुगश्चैव; G3 समासज्ञानतत्त्वेन. — b) K5 B Dc1 D2–4 T यथा; G3 सदा (for यदा). K4 D1 यथा सर्वं तु दृश्यते; D5.6 स सर्वत्र व्यवस्थितः. — c) K4 D1 उपयुक्तं; T G M4 (*inf. lin.*) न सज्जते; M उपयुंक्ते (M4 °युक्तः) (for °भुङ्क्ते). Ś1 तदा (for सदा). Ś1 K1.3.5 सर्वम्; K4 D1 युक्तं; T1 सत्यं (for सत्त्वम्). — d) K2.3 B Dc1 D2–6 अपः; K4 D1 मनः; T1 रूपः (sic) (for आपः). D5.6 G2 Cv -पत्रवत् (for -पर्ण°).

12 Dn1 missing (cf. v. l. 1). — b) K2 व्यतिपाकान्; K4 D1 अभिषिक्तो; B2.5 D2.4 व्यतिसक्तो; D3 °शक्तो; D6 G1 M1.2.4 (*inf. lin.*) °षिक्तो; G3 प्रतिषिक्तो. — c) G3 लोलं. B1.2 यथा लोलः पयोबिंदुः. — d) Ś1 K1 -पर्ण-; B1 -पद्म- (for -पत्र-). G3 -संस्थितं; M3 -संश्रितः. T1 G1 पद्मपत्रेषु संस्थितः. — e) K1–3.5 B1.5 Dc1 D2.3.5.6 G1.3 M4 (*inf. lin.*) [अ]संयुक्तः (for °सक्तः). K4 D1 एवमेवाप्ययं लोलः. — f) G2.3 M च (for स्यान्).

13 Dn1 missing (cf. v. l. 1). — a) G1 दृश्यमानम् (for द्रव्यमात्रम्). Dc1 महा- (for अभूत्). K4 सर्वं (for सत्त्वं). — b) K2.5 B5 D2.3 T1 G2.3 पुरुषश्च (for °षस्य). Ś1 K1.3.5 वि- (for [इ]ति). K4 D1 निश्चितं; B5 निर्णयः (for निश्चयः). — c) D5.6 रक्तं (for कर्ता). — d) T2 G हि (for ऽपि). K4 B3 D1 अनयस्. K3 B1.2.5 D2–4 यथा (for तथा).

14 Dn1 missing (cf. v. l. 1). — a) B1–4 कश्चित्प्र-; D3 प्रकृष्टं (for यथा प्र-). K4 D1 यथा दीपमुपादाय; B5 D2.4 प्रदीपमादाय यथा (B5 कश्चिद्). — b) B यथा (for कश्चित्). — M1.2 om. (hapl.) 14c–15d. — c) K4 सत्य-; Cv सत्त्व- (as in text). — d) T G1 परमर्षिणः.

15 Dn1 missing (cf. v. l. 1). M1.2 om. 15 (cf. v. l. 14). — a) K2.4 D1 T1 Cv द्रव्यं. B1 -गुणांस्; Dc1 D1 T2 G2 Cv -गुणास्; M3.4 -गुण — b) D2 G1 प्रदीप्तः; G3 सत्त्वतः (for प्रदीपः). I प्रदीपः स प्रवर्तते. — c) B1.4 T1 G1 M3.4 क्षीणे. K2 -गुणो; K4 B3 T1 -गुण-; G1 M3.4 -गुणे. D5.6 T2 G2.3 क्षीणे द्रव्ये गुणे ज्यो(T2 G3 °णज्यो)तिर्.

16 Dn1 missing (cf. v. l. 1). K2 om. (hapl.) 16a–17b. — a) K1.3 D6 Cv व्यक्तसत्त्व-; K4 D1 व्यक्ताव्यक्त-. T G1 -गुणास्; M1 -गुणैस्. K1.5 B3.4 Dc1 D2–4 [ए]व (for [ए]वं). ❀ Cv: व्यक्तः सत्त्वगुणात्मको देहो यस्य सः। ❀ — b) G3 M3 उच्यते (for इष्यते). T G1.2 पुरुषो द्रव्य उच्यते. — c) K4 D1 तद्विप्राय (for एतद्विप्रा). — After 16, Ś1 K1.3 ins. an addl. colophon [*Sub-parvan*: K3 अनुगीता. — *Adhy. no.*: Ś1 54].

17 Dn1 missing (cf. v. l. 1). K2 om. 17ab (cf. v. l. 16). Before 17, Ś1 K1.3 ins. ब्रह्मोवाच. — a) G3 सहस्रशोपि. — b) K4 D1 न वृत्तिम्; K5 B Dc1 D2–6 न बुद्धिम्; G3 निवृत्तिं न (for न वृद्धिम्). D5.6 अनु- (for अधि-). — After 17b, M3.4 (*inf. lin.*) ins.:

88* तत्पदं समनुप्राप्तं यत्र गत्वा न शोचति ।
त्वमप्येतन्महाभाग यथोक्तं ब्रह्मवर्चसा ।
व्यक्तः सत्त्वगुणस्त्वेवं बुद्धिमान्सुखमेधते ।

[Prior half of line 3 = 16a and for the post. half, cf. 17d.]

— M3 om. (hapl.) 17cd. — c) K4 D1 अस्य (for अथ). — d) D5.6 अश्नुते (for एधते).

18 Dn1 missing (cf. v. l. 1). K2 om. (hapl.)

उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते ॥ १८
यथाध्वानमपाथेयः प्रपन्नो मानवः क्वचित् ।
क्लेशेन याति महता विनश्यत्यन्तरापि वा ॥ १९
तथा कर्मसु विज्ञेयं फलं भवति वा न वा ।
पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनम् ॥ २०
यथा च दीर्घमध्वानं पद्भ्यामेव प्रपद्यते ।
अदृष्टपूर्वं सहसा तत्त्वदर्शनवर्जितः ॥ २१
तमेव च यथाध्वानं रथेनेहाशुगामिना ।
यायादश्वप्रयुक्तेन तथा बुद्धिमतां गतिः ॥ २२
उच्चं पर्वतमारुह्य नान्ववेक्षेत भूगतम् ।
रथेन रथिनं पश्येत्क्लिश्यमानमचेतनम् ॥ २३
यावद्रथपथस्तावद्रथेन स तु गच्छति ।
क्षीणे रथपथे प्राज्ञो रथमुत्सृज्य गच्छति ॥ २४
एवं गच्छति मेधावी तत्त्वयोगविधानवित् ।
समाज्ञाय महाबुद्धिरुत्तरादुत्तरोत्तरम् ॥ २५
यथा महार्णवं घोरमप्लवः संप्रगाहते ।
बाहुभ्यामेव संमोहाद्वधं चर्च्छत्यसंशयम् ॥ २६
नावा चापि यथा प्राज्ञो विभागज्ञस्तरित्रया ।

---

$18^{b}$–$20^{a}$. — $^{b}$) D3.4 T1 स( D4 सं )साधयम्; G1 संसाधकम्. D5.6 उपासते ( for °यत: ). K4 D1 साधनं हि सुखाय तत्. — $^{c}$) T G1.2 [s]पि ( for हि ).

19 Dn1 missing ( cf. v. l. 1 ). K2 om. 19 ( cf. v. l. 18 ). — $^{a}$) K1.3 उपाधेयः; K5 G2 अपाथेयं; G3 °हाय ( for °थेयः ). Cv यथा धानमुपादेयं. — $^{b}$) K3 B2 ( marg. as in text ) T2 G2 M1 ( *sup. lin.* ) प्रसन्नो; G3 अशक्तो; M1–3 प्रच्छन्नो ( for प्रपन्नो ). D2 माधवः; D5.6 T1 G1 मनुजः ( for मानवः ). Cv प्रवपन्मनवः क्वचित् ( sic ). — $^{c}$) B1.2 क्लेशेन महता याति. — $^{d}$) K4 D1 पथि ( for [अ]पि वा ). D5.6 विनश्येदंतरापि च ( D6 °रोपि वा ).

20 Dn1 missing ( cf. v. l. 1 ). K2 om. $20^{a}$ ( cf. v. l. 18 ). — $^{a}$) B1 यथा; T2 तदा ( for तथा ). — $^{b}$) K4 corrupt. G3 मानवे ( for वा न वा ). — $^{c}$) D1 [अ]पि ( for [आ]त्म- ). K1.3.5 M3 पुरुषस्यात्मनः श्रेयः; K4 °श्चापि निःश्रेयः. — $^{d}$) K4 D1 -निदर्शनैः; Cv °नम् ( as in text ).

21 Dn1 missing ( cf. v. l. 1 ). K2 om. $21^{a}$–$22^{b}$. — $^{a}$) G3 यथावद् ( for यथा च ). Ś1 स्व-; K1 सु- ( for च ). — K4 D1 om. ( hapl. ) $21^{b}$–$22^{a}$. — $^{b}$) B3 G2 प्रवर्तते ( for प्रपद्यते ). G3 पद्भ्यां गंतुं न युज्यते. — $^{c}$) K5 अनिष्ट- ( for अदृष्ट- ). — $^{d}$) B3 D2–4 G3 तथा ( for तत्त्व- ). Ś1 K1.3.5 D2.3 -वर्जितं; B3 -वर्जिताः. — After 21, G3 repeats 14. 48. $27^{a}$–$28^{b}$ preceded by the ref. ऋषयः.

22 Dn1 missing ( cf. v. l. 1 ). K2 om. $22^{ab}$; K4 D1 om. $22^{a}$ ( for all, cf. v. l. 21 ). — $^{a}$) G3 M तद् ( for तम् ). — $^{b}$) S ( except G3 ) [ पृ ]व ( for [इ]ह ). — D4 om. $22^{cd}$. — $^{c}$) B1.2 ( marg. as in text ).3 यथावस्तु-; D5.6 गच्छत्यश्व- ( for यायादश्व- ). B2 M1.2 -प्रसुक्तेन. — $^{d}$) K2 बुद्धिमतो. G3 गतिं.

23 Dn1 missing ( cf. v. l. 1 ). — $^{a}$) K2 उच्च-; K3 तच्च; K4.5 B D ( Dn1 missing ) ऊर्ध्वं ( D1 °र्ध्वं- ). G3 उच्चपर्वतगो यद्वन्. — $^{b}$) K1.2 D2.3 नान्ववेक्षत; K5 न चावैक्षत; T G2.3 न त्ववेक्षेत; G1 सत्वं मोक्षीव ( sic ); M नन्ववेक्षेत. B Dc1 D2.4–6 भूतलं; D3 भूतजे. K4 D1 देवानामपि दुर्गमं. — $^{c}$) K2 B2 D2–4 रथिनां; T1 रथिकं; G2 M4 [अ]रथिनं ( for रथिनं ). B1.4 D4 पश्य; B2.3.5 D2.3.5.6 पश्यन् ( for पश्येत् ). — $^{d}$) K2 अचेतसं.

24 Dn1 missing ( cf. v. l. 1 ). — $^{a}$) K1 -पशुस ( sic ) ( for -पथस् ). — $^{b}$) D5 नि-; D6 न ( for तु ). — D4 om. ( hapl. ) $24^{cd}$. — $^{c}$) K2 रथं रथे; T1 G1 रथपदे; G2 रथे पथे ( for रथपथे ). D5.6 विद्वान् ( for प्राज्ञो ).

25 Dn1 missing ( cf. v. l. 1 ). — $^{a}$) K2 तथा गच्छेत मेधावी. — $^{b}$) G3 तत्त्वज्ञो मोक्षमार्गवित्. — $^{c}$) G3 समास्थाय ( for °ज्ञाय ). Bom. ed. गुणज्ञश्च ( for महाबुद्धिर् ). D5.6 परिज्ञाय गुणज्ञश्चेत्. — $^{d}$) B2 ( marg. ) उद्भवाद्; D5.6 तद्गच्छेद्; G2 उत्तराम् ( for °राद् ). K2 उत्तरोत्तरा. G3 उत्तमामुत्तरोत्तरां.

26 Dn1 missing ( cf. v. l. 1 ). — $^{a}$) K2 महार्णेन ( sic ); K4 [अ]र्णवजलं; D5.6 [अ]र्णवं महा- ( for महार्णवं ). — G2 om. $26^{b}$–$28^{a}$. — $^{b}$) Ś1 संप्रगाह्यते. B2 अप्लवं परिगाहते; G3 प्लवः समवगा°. — $^{c}$) K4 D1 बाहुमेव गतं मोहाद्. — $^{d}$) K1 B1 गच्छति; K5 D4–6 वांछति; B1.2 आच्छेति; B5 अर्हति; D2.3

अक्रान्तः सलिलं गाहेत्क्षिप्रं संतरति ध्रुवम् ॥ २७
तीर्णो गच्छेत्परं पारं नावमुत्सृज्य निर्ममः ।
व्याख्यातं पूर्वकल्पेन यथा रथिपदातिनौ ॥ २८
स्नेहात्संमोहमापन्नो नावि दाशो यथा तथा ।
ममत्वेनाभिभूतः स तत्रैव परिवर्तते ॥ २९
नावं न शक्यमारुह्य स्थले विपरिवर्तितुम् ।
तथैव रथमारुह्य नाप्सु चर्या विधीयते ॥ ३०
एवं कर्म कृतं चित्रं विषयस्थं पृथक्पृथक् ।
यथा कर्म कृतं लोके तथा तदुपपद्यते ॥ ३१
यन्नैव गन्धिनो रस्यं न रूपस्पर्शशब्दवत् ।
मन्यन्ते मुनयो बुद्ध्या तत्प्रधानं प्रचक्षते ॥
तत्र प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ।

---

वांछेति; T G1 इच्छति; G3 M4 ऋच्छति; M1. 2 मृत्युम् (for चच्छेति). K3 वाश्यमेवमसंशयं; K4 D1 गंतुं वांछत्यसंशयः (D1 °यं); M3 वधमृच्छत्यसंशयः.

27 Dn1 resumes. G2 om. 27 (cf. v. l. 26). — [a]) Dc1 D3. 6 T1 न वा (for नावा). Ś1 K1. 3 चैव; D4 वापि; G3 [इ]व च (for चापि) K2 नावया च यथा प्राज्ञो. — [b]) K2 corrupt. B2. 3 त्वविश्रया; T G1 M त( G1 त्व )रित्रवान्; G3 सरित्पयः. K4 D1 विना गच्छेद्दरित्रया. ❀ Cv: कयापि च विभागज्ञ इत्यत्र-त्वरी तरणे त्वरावान् त्वरी । तं त्रायत इति त्वरित्रा नौः । ❀ — [c]) B2 आक्रांतः; B3 अक्रांतः; B5 Dc1 आक्रांतः; D2–6 अश्रांतः. B3. 4 Dc1 G1. 3 M सलिले. K1. 3 गाहे; B4 M3 गाधे; B5 D2–6 गच्छेत् (for गाहेत्). K3 अक्रांतमखिलं गाहे. — [d]) D5. 6 G3 शीघ्रं (for क्षिप्रं). Ś1 K1. 3 M2. 4 स तरति; K5 B5 Dc1 संतरते; B4 स तरते; D3 M3 संसरते (M3 °ति). K4 D1 क्षिप्रसंतरणे ध्रुवं; B3 Dn1 D2. 4–6 क्षिप्रं (D5. 6 शीघ्रं) संतरते द्रुतं.

28 G2 om. 28[a] (cf. v. l. 26). — [a]) D1 पापं; D3 पारे (for पारं). — [b]) K1 निर्दमः; B5 दूरतः; M1. 2 निर्मलं; M4 (*inf. lin.*) निर्मलः (for निर्ममः). — [c]) Dn1 आख्यातं; G3 व्याख्याताः. D1. 4 सर्व- (for पूर्व-). — [d]) K4 B D T1 रथ- (for रथि-). K1 -पदातिनः; K3. 4 B D (except D1. 4) °तिनोः. Ś1 यथा याति पदातिकः; K2. 5 यथा (K5 °द्वा) रथपदानिलैः; G3 M (M4 *inf. lin.* as in text) यथा रथपदाति( G3 °कि )ना.

29 [a]) K1. 3 मोहात् (for स्ने°). K2 G3 आपन्नौ. — [b]) K2 तौ विनाशये (hypermetric); K5 नावि दासो; B Dc1 नावि नाशो; D3 नाविग्रसो (sic); G3 नावि दाशौ; M1. 2 नाविशादे (sic) (for नावि दाशो). D4 यथा (for तथा.). — [c]) Ś1 संबंधेन; K1 समंधेन (for ममत्वेन). K3 -भूतः स; K4 D1 -पन्नस्तु; K5 -पन्नः संस्; B1. 2. 4 T G2. 3 -भूतस्य; B5 Dn1 D2. 4–6 -भूतः संस्; Dc1 -भूतः स्वं; G3 -भूतस्तु. K2 न सत्वं नाभिभूतस्तु; D3 समत्वेनाधिभूतः संस. — [d]) D6 अत्रैव. G3 न कथंचन मुह्यति.

30 Ś1 K1. 3 om. 30. — [a]) D5. 6 शक्ताम् (for शक्यम्). K4 D1 नावमशक्यामारुह्य; K5 नावं प्राप्य न शक्यं तु. — B1 erroneously repeats 30[b] and B2 30[bcd] after 30[c]. — [b]) K4. 5 D1 T1 G2 M स्थलं; Dc1 स्थाने. K2 च; Dc1 D2. 3 [s]पि (for वि-). K2. 5 G3 -धावितुं; K4 D1 -धावति (for -वर्तितुम्). — [c]) M3 तत्र (for तथा). K4 D1 [आ]रोहम्; K5 स्थलम् (for रथम्). — [d]) K2. 4 D1. 3 नाशु; K5 न नौ-; D6 तासु (for नाप्सु).

31 [a]) K1. 5 D3 चित्र-; K2 B1–3 D1. 4 G1. 2 M1–3 वित्त; T1 M4 वित्तं; T2 वृत्तं (for चित्रं). — [b]) K2. 3 B2 विषमस्थं; T G1 विलयंतं; G2. 3 विलयस्थं; M3 विषयं स्म (for °यस्थं). — [d]) K5 तथावद्; Dn1 तथैतान् (for तथा तद्).

32 [a]) D2–4 यथा (for यन्न). D6 एवं. K1. 3 D1–3 रस्यं; K2 रूपं (for रस्यं). T G1 येनैव गंधिनो यस्य; G2 येनैव गृद्धिनोरन्यं. — [b]) K5 D5. 6 T G1 -शब्दवित्. K4 D1 स्व( D1 सु )रूपस्पर्शशब्दवित्; B2. 5 D2–4 न शब्दस्पर्शरूपवित्; Cv रूपसंस्पर्शशब्दवत्. — [c]) K5 D1–3 मन्यते; B4 मंतव्यं (for मन्यन्ते). K1. 3. 5 तन्मनो; K4 मन्यतो; B3. 5 D2–4 मनसा; B1 T1 G1 M1–3 न मनो (for मुनयो). K2 T2 G2 M4 मन्यते न (K2 च) मनोबुद्ध्या. — For 32[abc], G3 subst.:

89* रसनं रूपसंस्पर्शं शब्दवन्मन्यते मनः ।
यत्परश्च ततो बुद्ध्या.

— [d]) K2. 3 B1. 2 D6 प्रचक्ष्यते. — After 32, Ś1 K1. 3 ins. an addl. colophon [*Sub-parvan :* K3 अनुगीता. —*Adhy. no.:* Ś1 55 ].

33 Before 33, Ś1 K1. 3 ins. ब्रह्मोवाच. — [a]) T G2 ततः (for तत्र). Ś1 अव्यक्ते. K2 यत्तत्प्रधानादव्यक्तम्; K4 D1 तत्तच्छ्रद्धानम°; K5 तत्प्रधानमन° (sic); G1 ततः प्रथमम°. — [b]) K3 अविक्तस्य; T2 अल्प°; Cv अव्य° (as in text). — [c]) Hypermetric. K2. 4 B1.

महतः प्रधानभूतस्य गुणोऽहंकार एव च ॥ ३३

अहंकारप्रधानस्य महाभूतकृतो गुणः ।
पृथक्त्वेन हि भूतानां विषया वै गुणाः स्मृताः ॥३४

बीजधर्मं यथाव्यक्तं तथैव प्रसवात्मकम् ।
बीजधर्मा महानात्मा प्रसवश्चेति नः श्रुतम् ॥ ३५

बीजधर्मा त्वहंकारः प्रसवश्च पुनः पुनः ।
बीजप्रसवधर्माणि महाभूतानि पञ्च वै ॥ ३६

बीजधर्मिण इत्याहुः प्रसवं च न कुर्वते ।
विशेषाः पञ्चभूतानां तेषां वित्तं विशेषणम् ॥ ३७

तत्रैकगुणमाकाशं द्विगुणो वायुरुच्यते ।
त्रिगुणं ज्योतिरित्याहुरापश्चापि चतुर्गुणाः ॥ ३८

पृथ्वी पञ्चगुणा ज्ञेया त्रसस्थावरसंकुला ।
सर्वभूतकरी देवी शुभाशुभनिदर्शना ॥ ३९

शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
एते पञ्च गुणा भूमेर्विज्ञेया द्विजसत्तमाः ॥ ४०

पार्थिवश्च सदा गन्धो गन्धश्च बहुधा स्मृतः ।
तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून्गुणान् ॥ ४१

इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा ।

---

2. 4 Dn1 D1. 5. 6 महत्; B3. 5 Dc1 D2–4 महा-; G3 महान् (for महतः). K4 D1 -भूयस्य (for -भूतस्य).

34 $^{a}$) B D (except D1) अहंकारात्तु संभूतो. — $^{b}$) M4 -गतो (for -कृतो). Ś1 महाभूतादिका गुणाः; G3 भूतान्येवमतो गुणाः. — $^{c}$) Ś1 K1. 3 G3 [ए]व; G2 च; M4 वि- (for हि). — $^{d}$) Dc1 विषया वि-; D3 विष एव (for विषया वै). K2 गुणैः; G3 ततः (for स्मृताः).

35 $^{a}$) Ś1 बीजं धर्मि; K1. 3 B1. 4 बीजधर्मि; K4 D1 बीजधा( D1 °जं धा )न्यं; K5 जीवधर्मि; B2 G3 बीजधर्मी; Dc1 °कर्म; D5. 6 °धर्मे; T1 बीजं धर्मं; Cnp जीवधर्मं (for बीज°). K1 B1. 2. 5 Dn1 D2–6 तथा. K2 त्रीजधर्माणि तान्याहुः. — K2 om. (hapl.) 35$^{bc}$. — $^{b}$) G3 वै (for [ए]व). K3 प्रसवात्मिकं; B3. 4 Dc1 प्रभवात्मकं. B1. 2. 5 Dn1 D2–6 प्रसवात्मकमेव च. — $^{c}$) Ś1 K1. 3 B2 G3 बीजधर्मी; B1. 4 Dc1 T G1 °धर्मो (for °धर्मा). — $^{d}$) K2 प्रसवं न च कुर्वते; K5 प्रसवश्चेत-नस्तु तं.

36 $^{a}$) D6 वीत- (for बीज-). B1. 2 Dn1 D5. 6 -धर्मः. B2 हि; B5 च (for तु). M1 [अ]हंकारं. T G1 बीजधर्मास्त्व( T1 °स्त- ; G1 °त्सा )हंकारात्; G3 °धर्मी अहंकारः. — D4 om. (hapl.) 36$^{cd}$. — $^{c}$) K4 D1 जीव-; D3 बीजी-. Ś1 K1 -धर्मीणि; B3 -भूतानि. G3 तथा च बीजधर्माणि. — $^{d}$) B1. 2 पंच च; D6 यानि च (for पञ्च वै).

37 $^{a}$) K2–4 D3 -धर्माणि; B1. 2. 5 T G1. 3 M2–4 -धर्मिणम्; D6 -धर्माण. K2 D1 तानि (for इति). — $^{b}$) D4 प्रसवे; T G1 प्रसवश्. K4 D1 नैव; B1. 2 Dn1 D2–6 च प्र- (for च न). B5 प्रसवं च महामते. — $^{c}$) B (except B5) Dc1 विषयाः. Dc1 सर्व- (for पञ्च-). K4 D1 M विशेषः पं( K4 D1 °षात्पं )चभूतानि; G3 विशेषतः पंचभूतास्. — $^{d}$) Ś1 K1. 3 विभु-; K4 D1 चित्त-; B5 Dn1 D4–6 चित्तं (for वित्तं). T1 M1. 2 अशेषणं; G3 विशेषिणं. K2 तेषां वै क्रमशो गुणः; Dc1 तेषां चित्तं विधीयते.

38 K4. 5 om. 38. — $^{a}$) B2 तथैव (for तत्रैक-). — $^{d}$) K2 D1 [ए]व (for [अ]पि). K2 चतुर्गुणैः; K3 °गुणः; Dc1 °गणाः; D1 °गुणं.

39 $^{a}$) B5 D1 पृथिवी (hypermetric). K2 D2–4 प्रोक्ता (for ज्ञेया). — $^{b}$) K2 corrupt. K4 D1 G3 यत्र; K5 Dn1 D2. 3. 5. 6 T G1. 2 चर-; B6 रस-; M4 तत्र (for त्रस-). G3 M -जंगमा (for -संकुला). — M1–3 om. 39$^{cd}$; M4 reads it *inf. lin.* — $^{c}$) K4 D1 सर्वभूतकरा देवा. — $^{d}$) Ś1 K1 Dn1 D1. 5. 6 -निदर्शिनी; K3. 4 Dc1 °र्शनी; K5 °र्शिना.

40 Ś1 K1. 3 om. (hapl.) 40–42. — $^{a}$) K5 शब्दं स्पर्शं; D4 शब्दस्पर्शस्. — $^{b}$) B3 रसगंधस्तथैव च. — $^{d}$) K2 D6 -सत्तम; B3. 4 Dc1 -पुंगवाः (for -सत्तमाः).

41 Ś1 K1. 3 om. 41 (cf. v. l. 40). — $^{a}$) K2 G3 तथा (for सदा). D5. 6 ज्ञेयो (for गन्धो). — $^{b}$) K5 बहुलः (for बहुधा). D2–4 मतः; D5. 6 स्मृताः. K4 B1. 2 D1 गंधाश्च बहुधा स्मृताः. — $^{c}$) D5. 6 गंधस्य तस्य वक्ष्यामि. — $^{d}$) K2. 4. 5 B1. 2 M3 गुणान्बहून् (by transp.); D4 बहुगुणान्.

42 Ś1 K1. 3 om. 42 (cf. v. l. 40). — $^{a}$) K2 [अ]निल-; M1. 2 नित्य- (for [अ]निष्ट-). — $^{b}$) K2 D5. 6 मधुरोम्ल-; T1 G3 °राम्ल-. K4 मधुरः कटुकस्तथा. — $^{c}$) D5. 6 निर्हाराः; G2. 3 नीहार-. K5 D2 G3 M1–3 संगतः (for संहतः). G1 नीहारसमयः स्निग्-

निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ।
एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ॥ ४२
शब्दः स्पर्शस्तथा रूपं रसश्चापां गुणाः स्मृताः ।
रसज्ञानं तु वक्ष्यामि रसस्तु बहुधा स्मृतः ॥ ४३
मधुरोऽम्लः कटुस्तिक्तः कषायो लवणस्तथा ।
एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ॥ ४४
शब्दः स्पर्शस्तथा रूपं त्रिगुणं ज्योतिरुच्यते ।
ज्योतिषश्च गुणो रूपं रूपं च बहुधा स्मृतम् ॥ ४५
शुक्लं कृष्णं तथा रक्तं नीलं पीतारुणं तथा ।
ह्रस्वं दीर्घं तथा स्थूलं चतुरस्राणु वृत्तकम् ॥ ४६

एवं द्वादशविस्तारं तेजसो रूपमुच्यते ।
विज्ञेयं ब्राह्मणैर्नित्यं धर्मज्ञैः सत्यवादिभिः ॥ ४७
शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरुच्यते ।
वायोश्चापि गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ॥ ४८
उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ।
कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो दारुणो मृदुः ॥ ४९
एवं द्वादशविस्तारो वायव्यो गुण उच्यते ।
विधिवद्ब्राह्मणैः सिद्धैर्धर्मज्ञैस्तत्त्वदर्शिभिः ॥ ५०
तत्रैकगुणमाकाशं शब्द इत्येव च स्मृतः ।
तस्य शब्दस्य वक्ष्यामि विस्तरेण बहून्गुणान् ॥ ५१

---

$B_{1.2}$ $D_{2-4}$ विषद; $M_{1-3}$ विदश ( for विशद ). $K_{5}$ निर्मल: ( for एव च ). — $^{f}$) $K_{2.4.5}$ $D_{1}$ $G_{3}$ इत्यथ; $B_{4}$ इत्यपि; $G_{1}$ $M_{3}$ उच्यते ( for इत्युत ).

43 $K_{4}$ $D_{1}$ om. $43^{ab}$. — $^{a}$) $D_{2}$ $G_{3}$ च रूपं च ( for तथा रूपं ). — $^{b}$) $Ś_{1}$ $K_{1}$ $B_{4}$ $D_{2.5.6}$ द्रवश् ( for रसश् ). $K_{2.5}$ $M_{1.2}$ चापो. $T_{2}$ तथा ( for स्मृता: ). $K_{3}$ द्रवश्चापां गुण: स्मृत:. — $K_{5}$ om. ( hapl. ) $43^{cd}$. — $^{c}$) $Ś_{1}$ $K_{1}$ $B_{2}$ $G_{3}$ च; $K_{3}$ प्र- ( for तु ). — $^{d}$) T $G_{2.3}$ च ( for तु ). $K_{1.4}$ स्मृता:. $K_{2}$ $D_{1}$ रसाश्च ( $D_{1}$ °स्तु ) बहुधा स्मृता:.

44 $^{a}$) $K_{1.2}$ $D_{5.6}$ मधुरोम्ल-; $K_{5}$ $M_{3}$ °राम्ल:; $T_{1}$ °राम्ल-. $K_{2.4}$ $D_{1}$ कटुरिनग्ध: ( for °स्तिक्त: ). — $^{c}$) $K_{1.3}$ एष ( for एवं ). — $^{d}$) $K_{4}$ $D_{1}$ तथा ( for स्मृत: ). $G_{3}$ रसो वारिसमुद्भव:.

45 $^{a}$) $K_{1.4.5}$ B $D_{c1}$ $D_{4.5}$ शब्द-. — $D_{c1}$ om. $45^{b}$; $Ś_{1}$ reads it on marg. — $^{c}$) $G_{3}$ ज्योतिषां. $K_{3}$ $B_{2}$ $D_{c1}$ $G_{2}$ तु ( for च ). $K_{2}$ तथा ( for गुणो ). — $^{d}$) $T_{1}$ $G_{1}$ रूपश्च बहुधा स्मृत: ( sic ).

46 $^{a}$) $M_{1.2}$ रक्तं ( for कृष्णं ). $K_{1}$ $D_{1}$ नीलं; $K_{3}$ पीतं ( for रक्तं ) $K_{2}$ शुक्लनीलस्तथा कृष्णं. — $^{b}$) $K_{2}$ रक्त-; T $M_{1.2}$ नील- ( for नीलं ). $K_{3}$ रक्तारुणं ( for पीता° ). $K_{4}$ $D_{1}$ रक्तं पीतं तथैव च. — $^{c}$) $K_{1}$ $D_{3}$ $G_{3}$ ह्रस्व-. $K_{2.3}$ दीर्घस्. $D_{n1}$ $D_{5.6}$ कृशं ( for तथा ). $G_{3}$ स्थूणं ( for स्थूलं ). $B_{1.2.4}$ $D_{c1}$ स्थूलं ह्रस्वं तथा दीर्घं; $B_{3}$ स्थूलं सूक्ष्मं तथा पीतं. — $^{d}$) $K_{1}$ T $G_{1.2}$ $M_{3}$ चतुरश्राणु; $K_{2}$ °रस्रात्तु; $K_{3}$ $B_{2}$ $G_{3}$ °रश्रं च ( $K_{3}$ तु ); $K_{4.5}$ $B_{1}$ $D_{1.2}$ °रस्रं च; $B_{1.3}$ $D_{c1}$ $D_{n1}$ $D_{3-6}$ °रस्रं तु; $B_{4}$ ( marg. ) °रस्रोणु; $M_{1.2.4}$ °रश्रोणु. $Ś_{1}$ $K_{2-5}$ $D_{1-4}$ वर्तुलं; $K_{1}$ वर्तनं; B $D_{c1}$ $D_{n1}$ $D_{5.6}$ वृत्तवत्.

47 $^{a}$) $Ś_{1}$ $K_{1.3}$ एतद्; $K_{2}$ तच्च ( for एवं ). K $D_{1}$ तदेवं दशविस्तारं. — $^{b}$) $G_{3}$ ज्योतिषो ( for तेजसो ). — $^{c}$) $D_{c1}$ ब्रह्मणैर्; $G_{3}$ ब्रह्मणो ( for ब्राह्मणैर् ). $B_{1-3.5}$ $D_{c1}$ विद्वन्; $B_{4}$ विद्वं; $D_{n1}$ $D_{5.6}$ वृद्धैर्; $D_{2-4}$ सिद्धैर् ( for नित्यं ). — $^{d}$) $Ś_{1}$ $K_{1.3}$ तत्त्व- ( for सत्य- ). $D_{3}$ -वादिनै:.

48 $^{a}$) $B_{1.2}$ शब्द: स्पर्शश्; $D_{5.6}$ स्पर्शशब्दौ. $Ś_{1}$ $K_{1.3-5}$ $B_{4}$ $D_{1.5.6}$ तु ( for च ). — $^{b}$) $T_{2}$ द्विगुणं; Cv °णो ( as in text ). $B_{1.2}$ द्विगुणौ वायोर्हि पंडितै: ( hypermetric ). — $K_{4}$ om. ( hapl. ) $48^{c}$–$50^{b}$. — $^{d}$) $Ś_{1}$ ( by corr. ) शब्दश् ( for स्पर्शश् ). $D_{1}$ तु ( for च ).

49 $K_{4}$ om. 49 ( cf. v. l. 48 ). — $^{a}$) $K_{5}$ T $G_{1.2}$ दु:खं ( for दु:ख: ). B D ( except $D_{1}$ ) रूक्ष: शीतस्तथैवोष्ण:. — $^{b}$) $Ś_{1}$ $K_{1-3}$ $B_{1.2.5}$ $D_{2.3}$ विषद ( for विशद ). — $^{c}$) $Ś_{1}$ चिक्कन:; $K_{1}$ चिक्कन:; $K_{2}$ चित्तल:; $G_{1}$ रक्षण: ( for चिक्कण: ). $B_{3}$ स्निग्ध: ( for श्लक्ष्ण: ). $D_{1}$ कथिन: पित्तल: श्लक्ष्ण:; $G_{3}$ कलीनश्चिक्कण: शुष्क:. — $^{d}$) $Ś_{1}$ $K_{1}$ पृच्छिलो; $K_{2.5}$ $D_{1.3}$ पिच्छलो; $K_{3}$ प्रश्निलो; $D_{6}$ पिशलो. S ( except $G_{3}$ ) पिच्छिलो मृदुदारुण:.

50 $K_{4}$ *om.* $50^{ab}$ ( cf. v. l. 48 ). — $^{b}$) $K_{3}$ वायोर्हि ( for वायव्यो ). — $D_{4}$ om. $50^{cd}$. — $^{c}$) $D_{2}$ विज्ञेयो ( for विधिवद् ). $K_{4}$ विज्ञेयो ब्राह्मणै: सिद्धिर्. — $^{d}$) $Ś_{1}$ $K_{2.3}$ $B_{6}$ $T_{1}$ $G_{1.2}$ मंत्रज्ञैस् ( for धर्म° ). $T_{2}$ सत्त्व-; $M_{3}$ सत्य- ( for तत्त्व- ). $K_{5}$ -वेदिभि: ( for -दर्शिभि: ). $B_{4}$ $G_{3}$ धर्मज्ञै: सत्यवादिभि:; $D_{2.3}$ मंत्रज्ञैर्धर्मदर्शिभि:.

51 $^{a}$) $M_{3}$ यत्र ( for तत्र ). $B_{2}$ $D_{3}$ [ए]व ( for

षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा ।
अतःपरं तु विज्ञेयो निषादो धैवतस्तथा ॥ ५२
इष्टोऽनिष्टश्च शब्दस्तु संहतः प्रविभागवान् ।
एवं बहुविधो ज्ञेयः शब्द आकाशसंभवः ॥ ५३
आकाशमुत्तमं भूतमहंकारस्ततः परम् ।
अहंकारात्परा बुद्धिर्बुद्धेरात्मा ततः परः ॥ ५४
तस्मात्तु परमव्यक्तमव्यक्तात्पुरुषः परः ।
परावरज्ञो भूतानां यं प्राप्यानन्त्यमश्नुते ॥ ५५

इति श्रीमहाभारते आश्वमेधिकपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## ५०

ब्रह्मोवाच ।
भूतानामथ पञ्चानां यथैषामीश्वरं मनः ।
नियमे च विसर्गे च भूतात्मा मन एव च ॥ १
अधिष्ठाता मनो नित्यं भूतानां महतां तथा ।

---

[ए]क- ). G3 आकाशः. — $^{b}$ ) K4 B4 D1 स; B2 G3 सं- ( for च ). Dc1 स्मृतं. — $^{c}$ ) K4 शब्दः प्र-; D3 शब्दश्च ( for शब्दस्तु ). — $^{d}$ ) B1. 2 D1. 5. 6 S गुणान्बहून् ( by transp. ).

52 $^{a}$ ) Ś1 K1. 3. 5 B5 Dn1 D2–6 षड्जर्षभः ( B5 °भं ) स गांधारो; K2 षड्जऋषभगंधारां; K4 D1 खड्गऋषभगांधारा; B3. 4 Dc1 षड्जऋषभगांधारा ( B4 Dc1 °रौ ); G3 गांधारः षड्जऋषभौ. — $^{b}$ ) Dn1 D6 मध्यमं. G2 स्मृतः ( for तथा ). G3 मध्यमश्चैव पंचमः. — $^{c}$ ) K3 विज्ञेयं; B4 °यौ. B1. 2 तथा परौ च विज्ञेयौ. — $^{d}$ ) K3 M3 निषधो; K4 D1 नैषादो; D5. 6 निषाधो. K2 दैतवस् ( sic ); K3 दैवतस्; D4 वैधवस् ( sic ) ( for धैवतस् ). B1. 2 निषादधैवतावपि.

53 K4 D4 om. 53$^{ab}$. — $^{a}$ ) Ś1 शब्द इष्टोप्यनिष्टश्च; K1. 3 शब्दः स इष्टोनिष्टश्च; K2 D1 इष्टानिष्टश्च शब्दोत्र; K5 B Dc1 Dn1 D2. 3. 5. 6 इष्टश्चानिष्टशब्दश्च ( K5 °ब्दोत्र ). — $^{b}$ ) Ś1 K1. 3 संघशः; B5 संभूतः ( for संहतः ). Dc1 परिभागवान्; D1 प्रति°; T2 G3 प्रतिभावनात्; G2 M प्रतिभानवान्. — $^{c}$ ) B1. 2 दशगुणो; B3. 5 D ( except D1 ) दशविधो ( for बहु° ). K4 यस्तु ( for ज्ञेयः ). — $^{d}$ ) B2 चाकाश-.

54 $^{a}$ ) T G आकाश. K4 D1 आकाशमुक्तभूतस्य. — $^{b}$ ) K4 D1 तथा ( for ततः ). K4 B3. 5 Dn1 D1. 2. 4. 5 परः; G3 [ऽ]परः ( for परम् ). — $^{c}$ ) G2 तदा; M परो ( for परा ). G2 अहंकारस्ततो बुद्धिर्. — $^{d}$ ) Ś1 K1 D2–6 तथा ( for ततः ). K2–4 T1 G1. 2 M3 परं.

55 $^{a}$ ) K3 परमम् ( for तु परम् ). B2 अव्यक्ताद् ( for °क्तम् ). K4 D1 तस्मात्तु स परोव्यक्तो. — $^{b}$ ) K2 परं; D5. 6 स्मृतः ( for परः ). B2 पुरुषः पर इत्यपि. — $^{c}$ ) K4 B3–5 Dc1 Dn1 D1. 4–6 पराप( K4 D1 °ह्य )-रज्ञो. — $^{d}$ ) K3 प्राप्य च ( for यं प्राप्य ). K2. 4 D1 संप्रा( K2 यं प्रा )प्य न निवर्तते; K5 B Dc1 Dn1 D2–6 विधिज्ञः ( D3 °ज्ञं ) सर्वकर्मणां. — After 55, K5 B D ( except D1 ) ins.:

90* सर्वभूतात्मभूतात्मा गच्छत्यात्मानमक्षरम् ।

[ B1. 2 अव्ययं; D6 आत्मना ( for अक्षरम् ). Dn1 भूतानामादिमव्ययं ( for the post. half ). ]

Colophon om. in T G1. 2 M1–3, while M4 reads it *inf. lin. sec. m.* — *Sub-parvan:* K3 अनुगीता. — *Adhy. name:* G3 गुणविवरणं. — *Adhy. no.* ( figures, words or both ): Ś1 56; B1. 2 D4 46; Dn1 M4 ( *inf. lin.* ) 50; G3 49 ( as in text ).

## 50

1 S ( except G3 M4 ) om. the ref. K4 D1 ब्राह्मण ( for ब्रह्मा ). — $^{a}$ ) B1. 2 अपि; D2–4 इह ( for अथ ). — $^{b}$ ) D2. 3 तथैषाम्; T G2 अथै°; G1 सर्वे°; G3 अन्ये° ( for यथै° ). K3 ईश्वरो. — $^{c}$ ) K2 निसर्गे; Dc1 विमर्दे ( for विसर्गे ). D3 om. ( hapl. ) from च up to बुद्धिरैश्वर्यमा ( in 2$^{c}$ ). — $^{d}$ ) T G भूतानां ( for °त्मा ). M उच्यते ( for एव च ).

2 D3 om. up to बुद्धिरैश्वर्यमा ( in 2$^{c}$ ) ( cf. v. l. 1 ). D4 om. 2$^{ab}$. — $^{a}$ ) T G1. 2 अधिष्ठातृ-. — $^{b}$ ) K5 महतस्. Dc1 यथा ( for तथा ). K3 भूतात्मा महता तथा. — G3 repeats 2$^{cd}$, after 4. — $^{c}$ ) D4 बुद्धेर्; M1–3. 4 ( *inf. lin.* as in text ) बुद्धिम्. T1

बुद्धिरैश्वर्यमाचष्टे क्षेत्रज्ञः सर्व उच्यते ॥ २
इन्द्रियाणि मनो युङ्क्ते सदश्वानिव सारथिः ।
इन्द्रियाणि मनो बुद्धिं क्षेत्रज्ञो युञ्जते सदा ॥ ३
महाभूतसमायुक्तं बुद्धिसंयमनं रथम् ।
तमारुह्य स भूतात्मा समन्तात्परिधावति ॥ ४
इन्द्रियग्रामसंयुक्तो मनःसारथिरेव च ।
बुद्धिसंयमनो नित्यं महान्ब्रह्ममयो रथः ॥ ५
एवं यो वेत्ति विद्वान्वै सदा ब्रह्ममयं रथम् ।
स धीरः सर्वलोकेषु न मोहमधिगच्छति ॥ ६

अव्यक्तादि विशेषान्तं त्रसस्थावरसंकुलम् ।
चन्द्रसूर्यप्रभालोकं ग्रहनक्षत्रमण्डितम् ॥ ७
नदीपर्वतजालैश्च सर्वतः परिभूषितम् ।
विविधाभिस्तथाद्भिश्च सततं समलंकृतम् ॥ ८
आजीवः सर्वभूतानां सर्वप्राणभृतां गतिः ।
एतद्ब्रह्मवनं नित्यं यस्मिंश्चरति क्षेत्रवित् ॥ ९
लोकेऽस्मिन्यानि भूतानि स्थावराणि चराणि च ।
तान्येवाग्रे प्रलीयन्ते पश्चाद्भूतकृता गुणाः ।
गुणेभ्यः पञ्चभूतानि एष भूतसमुच्छ्रयः ॥ १०

---

आधत्ते; $G_1$ आचक्षे. — $^d$) $K_4$ $D_1$ सत्य; $B_1$ स तु; $B_{2.4.5}$ $M_4$ सत्त्व; $B_3$ $D_{c1}$ $D_{n1}$ $D_{2.3.5.6}$ च स; $D_4$ स च; $G_{2.3}$ (both times) सर्वम्; $M_{1.2}$ सत्यम्; $M_3$ सत्त्वम्; Cv सर्वे (as in text). $K_5$ क्षेत्रज्ञः स विमुच्यते.

3 $B_4$ om. (hapl.) $3^{ab}$. — $^a$) $K_4$ $D_{n1}$ $D_{3.6}$ युक्ते; $T_2$ भुंक्ते. — $^c$) $K_{1.2.4}$ $B_{3-5}$ D S (except $T_2$ $G_3$) बुद्धिः. — $^d$) $K_3$ $B_{3-5}$ $D_{n1}$ $D_{2-4}$ $M_4$ क्षेत्रज्ञे. $Ś_1$ $K_{1.3}$ योजयेत्; $B_{3-5}$ $D_{c1}$ $D_{n1}$ $D_4$ M युज्यते. $B_{1.2}$ युंक्ते क्षेत्रज्ञ एव च; $D_{5.6}$ क्षेत्रज्ञे युज्यते परा.

4 $D_4$ om. 4. — $^a$) $K_2$ सदा बुद्धि-; $K_4$ $B_{1-4}$ $D_{c1}$ $D_{1-4}$ $M_{1-3.4}$ (*inf. lin.* as in text) महाबुद्धि-; $B_5$ $D_{n1}$ $D_{5.6}$ महदश्व-; $T_1$ $G_1$ महाभूति- (for °भूत-). — $^b$) $K_3$ $G_2$ बुद्धिः; $T_2$ बुद्धिं. $D_{5.6}$ -संयमिनं. — $K_4$ om. (hapl.) $4^c$–$6^b$. — $^c$) B D (except $D_1$; $D_4$ om.) $T_1$ $G_3$ $M_{1.2}$ समारुह्य (for त°). — After 4, $G_3$ repeats $2^{cd}$.

5 $K_4$ om. 5 (cf. v. l. 4). — $^a$) $K_3$ $D_{c1}$ $D_1$ इंद्रियाग्रा($D_1$ °श्र)मसंयुक्तो; $G_3$ °याणि मनो युंक्ते. — $^b$) $B_2$ (marg.) -सारथिम्. — $G_3$ om. $5^c$–$7^b$. — $^c$) $K_5$ -संयमगो; $D_3$ -संजयने; $D_4$ -संयमिनो. — $^d$) $Ś_1$ $K_{3.5}$ $B_{4.5}$ महा- (for महान्).

6 $K_4$ om. $6^{ab}$ (cf. v. l. 4). $G_3$ om. 6 (cf. v. l. 5). — $^b$) $K_5$ यदा (for सदा). $K_2$ सदा ब्रह्मर्षयमयं (sic). — $^c$) $K_4$ $D_1$ वीरः (for धीरः). $Ś_1$ $K_{1-3}$ $B_4$ $D_{n1}$ $D_{5.6}$ -भूतेषु (for -लोकेषु). — $^d$) $B_{1.2}$ उप- (for अधि-).

7 $G_3$ om. $7^{ab}$ (cf. v. l. 5). — $^a$) $B_1$ अवज्ञादि; $D_{c1}$ अव्यक्ताद्य; Cv °क्तादि (as in text). — $^b$) $K_2$ $M_3$ तत्र; $D_{n1}$ $D_{5.6}$ सह-; $T_1$ चर्म-; $T_2$ $G_{1.2}$ $M_4$ चर- (for त्रस-). $B_3$ $D_{n1}$ $D_{5.6}$ -जंगमं (for लम्). $K_{4.5}$ $D_{1-4}$ सत्त्वं ($K_4$ $D_1$ °र्वं) स्थावरज.... — $^c$) B D (except $D_1$) सूर्यचंद्र-; $T_2$ इंद्रसूर्य-. $K_5$ -प्रभं (for -प्रभा-). — $^d$) $D_{1.3.4}$ -मंडलं (for -मण्डितम्). $K_{2.4.5}$ नक्षत्रग्रहमंडितं.

8 $D_4$ om. $8^{ab}$. — $^b$) $K_2$ $G_1$ -मंडितं (for -भूषितम्). $K_3$ सर्वतः समलंकृतं. — $^c$) $Ś_1$ $K_{1.3}$ $B_{1-3.5}$ $D_{2-4}$ तथैवाद्भिः; $K_2$ तथापाभिः; $K_4$ $D_1$ तथा ज्योतिः; $K_5$ तथा वाग्भिः; $B_4$ $D_{c1}$ $D_{n1}$ $D_{5.6}$ $G_3$ तथा चा-($G_3$ वा)द्भिः; $M_{1.2}$ तथाभिश्च (sic) (for तथाद्भिश्च). — $^d$) $Ś_1$ $K_1$ $B_{1-3}$ $D_{2.3.6}$ $G_3$ सर्वतः; $K_2$ सद्भक्षं (for सततं).

9 $D_4$ om. $9^{ab}$. — $^a$) $K_{2.4}$ $B_{3.4}$ $D_{n1}$ $D_{2.3.5.6}$ $T_2$ आजीवं; $K_5$ °व्यं; $T_1$ $G_1$ अजितः. — $^b$) $B_4$ $D_1$ $G_3$ गतिं. — $^c$) $K_4$ $D_1$ ब्रह्म च तन्; $B_5$ ब्रह्ममयं; $D_{n1}$ $D_5$ (marg. as in text).$_6$ °परं; $D_{3.4}$ °वरं; $T_1$ °सवं; $G_3$ $M_4$ (*inf. lin.* as in text) Cv °पदं; M °रथं (for °वनं). $Ś_1$ $K_{1.3}$ दिव्यं; $K_5$ गीतं (for नित्यं). — $^d$) $K_2$ यत्र; $K_5$ $B_{3-5}$ $D_{c1}$ $D_{n1}$ $D_{5.6}$ तस्मिंश् (for य°). $B_{1.2}$ $D_{2-4}$ तस्मिन्रमति क्षेत्रवित्; S क्षेत्रज्ञो यत्र तिष्ठति.

10 $^a$) $K_5$ क्षेत्रे (for लोके). $G_2$ तानि (for यानि). $B_{1.2}$ सर्वाणि; $B_{3-5}$ D (except $D_1$) सत्त्वानि (for भूतानि). — $^b$) B D (except $D_{1.3}$) त्रसानि ($D_{2.4-6}$ चराणि) स्थावराणि च. — $^c$) $D_{c1}$ [अ]प्सु (for [अ]ग्रे). $B_5$ वि- (for प्र-). — $^d$) $Ś_1$ K $B_{3.4}$ $D_{1.5.6}$ पश्चाद्भू-($K_2$ यथा भू)तकृतो गुणः. — $^e$) $B_4$ $D_{c1}$ सर्व- (for पञ्च-). — $^f$) $K_4$ $D_1$ सूते; $D_{n1}$ मूल- (for भूत-). $B_{1.2}$ $G_2$ M -समुच्चयः (for °च्छ्रयः).

11 $D_4$ om. 11. — $^a$) $Ś_1$ देवमानुष्यगंधर्वाः. — $^b$)

देवा मनुष्या गन्धर्वाः पिशाचासुरराक्षसाः ।
सर्वे स्वभावतः सृष्टा न क्रियाभ्यो न कारणात् ॥ ११
एते विश्वकृतो विप्रा जायन्ते ह पुनः पुनः ।
तेभ्यः प्रसूतास्तेष्वेव महाभूतेषु पञ्चसु ।
प्रलीयन्ते यथाकालमूर्मयः सागरे यथा ॥ १२
विश्वसृग्भ्यस्तु भूतेभ्यो महाभूतानि गच्छति ।
भूतेभ्यश्चापि पञ्चभ्यो मुक्तो गच्छेत्प्रजापतिम् ॥ १३
प्रजापतिरिदं सर्वं तपसैवासृजत्प्रभुः ।
तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ १४
तपसश्चानुपूर्व्येण फलमूलाशिनस्तथा ।

त्रैलोक्यं तपसा सिद्धाः पश्यन्तीह समाहिताः ॥ १
ओषधान्यगदादीनि नानाविद्याश्च सर्वशः ।
तपसैव प्रसिध्यन्ति तपोमूलं हि साधनम् ॥ १६
यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १७
सुरापो ब्रह्महा स्तेयी भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥ १८
मनुष्याः पितरो देवाः पशवो मृगपक्षिणः ।
यानि चान्यानि भूतानि त्रसानि स्थावराणि च ॥ १९
तपःपरायणा नित्यं सिध्यन्ते तपसा सदा ।

---

$K_{2.4.5}$ $D_1$ S पिशाचोरगराक्षसाः. — $^{c}$) $B_5$ सर्वः (for सर्वे). $K_{1.2}$ स्पृष्टा ($K_2$ °ष्ट्वा); $B_5$ सृष्टो. $B_3$ सर्वेभ्यो भावतः सृष्टा. — $^{d}$) $Ś_1$ $K_{1.3}$ कर्मणा; $D_3$ कारयेत् (for °णात्).

12 $^{a}$) $Dc_1$ -भृते; $Dn_1$ $D_{5.6}$ -सृजो; $D_1$ -कृतौ; Cv -कृतो (as in text). — $^{b}$) $K_2$ $D_5$ $G_1$ जायंते हि; B $Dc_1$ $Dn_1$ $D_{2-4.5}$ (before corr.).$_6$ $M_3$ जायंतीह; $M_{1.2.4}$ यजंते ह. — $^{c}$) $M_3$ त्वेष्वेव; $M_4$ (*inf. lin.* as in text) ते त्वेवं. $M_{1.2}$ तेभ्यः प्रभूतास्तैस्तत्त्वं. — $^{e}$) $T_2$ प्रसूयंते (*for* प्रली°). $K_4$ यथाकाले; $B_{1.2}$ $D_{2-4}$ °स्थानम्. — $^{f}$) $K_2$ corrupt. $K_4$ $D_1$ सागरं.

13 $D_4$ om. $13^{ab}$. — $^{a}$) $K_2$ विश्वसृज्यस्; $K_4$ B (except $B_1$) $D_{1-3}$ Cnp °सृग्यस्. $D_{5.6}$ हि; $T_1$ $G_{1.2}$ M च; $G_3$ Cnp स (for तु). B $Dc_1$ $D_{2.3}$ भूतानां. $K_5$ विश्वकृद्वसुभूतेभ्यो. — $^{b}$) $K_4$ $D_1$ -भूतादि (for -भूतानि). $K_2$ पंच वै (*for* गच्छति). $Dn_1$ $D_{5.6}$ महाभूतास्तु सर्वशः. — $^{c}$) $K_3$ [स]भि; $M_{3.4}$ [ए]व (for [अ]पि). $K_3$ $D_{3.4.6}$ पंचेभ्यो. T $G_{1.2}$ $M_{1.2}$ एतेभ्यश्चैव भूते($M_{1.2}$ पंच)भ्यो. — $^{d}$) $K_2$ मुक्ते; $B_4$ $Dc_1$ T युक्तो. $K_{2.4.5}$ $D_1$ $T_1$ $G_2$ प्रजापतिः; B $Dc_1$ $Dn_1$ $D_{2-6}$ परां गतिं.

14 = 12. 155. 2; (var.) Manu. 11. 243. — $^{a}$) $K_2$ पुनः (for इदं). — $^{b}$) B D (except $D_1$) मनसा (for तपसा). T $G_1$ सृजते (for [ए]वासृजत्). — $^{c}$) $K_4$ $B_{1.4}$ $Dc_1$ $Dn_1$ $D_{2.5.6}$ $G_2$ देवान् (for वेदान्). $K_3$ तथा वेदाय ऋषयस्; $K_5$ तथैव वेद्यं तत्सर्वं. — $^{d}$) $K_2$ तपस्यां; $M_{1.2}$ तथैव (for तपसा).

15 = (var.) Manu. 11. 236. — $^{a}$) $K_3$ $B_2$ $D_4$ तपसाश्; $K_4$ $D_1$ $T_1$ M तापसाश्. $K_{1.4.5}$ $D_{1.6}$ $T_1$ -पूर्वेण. — $^{b}$) $K_5$ $B_{1.2}$ -मूलाशनस्. — $^{c}$) $D_6$ आलोक्ये (for त्रैलोक्यं). $K_{2.4}$ $D_1$ तापसाः; $K_3$ तपसः. — $^{d}$) $Dc_1$ $D_3$ ह; $T_1$ हि (for [इ]ह). $Dc_1$ समाधिताः. $Ś_1$ $K_{1.3}$ पश्यंत्यृ($K_1$ °श्यन्सि)द्धिसमन्विताः.

16 = (var.) 12. 155. 4; (var.) Manu. 11. 237. $D_4$ om. 16. — $^{a}$) $Ś_1$ ओषधीनि. $D_3$ औषधीनि गदादीनि (sic). — $^{c}$) $Ś_1$ $K_{1-3.5}$ $B_4$ $Dn_1$ प्रसिध्यंते; $K_4$ $D_1$ °ध्येत; $D_{5.6}$ °सिद्धंते. — $^{d}$) $T_1$ स हि मूलं स साधनं (sic); $G_1$ तपोमूलैव सा° (sic).

17 = (var.) Manu. 11. 238. $K_2$ om. $17^{ab}$. — $^{ab}$) $K_4$ $D_1$ दुरारा($K_4$ °सा)ध्यं; $K_5$ °पायं; $B_1$ °श्रातं; $T_1$ °गाधं; $G_1$ दुरघ्रायं; $G_3$ दुरात्मा च; Cv °म्नायं (as in text). $Ś_1$ $K_{1.3}$ transp. दुराम्नायं and दुराधर्षं. $Ś_1$ $K_{1.3}$ $Dn_1$ $D_{5.6}$ $T_2$ दुरुत्सहं; $K_4$ $D_1$ दुर($K_4$ °रा)त्ययं; $G_1$ दुराह्वयं (for दुरन्वयम्). — $^{c}$) $B_4$ सिद्धं (for साध्यं). — $^{d}$) $K_2$ पुरतःक्रमं; $K_3$ दुरतिक्षमं.

18 $^{a}$) S स्तेनो (for स्तेयी). $Ś_1$ K $D_1$ सुरापो संमतादायी ($Ś_1$ $K_1$ मायी; $K_3$ माये). — $18^{cd}$ = Manu. 11. $239^{cd}$. — $^{c}$) $K_2$ प्रसुप्तेन; $B_1$ श्रुतस्तेन (for सुतप्तेन). — $^{d}$) $K_2$ B (except $B_1$) $Dn_1$ $D_{1-6}$ $T_1$ $G_{1.2}$ $M_{1.2}$ मुच्यते.

19 $D_4$ om. $19^{a}$–$20^{b}$. — $^{ab}$) $G_3$ transp. पितरो and पशवो. — $^{d}$) $D_{2.3.6}$ T $G_2$ चराणि (for त्रसानि). $K_{2.4.5}$ $D_1$ $G_{1.3}$ स्थावराणि चराणि च.

20 $D_4$ om. $20^{ab}$ (cf. v. l. 19). — $^{a}$) $D_3$ तृप्सा (sic) (for तपः). $K_4$ $D_1$ तपःपरायणानां च. — $^{b}$)

थैव तपसा देवा महाभागा दिवं गताः ॥ २०
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।
अहंकारसमायुक्तास्ते सकाशे प्रजापतेः ॥ २१
ध्यानयोगेन शुद्धेन निर्ममा निरहंकृताः ।
प्राप्नुवन्ति महात्मानो महान्तं लोकमुत्तमम् ॥ २२
ध्यानयोगादुपागम्य प्रसन्नमतयः सदा ।
सुखोपचयमव्यक्तं प्रविशन्त्यात्मवत्तया ॥ २३
ध्यानयोगादुपागम्य निर्ममा निरहंकृताः ।
अव्यक्तं प्रविशन्तीह महान्तं लोकमुत्तमम् ॥ २४
अव्यक्तादेव संभूतः समयज्ञो गतः पुनः ।
तमोरजोभ्यां निर्मुक्तः सत्त्वमास्थाय केवलम् ॥ २५
विमुक्तः सर्वपापेभ्यः सर्वं त्यजति निष्कलः ।
क्षेत्रज्ञ इति तं विद्याद्यस्तं वेद स वेदवित् ॥ २६
चित्तं चित्तादुपागम्य मुनिरासीत संयतः ।
यच्चित्तस्तन्मना भूत्वा गुह्यमेतत्सनातनम् ॥ २७
अव्यक्तादि विशेषान्तमविद्यालक्षणं स्मृतम् ।

---

D2.6 सिध्यते. K1 Dc1 G1 तदा; K3 B1.2.5 (marg.) D2.5 T तथा (for सदा). K4 D1 सिध्यंते सर्वसंपदः (D1 °दं); D3 सिध्यंति तपसा तथा. — $^{c}$) K4 D1 लोका; D3 देवी (for देवा). — $^{d}$) K3 B1 Dn1 D2.3.6 -माया (for -भागा).

21 K4 D1 om. 21–36. D4 om. $21^{cd}$. — $^{c}$) B3 D2.3 अनहंकारसंयुक्तास्. — $^{d}$) M2 संकाशे. K2 Dn1 D5.6 M2 प्रजापते.

22 K4 D1 om. 22 (cf. v. l. 21). — $^{a}$) M1.2 ज्ञान- (for ध्यान-). D3 -योगेषु (for -योगेन). Ś1 K1.3 सिद्धेन (for शुद्धेन). — $^{b}$) K3 D5 निरहंकृतः. K1 D6 निर्म(K1 °र्द)मो निरहंकृतः. — $^{c}$) Dn1 D2.5.6 T1 G3 आप्नुवंति.

23 K4 D1 om. 23 (cf. v. l. 21). T2 G1 om. (hapl.) 23–24. M1–3 transp. $23^{ab}$ and $23^{cd}$; M4 reads $23^{ab}$ *inf. lin. sec. m.* — $^{a}$) K5 B2 D (except Dc1; D1 om.) T1 G2.3 M4 -योगम् (for -योगाद्). — Ś1 K1 om. (hapl.) $23^{b}$–$24^{a}$. — $^{b}$) K2.3.5 B4.5 Dc1 G3 M4 -गतयः; T2 G2 -मनसः (for -मतयः). M1–3 प्रसन्नगतयस्तदा. — D4 om. (? hapl.) $23^{c}$–$24^{b}$. — $^{c}$) K2 सुखोपगम्यम्; K5 सुखापगमम्; B3 सुखोपचर्यम्; Dc1 अथोपचयम्; D6 सुखाय च यम्; T1 G2 M सुखो(T1 °लो)पशमम्; G3 °पायनम्. B4 इत्युक्तं (for अव्यक्तं). ❀ Cv: सुखोपायमव्यक्तमित्यत्र । ख इति ब्रह्मेति श्रुतेः । खं परमात्मानम् । ❀ — $^{d}$) K2 corrupt. G3 प्रभवंति (for प्रविशन्ति). K5 [अ]चलं ध्रुवं; B1.2.5 Dc1 Dn1 [आ]त्मविच्चया (Dc1 °था; Dn1 °माः); B4 D2.3.5.6 °चिंतया; T1 °मायया; Cv °वत्तया (as in text).

24 K4 D1 om. 24 (cf. v. l. 21). T2 G1 om. 24; D4 om. $24^{ab}$; Ś1 K1 om. $24^{a}$ (for all, cf. v. l. 23). — $^{a}$) T1 अपागम्य. — $^{b}$) K1.3 निर्दमा; K2 D6 निर्ममो. B1.2 निरहंक्रियाः; D5.6 °हंकृतः. T1 G2 येन बीजसमाधगः. — K1 om. $24^{cd}$; Ś1 reads marg. — $^{c}$) K2 T1 अव्यक्तः. Ś1 (marg.) ऽ महात्मानो. — $^{d}$) K5 B D (except D3.6; D: T1 G2 महतां; M1–3.4 (*inf. lin.* as in text (for महान्तं).

25 K4 D1 om. 25 (cf. v. l. 21). — $^{a}$) G2 संभूताः. T G1 अव्यक्तात्ते च संभूताः; M °: संभूतः. — $^{b}$) K3 समसंख्या-; K5 Dn1 D2–6 °संज्ञां; B1.3–5 सत्त्वसंज्ञां; B2 समसंख्यां (for समयज्ञो). T G1.2 गताः; G3 गतेः. Cv cites संगात्संज्ञो गता. Ś1 K1 समसंख्यागतः परः; K2 °संख्यामतः परं. — D4 om. $25^{cd}$. — $^{c}$) B1.2 निर्मुक्तं; M2 °क्ताः. Ś1 K1–3 रजस्तमोभ्यां निर्मुक्तः.

26 K4 D1 om. 26 (cf. v. l. 21). K3 om. $26^{ab}$. — $^{a}$) B3–5 Dc1 Dn1 D5.6 निर्मुक्तः. — $^{b}$) Ś1 K1 Dn1 D2 T2 G2.3 सृजति (for त्य°). K1.2.5 Dn1 M1.2 निष्कलं; M4 (*inf. lin.*) निष्फलः. D3.4 सर्वं सृजति केव(D4 निष्फ)लं; D5.6 [ऽ]खिलं सृजति निष्कलं. — $^{c}$) Ś1 K1.2.5 D4 क्षेत्रज्ञम्; M4 (*inf. lin.*) सर्वज्ञ. — $^{d}$) G2 विद्यात् (for वेद). M1–3.4 (*inf. lin.* as in text) सर्व- (for वेद-).

27 K4 D1 om. 27 (cf. v. l. 21). — $^{a}$) G3 चित्तिश्; M4 (*inf. lin.*) चित्तिं (for चित्तं). K1.3 D5 M1–3.4 (*inf. lin.* as in text) Cv चित्याद्. Ś1 K1.3.5 D2–5 उपास्य (for °गम्य). — $^{b}$) K2 M1.2 संशयः; D5.6 संतपाः; T G3 संयुतः (for संय°). — D4 om. $27^{cd}$. — $^{c}$) S तच् (for यच्). M3 तन्मनो. Ś1 K1–3 यच्चित्त(K2 °च्छिन्न)स्तन्मयो भाति (K2 भावो; K3 याति); K5 °त्तभून्मनो भावो; B D (D1.4 om.) यच्चित्तं त(B3 चिंत्तं यत्त)न्मनोव(B3.4 D3 °योव)श्यं. — $^{d}$) T G M3.4 ग्राह्यमेतत्; M1.2 ग्राह्यते तत् (for गुह्यमेतत्). K1.3 पुरातनं (for सना°).

निबोधत यथा हीदं गुणैर्लक्षणमित्युत ॥ २८
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥ २९
कर्म केचित्प्रशंसन्ति मन्दबुद्धितरा नराः ।
ये तु बुद्धा महात्मानो न प्रशंसन्ति कर्म ते ॥ ३०
कर्मणा जायते जन्तुर्मूर्तिमान्षोडशात्मकः ।
पुरुषं सृजतेऽविद्या अग्राह्यममृताशिनम् ॥ ३१
तस्मात्कर्मसु निःस्नेहा ये केचित्पारदर्शिनः ।
विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः ॥ ३२
अपूर्वममृतं नित्यं य एनमविचारिणम् ।
य एनं विन्दतेऽऽत्मानमग्राह्यममृताशिनम् ।
अग्राह्योऽमृतो भवति य एभिः कारणैर्ध्रुवः ॥ ३३
अपोह्य सर्वसंकल्पान्संयम्यात्मानमात्मनि ।
स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते ॥ ३४

---

28 K4 D1 om. 28 (cf. v. l. 21). — $^{b}$) K3 अविद्यं. D4 -विषयं (for -लक्षणं). — $^{c}$) K3 B D (D1 om.) G3 तथा (for यथा). K2 दीनं; B3 [आ]ह्लादं; T G1. 2 ज्ञानं; G3 M हीनं (for हीदं).

29 K4 D1 29 om. (cf. v. l. 21). — $^{a}$) B4 द्व्यक्षरं. — M1. 2 om. (hapl.) $29^{bc}$. — $^{b}$) Ś1 K1 द्व्यक्षरं; K3 त्र्यक्षरो. K5 उच्यते (for शाश्वतम्). — K2. 5 om. (hapl.) $29^{cd}$. — $^{c}$) B4 T G1 M3. 4 तु; G3 हि (for च). — $^{d}$) G4 [इ]ह; M तु (for च).

30 K4 D1 om. 30 (cf. v. l. 21). — $^{a}$) Ś1 K1. 3 [इ]ह प्रति- (for केचित्प्र-). — $^{b}$) G3 कर्म- (for मन्द-). K2. 5 B D (except Dc1; D1 om.) G3 -बुद्धिरता; T G1. 2 °तया (for °तरा). — $^{c}$) G3 एतद् (for ये तु). K2. 3 T G1–3 बुद्ध्या; B (except B3) D (D1 om.) वृद्धा. — $^{d}$) B1. 2 D2–4 कर्म तत्; G2 धर्मतः (for कर्म ते). Ś1 K1. 3 प्रशंसंति न कर्मणा (K3 °णः).

31 K4 D1 om. 31 (cf. v. l. 21). D4 om. $31^{cd}$. — $^{c}$) B Dc1 Dn1 ग्रसते; D2. 3 गृह्यते; M2 सृज्यते; Cv सृजते (as in text). Ś1 K1. 3. 5 G3 पुरुषः सृज(K5 °ज्य)तेविद्याम्; D6 पुरुषं विद्याग्रसत्तेन (sic). — $^{d}$) G1. 2 त्वग्राह्यम्. Cnp आशिताशितम्. Ś1 B3–5 Dn1 D2. 3 तद्ग्राह्यममृताशिनां; K1–3. 5 अग्राह्याममृताशनः; B1. 2 दुर्ग्राह्यममृताशिनां; Dc1 तद्ग्राह्यममृतात्मकं; D5. 6 तद्गुह्यममृताशिनां; T त्वग्राह्यममृताशनं; G3 न ग्राह्यमविनाशिनीं.

32 K4 D1 om. 32 (cf. v. l. 21). T G1 om. (hapl.) $32^{a}$–$33^{d}$. — $^{a}$) G3 M1. 2 निस्नेहो. K2 तस्मान्मुनिः परः स्नेहा (sic). — $^{b}$) K2 M2 पर- (for पार-). K3 M3 -दर्शनः. G2 ये केचित्समदर्शनाः; G3 यः कश्चित्पारदर्शनः. — $^{c}$) K2 यः (for ऽयं). — $^{d}$) B2 कर्मसु यः (for °मयः). — After 32, Dn1 D4–6 ins.:

91* य एवममृतं नित्यमग्राह्यं शश्वदक्षरम् ।
वश्यात्मानमसंश्लिष्टं यो वेद न मृतो भवेत् ।

[ D5. 6 repeat line 2 after $33^{d}$. — (L. 2) D6 (second time) मृताशिनम् (for वश्यात्मानम्). ]

33 K4 D1 om. 33 (cf. v. l. 21). T G1 om. $33^{abcd}$ (cf. v. l. 32). D4 om. $33^{ab}$. — $^{a}$) Ś1 K1. 3. 5 Dn1 D2. 3. 5. 6 अकृतं; B3 असृतं (for अमृतं). — $^{b}$) Ś1 K1. 3. 5 D2. 3 य(K3 त)थैनम् (for य एनम्). K2. 5 Dn1 D2. 3. 5. 6 अपराजितं; G2 M अविधा(M1. 2 °पि धा)रयन्; G3 अभिचारिणं (for अवि°). Cnp कूटस्थमपराजितं; Cv स्वयैनमभिचारिणं. — $^{c}$) M स (for य). Ś1 K1. 3 B3 Dn1 D5. 6 G2 एवं (D6 °व) (for एनं). B1–3. 5 Dn1 D2. 4–6 विंदेद्; G2 विंदत. K2 एवं विंदतिमात्मानं (sic); B4 विंदेतात्मानमेवं यो; Dc1 विंदेताशनमेवं हि. — $^{d}$) Ś1 अमृतात्मभिः; K1. 3 °यनं (K3 °णं); K2. 5 Dn1 D2–4 °शनं; B3. 5 °शिनां; B4 अमिताशिनां; D5. 6 अविकारिणं. Dc1 योग्राह्यममृताशिनां; G3 अमेयमविनाशनं. — After $33^{d}$, D5. 6 repeat line 2 of 91*. D5. 6 om. $33^{ef}$. — $^{e}$) T2 G1. 3 ह्यमृतो (hypermetric) (for ऽमृतो). Ś1 K1. 3 T1 G2 अग्राह्यो ह्यमृतो भाति; K2 Dc1 M1. 2 अग्राह्यामृतो भवति. — $^{f}$) K5 B1. 2 (marg.). 3–5 Dc1 Dn1 D2–4 G2. 3 M1. 2 स (for य). K2 B5 G2. 3 M1. 2 ध्रुवं; K5 बुधः (for ध्रुवः).

34 K4 D1 om. 34 (cf. v. l. 21). — $^{a}$) K2 अग्राह्य; Dc1 उपोह्य; G1 आपोह्य. S (except G3) सर्वान् (for सर्व-). B2. 4. 5 (also as in text) G3 -संस्कारान् (for -संकल्पान्). Dn1 D5. 6 आ(Dn1 अ)योज्य चित्त(Dn1 सर्व)संस्कारान्. — $^{b}$) K2 संयमात्मानम्; T2 G1 संयता°. B4. 5 Dc1 D2–4 आत्मना (for °नि). — $^{c}$) G1. 2 न (for स). K5 तं; T G1. 2 तु (for तद्). K2 च तं; D4 -मयं (for शुभं). B1. 5 चेति (for वेत्ति). — $^{d}$) K2 B4 T G3 तस्माद्. K2 D2–4 जायते; K5 ज्ञायते (for विद्यते).

प्रसादेनैव सत्त्वस्य प्रसादं समवाप्नुयात् ।
लक्षणं हि प्रसादस्य यथा स्यात्स्वप्नदर्शनम् ॥ ३५
गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः ।
प्रवृत्तयश्च याः सर्वाः पश्यन्ति परिणामजाः ॥ ३६
एषा गतिरसक्तानामेष धर्मः सनातनः ।
एषा ज्ञानवतां प्राप्तिरेतद्वृत्तमनिन्दितम् ॥ ३७
समेन सर्वभूतेषु निःस्पृहेण निराशिषा ।
शक्या गतिरियं गन्तुं सर्वत्र समदर्शिना ॥ ३८
एतद्वः सर्वमाख्यातं मया विप्रर्षिसत्तमाः ।
एवमाचरत क्षिप्रं ततः सिद्धिमवाप्स्यथ ॥ ३९

गुरुरुवाच ।

इत्युक्तास्ते तु मुनयो ब्रह्मणा गुरुणा तथा ।
कृतवन्तो महात्मानस्ततो लोकानवाप्नुवन् ॥ ४०
त्वमप्येतन्महाभाग यथोक्तं ब्रह्मणो वचः ।
सम्यगाचर शुद्धात्मंस्ततः सिद्धिमवाप्स्यसि ॥ ४१

वासुदेव उवाच ।

इत्युक्तः स तदा शिष्यो गुरुणा धर्ममुत्तमम् ।
चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान् ॥ ४२
कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह ।
तत्पदं समनुप्राप्तो यत्र गत्वा न शोचति ॥ ४३

C. 14. 1
B. 14. 5
K. 14.

---

35 $K_4$ $D_1$ om. 35 ( cf. v. l. 21 ). — $^a$ ) $Dn_1$ $D_{5.6}$ प्रसादे च; T $G_{1.2}$ M °दाद् ( for °देन ). $G_3$ च; Cv हि ( for [ए]व ). — $^b$ ) Ś$_1$ परमाप्नुयात्; $Dc_1$ सर्वेमा°. — $D_4$ om $35^{cd}$. — $^c$ ) $B_{1.5}$ $D_{2.3}$ तु; $D_6$ यत् ( for हि ). — $^d$ ) $K_2$ यथा ते; $M_{1.2}$ यथावत् ( for यथा स्यात् ). $B_3$ सुस- ( for स्वप्न- ).

36 $K_4$ $D_1$ om. 36 ( cf. v. l. 21 ). — $^a$ ) $D_6$ गतिरेका; T $G_1$ तस्मादेषां ( for गतिरेषा ). $Dc_1$ $D_4$ युक्तानां; $D_3$ यज्ञानां ( for मुक्तानां ). Ś$_1$ $K_{1.3}$ गतिः परेषां भूतानां. — $^b$ ) $K_5$ $D_{2-4}$ ज्ञाने ( for ज्ञान- ). Ś$_1$ $K_{1.3}$ या ज्ञानपरिनिष्ठिता; $G_3$ यज्ञानां परिनिष्ठिता. — $^c$ ) $D_4$ वृत्तयश्च यथा सर्वाः. — $^d$ ) Ś$_1$ $K_{1.3.5}$ $B_{1.4.5}$ $Dc_1$ $D_{3.6}$ परिमाणजाः; $B_2$ °मार्गजाः.

37 $K_2$ om. $37^a$–$38^b$. — $^a$ ) $K_4$ $B_{2.4}$ $D_1$ $G_3$ $M_4$ ( *inf. lin.* ) अशक्तानाम्; $B_5$ अयु°; $Dn_1$ $D_{5.6}$ विर°. — $^c$ ) $K_3$ $T_2$ $G_2$ एषां. $B_{3-5}$ $Dc_1$ $D_{2-4}$ वृत्तिर् ( for प्राप्तिर् ). $B_{1.2}$ एषा स्थानव( $B_2$ °र )तां वृत्तिर्. — $^d$ ) T $G_1$ अतंद्रितं; $G_3$ सनातनं ( for अनिन्दितम् ). $D_{5.6}$ एतज्ज्ञानमनुत्तमं. — After 37, $G_3$ ins.:

92* निःसङ्गेनैव तत्सर्वं निराशीपादलोपनात् ।

38 $K_2$ om. $38^{ab}$ ( cf. v. l. 37 ). $K_4$ $D_1$ om. 38. — $^a$ ) $B_2$ समेषु ( for °न ). — $^b$ ) $K_1$ M निःस्पृहेन. $B_{1.2}$ निराशि( $B_1$ °सि )ना ( for °शिषा ). $Dc_1$ निःस्पृहेन निराक्षरा. — $^c$ ) Ś$_1$ शक्तिर् ( for गतिर् ). — $^d$ ) $K_2$ -दर्शिभिः; $K_3$ $M_{1.2}$ -दर्शना; $D_6$ -दर्शिनां.

39 $^a$ ) Ś$_1$ $K_{1.3}$ वै; $G_2$ च ( for वः ). $M_4$ सम्यग् ( for सर्वम् ). — $^c$ ) $K_2$ $Dc_1$ $D_{1.3}$ $T_1$ $G_1$ आचरतः. $K_1$ एवमाचरति शुभ्रं. — $^d$ ) $G_3$ तस्मिन् ( for ततः ). — After 39, Ś$_1$ $K_{1.3}$ $D_4$ ins. an addl. colophon [ *Sub-parvan :* $K_3$ अनुगीता. — *Adhy. no.:* Ś$_1$ 57; $D_4$ 47 ].

40 $K_4$ $D_1$ ब्राह्मण ( for गुरुर् ). — $^a$ ) $K_2$ एवमुक्तास् ( for इत्युक्तास्ते ). $K_{4.5}$ $D_1$ $G_3$ $M_3$ इत्युक्ता गुरुणा तेन; T $G_{1.2}$ $M_{1.2.4}$ °क्ता गुरुणा ते तु. — $^b$ ) $K_5$ $D_5$ ( marg. ) ब्राह्मणा; $D_6$ ऋषयो ( for ब्रह्मणा ). Ś$_1$ $K_{1-3}$ पुत्रवत्; $K_5$ $T_1$ $G_1$ मुनयस् ( for गुरुणा ). $K_2$ $D_{5.6}$ $G_3$ तदा ( for तथा ). $K_4$ $D_1$ $G_3$ $M_4$ मुनयो ब्रह्मणा त( $D_1$ ब्राह्मणास्त )था; $B_{3-5}$ $Dc_1$ $Dn_1$ $D_{2-4}$ गुरुणा ब्रह्मणा तथा. — $^c$ ) $D_3$ महात्मानं. — $^d$ ) $K_4$ $Dn_1$ $D_{1.5.6}$ लोकम्; $K_5$ कामम्. $K_2$ अवाप्नुयुः; $K_3$ $B_{3.5}$ $D_{3.4}$ $G_2$ °प्नुयात्; $B_{1.2}$ ( before corr. ) $Dc_1$ $M_2$ °सवान्.

41 $K_4$ $D_1$ om. ( hapl. ) 41–42. S ( except $G_3$ ) repeats 41 after 43. — $^a$ ) $T_1$ $G_2$ ( both both times ).$_3$ [ए]वं; $T_2$ ( both times ) [ए]तं ( for [ए]-तन् ). $D_3$ महाभाग्य; $G_3$ °प्राज्ञ. — $^b$ ) $D_{4-6}$ मया ( for यथा ). Ś$_1$ ब्राह्मणो; $M_{1-3}$ ( all first time ) ब्रह्मणा. $D_6$ मनः ( for वचः ). — $^c$ ) Ś$_1$ $K_{1-3.5}$ $B_5$ शुद्धात्मा; $D_{2-4}$ धर्मांस्त्वं ( for शुद्धात्मंस् ). $G_3$ त्वमप्याचर शुद्धात्मा. — $^d$ ) M ( all second time ) तपः ( for ततः ).

42 $K_4$ $D_1$ om. 42 ( cf. v. l. 41 ). $K_2$ कृष्ण; $G_3$ श्रीभगवान् ( for वासुदेव ). — $^b$ ) $K_1$ धर्मसत्तम. — $^c$ ) $D_{2-4}$ धर्मं ( for सर्वं ). — $^d$ ) $B_3$ सिद्धिम् ( for मोक्षम् ). $D_{3.6}$ अवाप्नुवान्.

43 $^a$ ) $G_3$ सहसा ( for स तदा ). — $^b$ ) $D_{4.6}$ -कुलो-

अर्जुन उवाच ।

को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन ।
श्रोतव्यं चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो ॥ ४४

वासुदेव उवाच ।

अहं गुरुर्महाबाहो मनः शिष्यं च विद्धि मे ।
त्वत्प्रीत्या गुह्यमेतच्च कथितं मे धनंजय ॥ ४५
मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह ।
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत ॥ ४६
ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन्कुरुनन्दन ।
सर्वपापविशुद्धात्मा मोक्षं प्राप्स्यसि केवलम् ॥ ४७
पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते ।
मया तव महाबाहो तस्मादत्र मनः कुरु ॥ ४८
मया तु भरतश्रेष्ठ चिरदृष्टः पिता विभो ।
तमहं द्रष्टुमिच्छामि संमते तव फल्गुन ॥ ४९

वैशंपायन उवाच ।

इत्युक्तवचनं कृष्णं प्रत्युवाच धनंजयः ।
गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै ॥ ५०
समेत्य तत्र राजानं धर्मात्मानं युधिष्ठिरम् ।
समनुज्ञाप्य दुर्धर्ष स्वां पुरीं यातुमर्हसि ॥ ५१

इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

---

द्भव; M3 °द्वहः. — c ) G3 तत्त्वया समनुप्राप्तं. — After 43, S ( except G3 ) repeats 41.

44 Dc1 om. 44. — a ) K4 D1 कोसौ हि; K6 कस्त्वसौ ( for को न्व° ). D5.6 को वासौ ब्राह्मणो विष्णो. — b ) B3 महायशाः ( for जनार्दन ). — c ) G3 ज्ञातव्यं ( for श्रो° ). D5.6 वै; T G1.2 M1.2.4 यन् ( for चेन् ). K2.4.5 D1 G3 तद् ( for [ए]तद् ). M3 च ( for वै ). — d ) T2 G1.3 वै ( for मे ). B2 D4 प्रभो.

45 Dc1 om. the ref. K2 D1 श्रीकृष्ण; K4.5 कृष्ण; G3 श्रीभगवान् ( for वासुदेव ). — a ) G3 महाभाग ( for °बाहो ). — b ) G3 शिष्यश्. T1 G1.2 M हि ( for च ). — c ) B3 प्रतीत्या ( for त्वत्प्रीत्या ). K2 मे; D2-6 ते; G3 वै ( for च ). — d ) K2 D5.6 च; K3.5 B ( except B2 ) Dc1 Dn1 D3 G3 ते; T G1.2 M वै ( for मे ).

46 a ) K1.4 D1 यदि ( for मयि ). G1 चेत् ( for ते ). G3 मम चेदास्ति वै भक्तिर्. — b ) K1 गुरु- ( for कुरु- ). D5 -कुलोद्भव. — c ) D4 मत्वा ( for श्रुत्वा ). K4 D1 अध्यात्ममेव तच्छ्रुत्वा.

47 a ) K2 B1 M आचीर्णो; G3 आचारो. — b ) B D ( except D1 ) धर्मोस्मिन्नरिकर्षण ( B5 D2.3 °र्शन ). — c ) B5 -कर्म- ( for -पाप- ). B D ( except D1 ) -विनिर्मुक्तो ( for -विशुद्धात्मा ). — d ) B2 प्राप्स्यति; S ( except G2 ) आप्स्यसि ( for प्रा° ). D5.6 मोक्षे प्राप्स्यति केवलं.

48 b ) D2 -कालम्. — c ) G3 महाभाग ( for °बाहो ). — d ) D5.6 एतन्मतं ( for अत्र मनः ).

49 a ) K5 तथा ( for मया ). — b ) K2 B1 D3 चिरं; K5 चिराद् ( for चिर- ). K4 पितामहः; B D ( except D1 ) T2 पि( D6 स्थि )ता प्रभुः ( T2 °भो ). — d ) Some MSS. फाल्गुन; G3 भारत.

50 Ś1 K2-6 D1 om. the ref. — a ) D6 कृष्णः. — b ) K4 M2 धनंजयं. — *After* 50b, T G M4 ( *inf. lin. sec. m.* ) ins. :

93* यदिष्टं कुरु सर्वस्यापीश्वरोऽस्मान्प्रपालय ।
नमस्ते सर्वलोकात्मन्नारायण परात्पर ।
मनोमलात्तपोऽशक्यं कर्म चाविद्यया हतम् ।
दानमप्यर्थदोषेण नाम तस्मात्कलौ स्मरेत् ।
यदि गन्तुं कृता बुद्धिर्वासुदेव नमोऽस्तु ते । [5]

[ ( L. 1 ) T सर्वेषामीश्वरो; G2 सर्वस्य ई° ( for सर्वस्यापी° ). — ( L. 2 ) T -लोकाय ( for -लोकात्मन् ). — ( L. 5 ) M4 नारायण ( for वासुदेव ). ]

— c ) K2.4 D1 गच्छाम; K6 गत्वा स ( for गच्छावो ). — d ) Ś1 K1 नाग- ( *for* गज- ).

51 b ) K5 धर्मकामं ( for धर्मात्मानं ). — c ) K2 T2 समनुप्राप्य ( for °ज्ञाप्य ). K5 दुर्धर्षः; B1.3 D2-4

# ५१

**वैशंपायन उवाच ।**

ततोऽभ्यचोदयत्कृष्णो युज्यतामिति दारुकम् ।
मुहूर्तादिव चाचष्ट युक्तमित्येव दारुकः ॥ १
तथैव चानुयात्राणि चोदयामास पाण्डवः ।
सज्जयध्वं प्रयास्यामो नगरं गजसाह्वयम् ॥ २
इत्युक्ताः सैनिकास्ते तु सज्जीभूता विशां पते ।
आचख्युः सज्जमित्येव पार्थायामिततेजसे ॥ ३
ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ ।
विकुर्वाणौ कथाश्चित्राः प्रीयमाणौ विशां पते ॥ ४
रथस्थं तु महातेजा वासुदेवं धनंजयः ।
पुनरेवाब्रवीद्वाक्यमिदं भरतसत्तम ॥ ५
त्वत्प्रसादाज्जयः प्राप्तो राज्ञा वृष्णिकुलोद्वह ।
निहताः शत्रवश्चापि प्राप्तं राज्यमकण्टकम् ॥ ६
नाथवन्तश्च भवता पाण्डवा मधुसूदन ।
भवन्तं प्लवमासाद्य तीर्णाः स्म कुरुसागरम् ॥ ७
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।

---

धर्मज्ञं; B2 Dc1 धर्मज्ञ; B3.4 Dn1 D5.6 राजानं; D1 M दुर्धर्ष. — d) Ś1 K D1 स्वपुरीं; D5.6 स्वपुरं. Ś1 K1.3.5 B3.4 G3 गंतुम् (for यातुम्).

Colophon. — *Sub-parvan :* Ś1 K1.3 गुरुशिष्यसंवादोऽनुगीता च [समाप्ता]; K2 शिष्यानुगीता [समाप्ता]; T G M2–4 अनुगीता [समाप्ता (G3 °प्तिः; M2 °प्तं)]. — *Adhy. name :* B4 Dn1 D3–6 गुरुशिष्यसंवादः; D1 गुरुशिष्यसंवादे गीतासंवादः. — *Adhy. no.* (figures, words or both): Ś1 58; B2.5 50 (as in text); Dn1 D4 M4 (*inf. lin.*) 51; T1 37; T2 G2.3 M 36.

## 51

1 K4 D1 om. the ref. After the ref., G3 reads 3ab. — a) K2 corrupt. Dn1 D1.5.6 [ऽ]भ्यनोदयत्; G3 ह्यचोदयत्. — b) K1 दानकं; K2 दारुकः; D5.6 दारकं. — c) Ś1 K1 चाख्य(Ś1 [before corr.] °ख्या)त्स; K2 चाचष्टे; T G1 चोवाच (for चाचष्ट). K4 D1 G3 सुमु(D1 स मु)हूर्तादिवाचष्ट; K5 मुहूर्तादब्रवीद्राजन्. — d) M2 मुक्तम् (for युक्तम्). D5.6 दारुकं.

2 a) Dn1 D5.6 -यात्रादि (for °णि). — b) Dc1 corrupt. K4 D1 नोदयामास (for चोद°). — c) T G1.2 संनह्यध्वं (for सज्जयध्वं). Ś1 K1.3 प्रयास्यावो. — d) K3 B1–4 S नाग- (for गज-).

3 G3 reads 3ab after the ref. in st. 1. — a) K2 D1 प्रत्युक्ताः. K5 D2–4 ते वै; M1 सर्वे (for ते तु). — b) M2.3 सज्जीभूत्वा. — K5 om. (hapl.) 3c–4d. — c) B3.5 आचक्षुः. D2.3 कृतम्; G2 सज्ज्य (for सज्जम्). K2.3 B1–3 Dc1 D1 इत्येवं. — d) I पार्थम् (for पार्थाय).

4 K5 om. 4 (cf. v. l. 3). — b) G2 -पार्थिवौ (f -पाण्डवौ). — c) K1 D5.6 विकुर्वाणाः (sic); B3 Dc1 प्रकुर्वाणौ; G2.3 तौ कुर्वाणौ. — d) G3 क्रियमाणौ.

5 a) D3 स्वस्थस्था (for रथस्थं). Ś1 K1 T2 G1.2 तं (for तु). G3 रथस्थौ तौ महातेजौ. — b) K2 D2 G3 वासुदेवधनंजयौ. — d) K1 भरतसत्तमः; B1 T1 भारतसत्तम; D1.4 वचनमुत्तमं; D5.6 उर्वीशसत्तम.

6 Before 6, M1.2 ins. अर्जुनः. — a) G2.3 जयं. — b) T1 M3 राज्ञो; G2.3 राजा (for राज्ञा). D6 -कुलोद्भव. — c) Ś1 K1.3 चैव (for चापि). D5.6 सर्वे हताः शत्रवश्च. — d) K5 B1.2 M3 राज्यं प्राप्तम् (by transp.).

7 b) T2 G1 भवाम (for पाण्डवा). — After 7, T G ins.:

94* भक्तांस्त्वमाश्रितानस्मान्पालयामुत्र चेह च ।

[T2 त्वाम् (for त्वम्).]

8 a) Ś1 K1.2 विश्वकर्म; K4 D1 सर्वकर्म. — b) D6 विश्वात्मा. K2 -संभवः; K4 -संभवं; Dn1 -सत्तम (for -संभव). — c) K2.4.5 D1 तथा (for यथा). K3 त्वं (for [अ]हं). K2 D1 त्वां वि-; K3 चाभि-; K4 त्वानु-; B1.3–5 Dc1 D2.4 T1 G3 त्वाभि- (for त्वा वि-). Ś1 K1 यथा त्वं नाभिजानामि; Dn1 D5.6 तथा त्वामपि जा(Dn1 °भिजा)नामि. — d) Bom. ed.

अर्जुन उवाच ।

को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन ।
श्रोतव्यं चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो ॥ ४४

वासुदेव उवाच ।

अहं गुरुर्महाबाहो मनः शिष्यं च विद्धि मे ।
त्वत्प्रीत्या गुह्यमेतच्च कथितं मे धनंजय ॥ ४५
मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह ।
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत ॥ ४६
ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन्कुरुनन्दन ।
सर्वपापविशुद्धात्मा मोक्षं प्राप्स्यसि केवलम् ॥ ४७
पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते ।
मया तव महाबाहो तस्मादत्र मनः कुरु ॥ ४८
मया तु भरतश्रेष्ठ चिरदृष्टः पिता विभो ।
तमहं द्रष्टुमिच्छामि संमते तव फल्गुन ॥ ४९

वैशंपायन उवाच ।

इत्युक्तवचनं कृष्णं प्रत्युवाच धनंजयः ।
गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै ॥ ५०
समेत्य तत्र राजानं धर्मात्मानं युधिष्ठिरम् ।
समनुज्ञाप्य दुर्धर्ष स्वां पुरीं यातुमर्हसि ॥ ५१

इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

---

द्भव; $M_3$ °द्वहः. —[c]) $G_3$ तत्त्वया समनुप्राप्तं. — After 43, S (except $G_3$) repeats 41.

44 $Dc_1$ om. 44. —[a]) $K_4$ $D_1$ कोसौ हि; $K_6$ कस्त्वसौ (for को न्व°). $D_{5,6}$ को वासौ ब्राह्मणो विष्णो. —[b]) $B_3$ महायशाः (for जनार्दन). —[c]) $G_3$ ज्ञातव्यं (for श्रो°). $D_{5,6}$ वै; T $G_{1,2}$ $M_{1,2,4}$ यन् (for चेन्). $K_{2,4,5}$ $D_1$ $G_3$ तद् (for [ए]तद्). $M_3$ च (for वै). —[d]) $T_2$ $G_{1,3}$ वै (for मे). $B_2$ $D_4$ प्रभो.

45 $Dc_1$ om. the ref. $K_2$ $D_1$ श्रीकृष्ण; $K_{4,5}$ कृष्ण; $G_3$ श्रीभगवान् (for वासुदेव). —[a]) $G_3$ महाभाग (for °बाहो). —[b]) $G_3$ शिष्यश्. $T_1$ $G_{1,2}$ M हि (for च). —[c]) $B_3$ प्रतीत्या (for त्वत्प्रीत्या). $K_2$ मे; $D_{2-6}$ ते; $G_3$ वै (for च). —[d]) $K_2$ $D_{5,6}$ च; $K_{3,5}$ B (except $B_2$) $Dc_1$ $Dn_1$ $D_3$ $G_3$ ते; T $G_{1,2}$ M वै (for मे).

46 [a]) $K_{1,4}$ $D_1$ यदि (for मयि). $G_1$ चेत् (for ते). $G_3$ मम चेदास्ति वै भक्तिर्. —[b]) $K_1$ गुरु- (for कुरु-). $D_5$ -कुलोद्भव. —[c]) $D_4$ मत्वा (for श्रुत्वा). $K_4$ $D_1$ अध्यात्ममेव तच्छ्रुत्वा.

47 [a]) $K_2$ $B_1$ M आचीर्णो; $G_3$ आचारो. —[b]) B D (except $D_1$) धर्मोस्मिन्नरिकर्षण ($B_5$ $D_{2,3}$ °र्शन). —[c]) $B_5$ -कर्म- (for -पाप-). B D (except $D_1$) -विनिर्मुक्तो (for -विशुद्धात्मा). —[d]) $B_2$ प्राप्स्यति; S (except $G_2$) आप्स्यसि (for प्रा°). $D_{5,6}$ मोक्षे प्राप्स्यति केवलं.

48 [b]) $D_2$ -कालम्. —[c]) $G_3$ महाभाग (for °बाहो). —[d]) $D_{5,6}$ एतन्मतं (for अत्र मनः).

49 [a]) $K_5$ तथा (for मया). —[b]) $K_2$ $B_1$ $D_3$ चिरं; $K_5$ चिराद् (for चिर-). $K_4$ पितामहः; B D (except $D_1$) $T_2$ पि($D_6$ स्थि)ता प्रभुः ($T_2$ °भो). —[d]) Some MSS. फाल्गुन; $G_3$ भारत.

50 $Ś_1$ $K_{2-6}$ $D_1$ om. the ref. —[a]) $D_6$ कृष्णः. —[b]) $K_4$ $M_2$ धनंजयं. — After $50^b$, T G $M_4$ (*inf. lin. sec. m.*) ins.:

93* यदिष्टं कुरु सर्वस्यापीश्वरोऽस्मान्प्रपालय ।
नमस्ते सर्वलोकात्मन्नारायण परात्पर ।
मनोमलात्तपोऽशक्यं कर्म चाविद्यया हतम् ।
दानमप्यर्थदोषेण नाम तस्मात्कलौ स्मरेत् ।
यदि गन्तुं कृता बुद्धिर्वासुदेव नमोऽस्तु ते । [5]

[(L. 1) T सर्वेषामीश्वरो; $G_2$ सर्वस्य ई° (*for* सर्वस्यापी°). —(L. 2) T -लोकाय (for -लोकात्मन्). —(L. 5) $M_4$ नारायण (for वासुदेव).]

—[c]) $K_{2,4}$ $D_1$ गच्छाम; $K_6$ गत्वा स (for गच्छावो). —[d]) $Ś_1$ $K_1$ नाग- (for गज-).

51 [b]) $K_5$ धर्मकामं (for धर्मात्मानं). —[c]) $K_2$ $T_2$ समनुप्राप्य (for °ज्ञाप्य). $K_5$ दुर्धर्षः; *$B_{1,6}$ $D_{2-4}$*

५१

वैशंपायन उवाच ।

ततोऽभ्यचोदयत्कृष्णो युज्यतामिति दारुकम् ।
मुहूर्तादिव चाचष्ट युक्तमित्येव दारुकः ॥ १
तथैव चानुयात्राणि चोदयामास पाण्डवः ।
सज्जयध्वं प्रयास्यामो नगरं गजसाह्वयम् ॥ २
इत्युक्ताः सैनिकास्ते तु सज्जीभूता विशां पते ।
आचख्युः सज्जमित्येव पार्थायामिततेजसे ॥ ३
ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ ।
विकुर्वाणौ कथाश्चित्राः प्रीयमाणौ विशां पते ॥ ४
रथस्थं तु महातेजा वासुदेवं धनंजयः ।
पुनरेवाब्रवीद्वाक्यमिदं भरतसत्तम ॥ ५
त्वत्प्रसादाज्जयः प्राप्तो राज्ञा वृष्णिकुलोद्वह ।
निहताः शत्रवश्चापि प्राप्तं राज्यमकण्टकम् ॥ ६
नाथवन्तश्च भवता पाण्डवा मधुसूदन ।
भवन्तं प्लवमासाद्य तीर्णाः स्म कुरुसागरम् ॥ ७
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव । C. 14. B. 14. K. 14.

धर्मज्ञं; B2 Dc1 धर्मज्ञ; B3.4 Dn1 D5.6 राजानं; D1 M दुर्धर्षं. — d) Ś1 K D1 स्वपुरीं; D5.6 स्वपुरं. Ś1 K1.3.5 B3.4 G3 गंतुम् (for यातुम्).

Colophon. — *Sub-parvan :* Ś1 K1.3 गुरुशिष्यसंवादोनुगीता च [समाप्ता]; K2 शिष्यानुगीता [समाप्ता]; T G M2–4 अनुगीता [समाप्ता (G3 °प्तिः; M2 °प्तं)]. — *Adhy. name:* B4 Dn1 D3–6 गुरुशिष्यसंवादः; D1 गुरुशिष्यसंवादे गीतासंवादः. — *Adhy. no.* (figures, words or both): Ś1 58; B2.5 50 (as in text); Dn1 D4 M4 (*inf. lin.*) 51; T1 37; T2 G2.3 M 36.

## 51

1 K4 D1 om. the ref. After the ref., G3 reads 3ab. — a) K2 corrupt. Dn1 D1.5.6 [ऽ]भ्यनोदयत्; G3 ह्यचोदयत्. — b) K1 दानकं; K2 दारुकः; D5.6 दारकं. — c) Ś1 K1 चाख्य(Ś1 [before corr.] °ख्या)स्स; K2 चाचष्टे; T G1 चोवाच (for चाचष्ट). K4 D1 G3 मुमु(D1 स मु)हूर्तादिवाचष्ट; K5 मुहूर्तादब्रवीद्राजन्. — d) M2 मुक्तम् (for युक्तम्). D5.6 दारुकं.

2 a) Dn1 D5.6 -यात्रादि (for °णि). — b) Dc1 corrupt. K4 D1 नोदयामास (for चोद°). — c) T G1.2 संनह्यध्वं (for सज्जयध्वं). Ś1 K1.3 प्रयास्यावो. — d) K3 B1–4 S नाग- (for गज-).

3 G3 reads 3ab after the ref. in st. 1. — a) K2 D1 प्रत्युक्ताः. K5 D2–4 ते वै; M4 सर्वे (for ते तु). — b) M2.4 सज्जीभूत्वा. — K5 om. (hapl.) 3c–4d. — c) B3.5 आचख्युः. D2.3 कृतम्; G2 सज्यम् (for सज्जम्). K2.3 B1–3 Dc1 D1 इत्येवं. — d) B3 पार्थम् (for पार्थाय).

4 K5 om. 4 (cf. v. l. 3). — b) G2 -पार्थिवौ (for -पाण्डवौ). — c) K1 D5.6 विकुर्वाणाः (sic); B3.4 Dc1 प्रकुर्वाणौ; G2.3 तौ कुर्वाणौ. — d) G3 क्रियमाणौ.

5 a) D3 स्वस्थस्था (for रथस्थं). Ś1 K1 T2 G1.2 तं (for तु). G3 रथस्थौ तौ महातेजौ. — b) K2 D2 G3 वासुदेवधनंजयौ. — d) K1 भरतसत्तमः; B1 T1 भारतसत्तम; D1.4 वचनमुत्तमं; D5.6 उर्वीशसत्तम.

6 Before 6, M1.2 ins. अर्जुनः. — a) G2.3 जयं. — b) T1 M3 राज्ञो; G2.3 राजा (for राज्ञा). D6 -कुलोद्भव. — c) Ś1 K1.3 चैव (for चापि). D5.6 सर्वे हताः शत्रवश्च. — d) K5 B1.2 M3 राज्यं प्राप्तम् (by transp.).

7 b) T2 G1 भवाम (for पाण्डवा). — After 7, T G ins.:

94* भक्तांस्त्वमाश्रितानस्मान्पाल्यामुत्र चेह च ।

[T2 त्वाम् (for त्वम्).]

8 a) Ś1 K1.2 विश्वकर्म; K4 D1 सर्वकर्म. — b) D6 विश्वात्मा. K2 -संभवः; K4 -संभवं; Dn1 -सत्तम (for -संभव). — c) K2.4.5 D1 तथा (for यथा). K3 त्वं (for [अ]हं). K2 D1 त्वां वि-; K3 चाभि-; K4 त्वानु-; B1.3–5 Dc1 D2.4 T1 G3 त्वाभि- (for त्वा वि-). Ś1 K1 यथा त्वं नाभिजानामि; Dn1 D5.6 तथा त्वामपि जा(Dn1 °भिजा)नामि. — d) Bom. ed.

यथाहं त्वा विजानामि यथा चाहं भवन्मनाः ॥ ८
त्वत्तेजःसंभवो नित्यं हुताशो मधुसूदन ।
रतिः क्रीडामयी तुभ्यं माया ते रोदसी विभो ॥ ९
त्वयि सर्वमिदं विश्वं यदिदं स्थाणुजङ्गमम् ।
त्वं हि सर्वं विकुरुषे भूतग्रामं सनातनम् ॥ १०
पृथिवीं चान्तरिक्षं च तथा स्थावरजङ्गमम् ।
हसितं तेऽमला ज्योत्स्ना ऋतवश्चेन्द्रियान्वयाः ॥ ११
प्राणो वायुः सततगः क्रोधो मृत्युः सनातनः ।
प्रसादे चापि पद्मा श्रीर्नित्यं त्वयि महामते ॥ १२
रतिस्तुष्टिर्धृतिः क्षान्तिस्त्वयि चेदं चराचरम् ।
त्वमेवेह युगान्तेषु निधनं प्रोच्यसेऽनघ ॥ १३
सुदीर्घेणापि कालेन न ते शक्या गुणा मया ।
आत्मा च परमो वक्तुं नमस्ते नलिनेक्षण ॥ १४
विदितो मेऽसि दुर्धर्ष नारदाद्देवलात्तथा ।
कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात् ॥ १५
त्वयि सर्वं समासक्तं त्वमेवैको जनेश्वरः ।
यच्चानुग्रहसंयुक्तमेतदुक्तं त्वयानघ ॥ १६
एतत्सर्वमहं सम्यगाचरिष्ये जनार्दन ।

---

मतः (for मनाः). K2–5 Dn1 D1. 5. 6 T2 त( K3 T2 य )था चाहं ( K2 D1 °ह ) भवान्मम ( D5. 6 °नः ); T1 G2 तथाहं भगवन्मनाः; G3 तथा हि भगवान्मम. —After 8, B1. 2 ins.:

95* भवामि सततं कृष्ण तथा कुरु महामते ।

9 a) Dc1 -संस्तवे (for -संभवो). —b) B D (except D1) भूतात्मा (for हुताशो). —c) K1. 2 D6 रति-; K3 गतोः; T2 G1. 2 रात्रिः (for रतिः). —d) K1. 3 T2 M4 (*inf. lin.* as in text) मया ते; G3 मायातो (for माया ते). K2 दर्शिता; D6 रोधसी (for रोद°). K1 प्रभो. Ś1 मया ते नोच्यसे विभो.

10 a) B1. 2 Dc1 सक्तम्; B4. 5 शक्तम् (for सर्वम्). —b) K2. 4. 5 D1 यत्किंचित् (for यदिदं). K1 स्थावर- (hypermetric); K3 स्थास्नु- (for स्थाणु-). D3 यदि स्थाणुं च जंगमं. —c) B1. 2 D2–4 त्व( B2 त )मप्येतद्; G3 त्वयि सर्वं (for त्वं हि सर्वं). Ś1 हि (for वि-). —d) Ś1 K1. 3 सनातनः; B D (except D1) चतुर्विधं (D3 °धः).

11 a) K1. 3 Dc1 D1 T2 पृथिवी. B1–3. 5 चांतरीक्षं. D6 पृथिवी चांतरिक्षे यस. —b) Dn1 D5. 6 द्यां चै( D5 [marg. *sec. m.*] द्यौश्चै-; D6 त्वं चै )व मधुसूदन. —c) K4 D1 G3 सहितं; T1 G2 असितं (for हसितं). Ś1 G3 ते महा-; Ś1 (before corr.) K3 ते मया; K4 D1 तेमलं (for तेऽमला). —d) K1 corrupt. K2 om.; K5 तु (for च). K2. 4. 5 B3. 4 D1 [इं]द्रियाणि ते; B1. 2. 5 Dc1 Dn1 D2–6 G2. 3 °याणि च; T G1 °यास्तव (for °यान्वयाः).

12 a) Ś1 K4 M1–3 प्राणे. K2 च सततं; K4 D1 च स ततः; B3 सर्वगतः (for सततगः). G3 प्राणे वायुः स तु गतः. —b) Ś1 K3. 4 Dc1 D1 M1–3 क्रोधे. D3 तव प्रभो (for सनातनः). —c) D6 प्रमोदे (for प्रसादे). K2 D1 वापि; G3 देव (for चापि). —d) K2. 4. 5 B5 D1 S तव (for त्वयि).

13 a) K1. 3 वृत्तिः; G3 स्मृतिः (for धृतिः). T2 G1 कांतिस् (for क्षान्तिस्). —b) B Dc1 D2–4 चा( B4 आ )यतिश्च; Dn1 D5. 6 मतिः कांतिश्च (for त्वयि चेदं). —c) Ś1 K1. 4. 5 D1 G3 हि (for [इ]ह). —d) D2 विधानं (for निधनं). K2. 4 D1. 2. 6 G2. 3 Cv प्रोच्यते. G3 युगे (for ऽनघ).

14 a) D6 G2 सुदीर्घेन. B3 [ए]व (for [अ]पि). —b) D5 [इ]ह; D6 हि (for ते). B1. 2 Dc1 D2–4 मया गुणाः (by transp.). —K5 om. 14c–15b. —c) K2 आत्मा ह परमोव्यग्रं; K3 D1 आत्मासि परमोव्यक्तं; B Dc1 Dn1 D2–6 आत्मा च परमात्मा च.

15 K5 om. 15ab (cf. v. l. 14). —a) K4 D1 विदितं. K3. 4 B5 Dn1 D1. 5. 6 G3 मे सु-; B4 [ऽ]सि T [ऽ]पि हि; G1 [ऽ]सि हि; M2 मे वि- (for मेऽसि). Dc1 दुर्धर्षो. B1. 2 D2–4 विदितोसि दुराधर्ष. —c) K5 B5 D2–4 S (except G3) [अ]पि (for [ए]व). —d) K4 D1 गुरु- (for कुरु-).

16 a) K2. 4 B3. 4 D6 T2 G2 समायुक्तं; K5 T1 M °शक्तं (for °सक्तं). —K3 om. (? hapl.) 16bc. —b) G3 एको वै (for एवैको). K4 D1 M1. 2 जनेश्वर; B3. 4 Dc1 नरेश्वरः (Dc1 °र); T G जनार्दनः (T2 G1. 3 °न). —c) Dc1 यस्य; T1 तं च (for यच्च).

17 a) K3 सर्वमेतद् (by transp.). —b) T1 G1. 3 M करिष्यामि (M2 °मो); T2 चरिष्यामि (for आचरिष्ये). —c) D5. 6 तदेव (for इदं च). K1 अत्यर्क्तं; K3 अव्यक्तं; Dn1 D5. 6 अत्यंतं (for अत्यर्थं). —d)

इदं चाद्भुतमत्यर्थं कृतमस्मत्प्रियेप्सया ॥ १७
यत्पापो निहतः संख्ये कौरव्यो धृतराष्ट्रजः ।
त्वया दग्धं हि तत्सैन्यं मया विजितमाहवे ॥ १८
भवता तत्कृतं कर्म येनावाप्तो जयो मया ।
दुर्योधनस्य संग्रामे तव बुद्धिपराक्रमैः ॥ १९
कर्णस्य च वधोपायो यथावत्संप्रदर्शितः ।
सैन्धवस्य च पापस्य भूरिश्रवस एव च ॥ २०
अहं च प्रीयमाणेन त्वया देवकिनन्दन ।
यदुक्तस्तत्करिष्यामि न हि मेऽत्र विचारणा ॥ २१
राजानं च समासाद्य धर्मात्मानं युधिष्ठिरम् ।
चोदयिष्यामि धर्मज्ञ गमनार्थं तवानघ ॥ २२
रुचितं हि ममैतत्ते द्वारकागमनं प्रभो ।
अचिराच्चैव दृष्टा त्वं मातुलं मधुसूदन ।
बलदेवं च दुर्धर्षं तथान्यान्वृष्णिपुंगवान् ॥ २३
एवं संभाषमाणौ तौ प्राप्तौ वारणसाह्वयम् ।
तथा विविशतुश्चोभौ संप्रहृष्टनराकुलम् ॥ २४
तौ गत्वा धृतराष्ट्रस्य गृहं शक्रगृहोपमम् ।
ददृशाते महाराज धृतराष्ट्रं जनेश्वरम् ॥ २५
विदुरं च महाबुद्धिं राजानं च युधिष्ठिरम् ।
भीमसेनं च दुर्धर्षं माद्रीपुत्रौ च पाण्डवौ ।

C. 14. B. 14. K. 14.

---

Ś1 K1. 3. 4 B1. 2 D1. 3 G2 प्रियेच्छया (for °प्सया). K5 कृतवान्मद्धितेच्छया.

18 K2 corrupt. — a) Dc1 स (for यत्). D5. 6 निर्हत: (for निहत:). M1-3 संखे. T G1. 2 यस्त्व( G2 मे त्व )या निहता: (T1 °त: ) संख्ये; G3 यत्पापा निहता: सर्वे. — b) K2 B1 D2-4 M1. 2 कौरवो; B2 कैतवो; T2 G2 कौरवा. T1 G1. 3 कौरव्या धृतराष्ट्रजा:. — c) M2 एतत् (for हि तत्). — d) K4 D1 त्वया (for मया). K2 च जयम्; G3 विज्ञातम् (for विजि°).

19 a) K1 भवतस्. B2 D2-4 सर्वं (for कर्म). — b) K5 येन चाप्तो; T यथा वाप्तो. — d) K2 न च बुद्धिपराक्रमे.

20 a) D6 कर्ता तस्य (for कर्णस्य च). K6 हि (for च). K3 वधोपाये; K4 वधापायो. — d) K3 स: (for च). — After 20, T G M3 ins.:

96* तस्मात्त्वमेव संचिन्त्य हितं कुरु यथा तथा ।

[ G1 तस्य (for तस्मात्). G3 संचोद्य (for संचिन्त्य). G3 यथातथं; M3 पुरो यथा (for यथा तथा). ]

21 a) Ś1 K1 अयं (for अहं). K2 Dn1 D3 प्रियमाणेन; T G प्रीयमाणोस्मि (T1 G1 °णोस्म). — b) D6 -नंदक (for -नन्दन). — c) K5 B (except B2) Dc1 S (except T1) यदुक्तं. — d) K4 G3 [ऽ]स्ति (for ऽत्र).

22 a) K3 ज्ञानं (submetric) (for राजानं). D3 राजानं वशमासाद्य. — c) K4 D1. 5 नोदयिष्यामि धर्मज्ञं (D5 °ज्ञ). — d) B4 गमनाय. T2 तदा (for तव).

23 D2 om. 23. — a) K5 रुचिरं; D4 G3 उचितं; G1 आदृतं (for रुचितं). K2. 4 D1 S [अ]प्येतद् (for [ए]तत्ते). — b) Ś1 द्वारिकागमनं; D6 द्वारकानंतरं. K2. 4 B3. 4 (marg. as in text) D1 T G प्रति; K5 B1. 2 विभो (for प्रभो). — c) T2 G2 न चिराच्; G1 न विना (for अचिराच्). B (except B5) Dc1 Dn1 D5. 6 एव (for चैव). T G1. 2 M [अ]सि (for त्वं). G3 द्रष्टासि न चिराच्चैव. — d) B Dc1 Dn1 D3-6 मातुलं मे जनार्दन. — e) Ś1 दुराधर्षं (for च दुर्धर्षं). — f) K1. 3 अथ (for तथा). — After 23, Ś1 K1. 3 ins. an addl. colophon [ *Adhy. name:* Ś1 K1. 3 अर्जुनवाक्यं. — *Adhy. no.:* Ś1 59 ].

24 Before 24, Ś1 K1. 3 M1. 2 ins. वैशंपायन उवाच. — a) K3 D5. 6 संभाष्यमाणौ. D5. 6 तु (for तौ). K4 D1 एवं संभाषमाणे तु. — b) D4 -साह्वये. — c) K4 D1 चैव; D2-4 तौ तु (for चोभौ). K1 तथा विविशतश्चैव; K3 ततो विविशतश्चोभौ. — d) Ś1 (by corr.) K2-5 D1 T G2. 3 -जनाकुलं. Ś1 G1 संप्रहृष्टमनाकुलं.

25 a) K4 D1 भोगान्दृष्ट्वा हि राष्ट्रस्य. — b) K2 चेंद्र- (for शक्र-). D3 T1 -ग्रहोपमं. K4 D1 ग्रहं प्राप्य ग्रहोपमं. — c) G3 दृष्टवंतौ. Ś1 K4 B3-5 Dc1 D1-4 G2 महाराजं; B1. 2 M3 °त्मानं (for °राज). — d) B3 नरेश्वरं; S (except G3) जनाधिपं (for जनेश्वरम्).

26 a) K1. 2 D3. 6 महाबुद्धी; K4 °बाहुं; B1 °त्मानं; D4 म**हुं. — c) K5 समासीनं; D1 उपासंतं; D4 च राजानं (for उपासीनं). — f) K4 Dn1 D4 युयुत्सं. S (except G2) [अ]पि भारत (G1 °तं) (for [अ]पराजितम्).

धृतराष्ट्रमुपासीनं युयुत्सुं चापराजितम् ॥ २६
गान्धारीं च महाप्राज्ञां पृथां कृष्णां च भामिनीम् ।
सुभद्राद्याश्च ताः सर्वा भरतानां स्त्रियस्तथा ।
ददृशाते स्थिताः सर्वा गान्धारीं परिवार्य वै ॥ २७
ततः समेत्य राजानं धृतराष्ट्रमरिंदमौ ।
निवेद्य नामधेये स्वे तस्य पादावगृह्णताम् ॥ २८
गान्धार्याश्च पृथायाश्च धर्मराज्ञस्तथैव च ।
भीमस्य च महात्मानौ तथा पादावगृह्णताम् ॥ २९
क्षत्तारं चापि संपूज्य पृष्ट्वा कुशलमव्ययम् ।
तैः सार्धं नृपतिं वृद्धं ततस्तं पर्युपासताम् ॥ ३०
ततो निशि महाराज धृतराष्ट्रः कुरूद्वहान् ।
जनार्दनं च मेधावी व्यसर्जयत वै गृहान् ॥ ३१
तेऽनुज्ञाता नृपतिना ययुः स्वं स्वं निवेशनम् ।
धनंजयगृहानेव ययौ कृष्णस्तु वीर्यवान् ॥ ३२
तत्रार्चितो यथान्यायं सर्वकामैरुपस्थितः ।
कृष्णः सुष्वाप मेधावी धनंजयसहायवान् ॥ ३३
प्रभातायां तु शर्वर्यां कृतपूर्वाह्णिकक्रियौ ।
धर्मराजस्य भवनं जग्मतुः परमार्चितौ ।

---

27 Dc1 om. (hapl.) 27[abcde]. — a) K1 B D2.3 महाप्रज्ञां. — b) D5 (marg. sec. m. as in text). 6 तथा (for पृथां). B5 D2.3 भाविनीं. — c) T G सुभद्राम- (G3 °द्रां चा)पि ताः सर्वा. — K3 om. (hapl.) 27[de]. — d) K2.4 D1 T G2 M3.4 भारतानां. K2 तदा (for तथा). G3 भारतानां तथा स्त्रियः. — e) T G दृष्टवंतौ (for ददृशाते). B1.2 D2-4 च ताः; B3-5 Dn1 T1 स्त्रियः (for स्थिताः). — f) K5 T1 G1.2 गांधारी (sic). T1 G तौ (for वै). K2 गांधारीं चापराजितां; K4 °री परिचर्यंता (sic); B Dc1 Dn1 D2-6 T2 °रीपरिचारि(D5 °र)काः; D1 °रीं परिचर्यंतीः.

28 b) Ś1 K3 B D2-4 T1 G2.3 अरिंदमं; K1 आरिंदम. — c) K3 B Dc1 D2-6 G3 नामधेयं स्वं. — d) K2.4 D1 T G1.2 M तस्य पादौ (T2 °दा) ववंदं(K2.4 D1 °द)तुः; G3 वंदेतां चरणौ ततः.

29 K4 D1 om. (hapl.) 29. — b) B D (D1 om.) T G1.3 धर्मराजस्य चैव ह (B2 Dn1 D5.6 G3 हि); G2 °राजस्य धीमतः. — d) Ś1 K1.5 Dc1 तदा; K3 ततः (for तथा). K2 तथा पादौ ववंदतुः. — For 29[cd], T G M4 (sec. m.) subst.:

97* भीमस्य च ववन्दाते तथा पादौ महात्मनः ।
[ T1 महात्मनां. ]

While, M1-3 subst.:

98* महात्मानौ तथा पादौ ववन्दतुररिंदमौ ।
[ M2 कृष्णपार्थौ ववंदतुः (for the post. half). ]

M4 cont. after 97*:

99* महात्मानौ महावीर्यौ तथा पादौ ववन्दतुः ।

30 a) K4 यत्तारं (for क्ष°). K2 चाभि-; B1.2 D2-4 अपि (for चापि). K2.4 D1 पूज्याथ; Dn1 D2-6 संगृह्य (for संपूज्य). — b) K1 दृष्ट्वा (for पृष्ट्वा). K4 D1 दृ(D1 पृ)ष्ट्वा क्षेममनामयं. — After 30[b], S ins.:

100* परिष्वज्य महात्मानं वैश्यापुत्रं महारथम् ।
[ G1 वेश्यापुत्रं. ]

— d) K2 Dn1 D5.6 तौ (for तं). K3 D3 पर्युपासतं (D3 °ता). S उपासीनौ (G3 °साते; M °सीतां) ततस्तु तौ.

31 a) K3-5 B1.4.5 D M3.4 महाराजो; M1.2 °बाहो. — b) K1 धृतराष्ट्रान्; T2 G3 °राष्ट्रं. K2.4.5 D1 कुरूद्वह (K5 °हः); D2-4 कुरूत्तमान्; T G जनेश्वरं (T1 °रः) (for कुरूद्वहान्). — d) K1 विससर्जत (sic); K2 G3 विसर्जयत. Ś1 गृहं; K2.4 D1 प्रभुः; T G1 गृहात्.

32 K5 om. 32[a]-33[b]. — a) B4 om. ते. — b) B3 प्रययुः (for ययुः स्वं). Dc1 Dn1 स्व- (for the second स्वं). — D4 om. 32[c]-33[b]. — c) K2 -गृहेष्वेव; K4 D1 -गृहं चैव (for -गृहानेव). — d) B1.2 [ऽ]पि; D2.3 च; G1 स (for तु).

33 K5 D4 om. 33[ab] (cf. v. l. 32). Ś1 K1.3 om. (hapl.) 33. — a) B2 अत्र; D2.3 ततो (for तत्र). D5.6 [उ]षिते; G1 [अ]र्चिते. G3 यथाकामं (for °न्यायं). — b) K2.4 B3 S उपस्थितैः. — c) Dc1 सुखाप. D4 माधवोपि ययुर्गेहं (sic); D6 कृष्णस्तु परमेधावी.

34 a) K2 प्रयातायां रजन्यां तु. — b) Some MSS. -पूर्वाह्णिक-; D2-4 -पौर्वाह्णि(D4 °ह्नि)क-; M3 -सर्वाह्णिक-. B Dc1 Dn1 D5.6 कृत्वा पौर्वाह्णिकीं क्रि(Dc1 °ह्णिकाक्रि-; D5.6 °ह्णिकीं क्रि)यां; T2 कृतपौर्वाह्णिकी क्रिया (sic). — c) D4 भुवनं; D6 सदनं. — d) K2 B3.5 Dc1

यत्रास्ते स सहामात्यो धर्मराजो महामनाः ॥ ३४
ततस्तौ तत्प्रविश्याथ ददृशाते महाबलौ ।
धर्मराजानमासीनं देवराजमिवाश्विनौ ॥ ३५
तौ समासाद्य राजानं वार्ष्णेयकुरुपुंगवौ ।
निषीदतुरनुज्ञातौ प्रीयमाणेन तेन वै ॥ ३६
ततः स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ ।
प्रोवाच वदतां श्रेष्ठो वचनं राजसत्तमः ॥ ३७
विवक्षू हि युवां मन्ये वीरौ यदुकुरूद्वहौ ।
ब्रूत कर्तास्मि सर्वं वां न चिरान्मा विचार्यताम् ॥ ३८
इत्युक्ते फल्गुनस्तत्र धर्मराजानमब्रवीत् ।
विनीतवदुपागम्य वाक्यं वाक्यविशारदः ॥ ३९
अयं चिरोषितो राजन्वासुदेवः प्रतापवान् ।
भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥ ४०
स गच्छेदभ्यनुज्ञातो भवता यदि मन्यसे ।
आनर्तनगरीं वीरस्तदनुज्ञातुमर्हसि ॥ ४१

युधिष्ठिर उवाच ।

पुण्डरीकाक्ष भद्रं ते गच्छ त्वं मधुसूदन ।
पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं प्रभुम् ॥ ४२
रोचते मे महाबाहो गमनं तव केशव ।
मातुलश्चिरदृष्टो मे त्वया देवी च देवकी ॥ ४३

C. 14. B. 14. K. 14.

---

D3.4 परमार्चितं; K3 केशवार्जुनौ; B1.2 कृष्णफाल्गुनौ. — e) K2.4 D1 यत्र चास्ते; D6 यत्रास्ति स (for °स्ते स). T2 G1.2 M तु; G3 च (for स). K2 महाराजो; K3 D6 T2 महामात्यो; B4 हसामात्यो (by metathesis). — f) K4 युधिष्ठिरं (sic); Dn1 D5.6 महाबलः; D1 युधि*रः (for महामनाः).

35 a) K2 प्रविवेश्याथ; K4 D1 संप्रविश्याथ; T2 G1 तत्प्रविश्यांतो. B Dc1 Dn1 D2–5 तौ प्रविश्य महात्मानौ; D6 तौ प्रविशतुर्महात्मानौ (hypermetric). — b) B D (except D1) तद्वद्दं परमार्चितं. — c) K2 T G धर्मराजं त(K2 G3 स)मासीनं; B D (except D1) °जं ददृश(Dn1 °दर्श)तुर्. — d) D6 इवाश्विनं.

36 a) M4 तं (for तौ). Ś1 (before corr.) राजानौ (for °नं). Dn1 D5.6 समासाद्य तु राजानं. — b) S (except G3) -नंदनौ (for -पुंगवौ). — c) B1.2.4 निषेदतुर्. — d) K4 D1 प्रीयमाणौ च; D6 °मानेन; T G1 M °माणौ तु (for °माणेन). B D (except D1) तौ (for वै).

37 a) T1 G1 राजर्षिर् (for मेधावी). K2 ततो राजा धर्मराजः. — K2 om. 37b. — b) T1 प्रेक्षण (sic); T2 G3 विवक्षुः; G1.2 पक्षेण (for विवक्षू). M लक्ष्य (for प्रेक्ष्य). Ś1 K1.3.5 विवक्षू तौ निश(K5 °शा)म्य ह; K4 D1 विवक्ष्य (D1 °कक्षे) लक्षितावुभौ. — c) K2 प्रोवाच वचनं ततः. — K2 om. 37d. — d) K1.3 D3.5.6 -सत्तम; K4 °मं.

38 Before 38, MSS. ins. युधिष्ठिर उवाच. — a) K2 M2 विविक्षू (K2 °क्षु); K4 D1.4 विवक्षु (K4 °क्ष्या). K2.4 D1 पश्ये; S वीरौ (for मन्ये). Ś1 K1.3.5 युवां विवक्षू पश्यामि. — b) D2 वीरौ यदि; S यदूद्वह- (for वीरौ यदु-). D4.5 -कुलोद्वहौ (for -कुरू°). — c) K4 D1 कृतं; K5 T G1.3 M ब्रूतां; B1.3.5 D2 G2 ब्रूतं; Dc1 ब्रूहि (for ब्रूत). K4 कर्तासि. K2.4 D4 G2 M2 सर्वं वा; G3 हि युवां (for सर्वं वां). — d) K2.4.5 Dc1 D1–4 अचिरान्मा; T1 न चिरान्नो; G3 सम्यगत्र.

39 a) K5 B D (except D1) इत्युक्तः (D6 °क्त्वा). Some MSS. फाल्गुनस्; K4 फाल्गुने. — b) T2 धर्मराजं समब्रवीत्. — For 39ab, G3 subst.:

101* इत्युक्ते धर्मराजेन फल्गुनः प्रत्यभाषत ।

— K2 om. 39cd.

40 a) K1 D1.4 विशेषितो; D3 विरो°; D6 निर्नै° (for चिरो°). — b) K1.2.4 Dc1 वासुदेव-. — c) K2 समनुज्ञाय; B5 Dc1 °प्राप्य.

41 a) Ś1 K1.3 गच्छेत; G3 गच्छति (for गच्छेद्). K4 रसगंधभ्यनुज्ञातो (sic). — c) K1 अनंत-; D6 अनर्त-. K2.3 Dc1 D2–4 -नगरं. D4 G2.3 M4 वीर. — d) K3 corrupt.

42 a) Dc1 पुंडरीकाख्य. — b) K3 गजसाह्वयात्; D3 M3 मधुसूदनं (M3 °नः). — c) G3 त्वद्य (for अद्य). — d) Dc1 corrupt. K2 om.; K4 D1 सुर-; M1.2 शूरं (for शूर-). K2 प्रभुः; K5 B1.2 D2–4 G2 विभो; B3–5 Dn1 D5.6 T प्रभो; G3 विभुं (for प्रभुम्).

43 a) K1 ते; D3 न (for मे). — K2 om. (hapl.) 43c–44b. — c) Dc1 मातुश्च (for मातुलश्). K1.3.4 D1 T G1.2 M1.3.4 हि; Dc1 om.; G3 ते

23
. 46
. 45

मातुलं वसुदेवं त्वं बलदेवं च माधव ।
पूजयेथा महाप्राज्ञ मद्वाक्येन यथार्हतः ॥ ४४
स्मरेथाश्चापि मां नित्यं भीमं च बलिनां वरम् ।
फल्गुनं नकुलं चैव सहदेवं च माधव ॥ ४५
आनर्तानवलोक्य त्वं पितरं च महाभुज ।
वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ॥ ४६
स गच्छ रत्नान्यादाय विविधानि वसूनि च ।
यच्चाप्यन्यन्मनोज्ञं ते तदप्यादत्स्व सात्वत ॥ ४७
इयं हि वसुधा सर्वा प्रसादात्तव माधव ।
अस्मानुपगता वीर निहताश्चापि शत्रवः ॥ ४८

एवं ब्रुवति कौरव्ये धर्मराजे युधिष्ठिरे ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ४९
तवैव रत्नानि धनं च केवलम्
धरा च कृत्स्ना तु महाभुजाद्य वै ।
यदस्ति चान्यद्द्रविणं गृहेषु मे
त्वमेव तस्येश्वर नित्यमीश्वरः ॥ ५०
तथेत्यथोक्तः प्रतिपूजितस्तदा
गदाग्रजो धर्मसुतेन वीर्यवान् ।
पितृष्वसामभ्यवदद्यथाविधि
संपूजितश्चाप्यगमत्प्रदक्षिणम् ॥ ५१

---

(for मे). — $^{d}$) D4 तथा (for त्वया).

44 K2 *om.* 44$^{ab}$ (*cf.* v. l. 43). — $^{a}$) G1.3 वासुदेवं. K4 D1 T G1.2 M च (for त्वं). K6 B Dc1 Dn1 D2–6 समेत्य (B Dc1 D3 स मे त्वं) मातुलं गत्वा. — $^{b}$) B4 Dn1 D5.6 मानद (for माधव). K4 D1 तत्र गत्वा तु माधव. — $^{c}$) K1 D2 महाप्रज्ञ; K2 °बाहो; D5.6 °राज.

45 K3 om. 45. — $^{a}$) K2 मा; D6 om.; T1 मे (for मां). B5 transp. मां and नित्यं. K5 B1.2 D2–4 स्मरेश्चापि च मां नित्यं. — $^{b}$) K2 वर. — $^{cd}$) Some MSS. फाल्गुनं; Ś1 K1 फल्गुणं. Dn1 D5.6 फाल्गुनं सहदेवं च नकुलं चैव मानद.

46 $^{a}$) K1 अनंतान् (for आनर्तान्). K4 D1 अव° लोकं (for °लोक्य). — $^{b}$) K2 B4 G3 महाभुजं; K4 D1 °बलं. — $^{c}$) D4 वृष्णिं. K2.5 D6 S आगच्छ (for °च्छेर्). K3 तूर्णं पुनरथागच्छेर्. — $^{d}$) T G1.2 M हयमेधं. K2 यथार्थं मधुसूदन; D4 हयमेधेन मानद.

47 $^{a}$) T2 G1.2 निर्गच्छ; G3 संगम्य (for स गच्छ). — $^{b}$) D3 वसूनि विविधानि च. — $^{c}$) G3 यद्वा हि (for यच्चापि). S (except G3) अभिप्रेतं (for मनोज्ञं ते). K4 D1 वै (for ते). — $^{d}$) K1–4 D1 T2 G2 M चापि (for अपि). T G2 [आ]धत्स्व. Ś1 K सर्वतः (for सात्वत). G3 तच्चाप्याधत्स्व माधव.

48 $^{a}$) D3 सेयं (for इयं). B (except B3) D (except D1) च (for हि). B Dc1 Dn1 D2.5.6 कृत्स्ना; D3 कृष्ण (for सर्वा). G3 इयं च सर्ववसुधा. — $^{b}$) B D (except D1) केशव (for माधव). — $^{c}$) K2 अनुगता; K3 T G M1.2 उपा° (for उप°). K4 D1 अस्मांश्चानुगता वीर. — After 49, T G ins.:

102* स्वर्गापवर्गविषयं त्वद्भक्तानां न दुर्लभम् ।
संसारगहने त्वद्य पापाग्निं प्रशमाम्बुद ।

[(L. 2) T2 चेद्ध; G3 वेद्य (for त्वद्य). G1 प्रशमांबुध.]

49 $^{a}$) K2 ब्रजंति (sic); M4 वदति (for ब्रुवति). K5 B3.5 D2–4 कौंतेये; D5.6 कौरव्य. — $^{c}$) T G1 परः (for वरः).

50 Before 50, B2.3 Dc1 ins. वासुदेव उवाच. — $^{a}$) K2 तत्र; D2 तथा (for तव). K5 रत्नं च (for रत्नानि). K4 D1 तथैव रत्नं च धरा च केवला. — $^{b}$) K4 D1 धनं (for धरा). D6 om. from च up to वै. B3 Dn1 D2–4 T G1 तु (for च). K1.3 B2 कृत्स्नास्; K4 D1 कृत्स्नं. K2.4.5 D1–4 सु-; G3 M1.2 च (for तु). B1.2 om. वै. — $^{c}$) D3 G3 यदि (for यद्). K4 D1 गृहे मे; Dn1 गृहे मम (for गृहेषु मे). K5 D3 om.; G3 वै (for मे). — $^{d}$) K2 corrupt. M2 कस्य (sic) (for तस्य). Ś1 K1.3 इत्यपि (for नित्यम्). K4 D1 तस्येश्वरस्त्वं नियतं तथैव.

51 $^{a}$) K2 [इ]व (for [इ]ति). Ś1 K D1–4 व (for [अ]थ). G3 [उ]क्तं परि- (for [उ]क्तः प्रति-). M1.2.4 तथा (for तदा). — $^{b}$) T G1 गदाग्रजेनैव तु तेन वीर्यवान्. — $^{c}$) Ś1 (*sup. lin.*) T1 पितृष्वसारम्. K3 Dc1 D4 यथा विधिः. K5 Dn1 D5.7 T2 पितृष्वसारं त्ववद(K5 °मपत)द्यथाविधि; B1.2 °रं प्रतिनंद्य शाश्वतः; G3 M1.2 °रं त्वभिवाद्य सात्वतीं. — $^{d}$) Ś1 K1.3 B1.2 प्र-; T2 G2 M सु- (for सं-). K2.4 D1 G3 -पूजयंश्च (*for* -पूजितश्). Ś1 K1.3.5 B3.4 [अ]करोद् (for [अ]गमत्).

तया स सम्यक्प्रतिनन्दितस्तदा
तथैव सर्वैर्विदुरादिभिस्ततः ।
विनिर्ययौ नागपुराद्गदाग्रजो
रथेन दिव्येन चतुर्युजा हरिः ॥ ५२
रथं सुभद्रामधिरोप्य भामिनीं
युधिष्ठिरस्यानुमते जनार्दनः ।
पितृष्वसायाश्च तथा महाभुजो
विनिर्ययौ पौरजनाभिसंवृतः ॥ ५३
तमन्वगाद्वानरवर्यकेतनः
ससात्यकिर्माद्रवतीसुतावपि ।
अगाधबुद्धिर्विदुरश्च माधवं
स्वयं च भीमो गजराजविक्रमः ॥ ५४
निवर्तयित्वा कुरुराष्ट्रवर्धनां-
स्ततः स सर्वान्विदुरं च वीर्यवान् ।
जनार्दनो दारुकमाह सत्वरः
प्रचोदयाश्वानिति सात्यकिस्तदा ॥ ५५
ततो ययौ शत्रुगणप्रमर्दनः
शिनिप्रवीरानुगतो जनार्दनः ।
यथा निहत्यारिगणाञ्शतक्रतु-
र्दिवं तथानर्तपुरीं प्रतापवान् ॥ ५६

इति श्रीमहाभारते आश्वमेधिकपर्वणि एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

52 $^a$) K2 तथा (for तया). Ś1 K1. 3. 5 च; Dc1 D3 om.; T G1 [त्व]पि (for स). S (except M4) -पूजितस् (for -नन्दितस्). K4 T1 M3 तथा; B Dn1 D2–4 ततस्; Dc1 om. (for तदा). — $^b$) K1 सुतः (sic); K4 D1 तु सः; B1. 3–5 D2. 3 तदा; B2 Dc1 Dn1 D4. 5 G3 तथा; D6 च (for ततः). — $^d$) Ś1 K1 चतुर्भुजा; K2 °र्युजो; B2 (marg. as in text). 3 Dn1 D5. 6 G1. 2 °र्भुजः. Ś1 K1 तदा; K3 तथा; K5 B Dc1 D2–4 प्रभुः; Dn1 D5. 6 स्वयं (for हरिः).

53 $^a$) K2. 5 B1. 2. 5 Dn1 D2–6 रथे. K3. 4 D1 अभि- (for अधि-). K5 B (except B2) Dc1 Dn1 D2–4 भाविनीं (D3 °नि); M3 माधवीं. — $^b$) K3 गदाग्रजः; B1. 2 महात्मनः. — $^c$) K5 B D (except D1) पितृष्वसुश्चापि (for °ष्वसायाश्च). K2. 4 D1 तदा (for तथा). K3 महाभुजस्तथा (by transp.); G3 जनार्दनस्तदा. Ś1 K1 पितृस्व(K1 °श्व)सायाश्च महाभुजस्तदा. — $^d$) Dn1 D5. 6 राज- (for पौर-). K3 G2 -वंदितः; G3 -सत्कृतः (for -संवृतः).

54 $^a$) K1 अन्वयुर् (sic); K4 Dn1 D1. 5. 6 G3 M1. 2 °याद्; Dc1 °शाद् (sic) (for °गाद्). K3 तमन्वगच्छत्कपिवर्यकेतनः. — $^b$) K1 D1 ससात्यकिमा(D1 °म)द्रिवती-; K4 °कीमाद्रवती-. Ś1 उभौ (for अपि). — $^c$) K1 D3 -बुद्धि- (for -बुद्धिर्). — K1 repeats 54$^d$ after 55$^c$. — $^d$) K1 (second time) नग- (for गज-). K3 -विद्रुताः (sic) (for -विक्रमः).

55 $^a$) K1 तान्वर्तयित्वा; G3 निवर्त्य चैनान् (for निवर्तयित्वा). K2. 3. 5 D1 T G1 M2 -राष्ट्रवर्धनं; K -शब्दवर्धनं; D5 -राजवर्धनांस्. — $^b$) D3 G3 च; M om. (for स). D5. 6 सम्यग् (for सर्वान्). — D om. (? hapl.) 55$^c$–56$^b$. — $^c$) K3 दाहकामाह (sic) G1 दारुक एव (sic) (for °कमाह). Ś1 K B4 D D1. 5. 6 M1 सत्वरं. — After 55$^c$, K1 repeats 54 K1 om. 55$^d$–56$^d$. — $^d$) Dc1 चचोदय (sic); I प्रणो° (for प्रचो°). Ś1 अथ (for इति). B Dn1 D2. 4- G2. 3 M सात्यकिं; Dc1 °कस्. K2. 3. 5 Dn1 D4–6 T G1 M तथा (for तदा).

56 K1 om. 56; D3 om. 56$^{ab}$ (for both, cf. v. 55). — $^a$) G3 ततो ययौ तत्र गणावमर्दनः. — $^b$) K2 Dc1 D1 शनि- (for शिनि-). — $^c$) B5 T1 G2 M3 तथा (for यथा). K3 B1 Dn1 D5. 6 -गणं; G3 -भटा (for -गणान्). — $^d$) T1 G1. 2 M3. 4 यथा (for तथा K2. 4 Dc1 [आ]नर्तपुरिं (K2 °रं). D4 G3 जनार्दनः (f प्रतापवान्).

Colophon. — *Sub-parvan :* D2. 3 उत्तंकोपाख्या — *Adhy. name :* K2. 4 D1 श्रीकृष्णप्रयाणं; G3 श्रीकृ प्रतियानं; M1. 2 वासुदेवनिर्याणं. — *Adhy. no.* (figur words or both): Ś1 60; B1. 2 G3 51 (as in text Dn1 M4 (*inf. lin.*) 52; D4 48; T1 38; T2 G M 37. — *Śloka no. :* Dn1 58.

1536
53. 1
53. 1

वैशंपायन उवाच ।

तथा प्रयान्तं वार्ष्णेयं द्वारकां भरतर्षभाः ।
परिष्वज्य न्यवर्तन्त सानुयात्राः परंतपाः ॥ १
पुनः पुनश्च वार्ष्णेयं पर्यष्वजत फल्गुनः ।
आ चक्षुर्विषयाच्चैनं ददर्श च पुनः पुनः ॥ २
कृच्छ्रेणैव च तां पार्थो गोविन्दे विनिवेशिताम् ।
संजहार तदा दृष्टिं कृष्णश्चाप्यपराजितः ॥ ३
तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनः ।
बहून्यद्भुतरूपाणि तानि मे गदतः शृणु ॥ ४
वायुर्वेगेन महता रथस्य पुरतो ववौ ।
कुर्वन्निःशर्करं मार्गं विरजस्कमकण्टकम् ॥ ५
ववर्ष वासवश्चापि तोयं शुचि सुगन्धि च ।
दिव्यानि चैव पुष्पाणि पुरतः शार्ङ्गधन्वनः ॥ ६
स प्रयातो महाबाहुः समेषु मरुधन्वसु ।
ददर्शाथ मुनिश्रेष्ठमुत्तङ्कममितौजसम् ॥ ७
स तं संपूज्य तेजस्वी मुनिं पृथुललोचनः ।
पूजितस्तेन च तदा पर्यपृच्छदनामयम् ॥ ८
स पृष्टः कुशलं तेन संपूज्य मधुसूदनम् ।

## 52

1 K2 श्रीकृष्ण (for वैशंपायन). — [a]) S (except G3) ततः (for तथा). D5.6 M1.2.4 प्रयातं. K4 तथा प्रयाते वार्ष्णेये. — K3 om. (hapl.) 1[b]–2[a]. — [b]) Ś1 K1.2.4.5 D1.3 भरतर्षभ. — K2 om. 1[cd]. — [c]) K1 न्य*र्तंत; K4 D5 निवर्तंत; D3.6 न्यवर्तते. — [d]) K4 D5 परंतप. K1 D6 महायात्रा परंतप.

2 K3 om. 2[a] (cf. v. l. 1). — [a]) K2 om.; K5 तु (for च). — [b]) K1.5 Dn1 D2.4.6 पर्यस्वजत; K2 B2 T G1.2 M1–3 परिष्वज्य च (K2 °ज्यत; B2 M1–3 °जत). Some MSS. फाल्गुनः; Ś1 K1.3 फल्गुणः. — [c]) K4 आचख्युर्; Dc1 अचक्षुर्. Ś1 विषयांश् (for °याच्). G3 om. च. K3 आ चक्षुर्विषयं चैतां; D6 आचख्युर्विषयांश्चैवं. — [d]) K1.3.5 B5 D2–4 M ददर्श स; B3.4 Dc1 D5.6 स ददर्श (for ददर्श च). K2 om. one पुनः.

3 [a]) D3 दुःखेन (for कृच्छ्रेण). Ś1 K1.3 M1 च (for [ए]व). Ś1 K1–3 तदा; B1.2.4 Dn1 D5.6 G3 तु तां; M4 स तां (for च तां). G3 प्रोक्तां (for पार्थो). — [b]) K3 B2 T1 G3 M1.2 गोविंद-. K2 विनिवेशिनं; Dc1 °शिता; D6 °शितं. — [c]) D3.6 स (for सं-). B1.4 Dn1 D5.6 ततो (for तदा). Dn1 D6 दृष्टिं (for दृष्टिं). — [d]) D2–4 [अ]पराजयः.

4 [a]) G3 तत्र (for तस्य). B1 [अ]त्र (for [आ]-सन्). G1.2 M तस्य प्रयास्यतो ह्यासन् (G1 वासं). — K2 om. (hapl.) 4[d]–6[c]. — [d]) K5 मां (for मे).

5 K2 om. 5 (cf. v. l. 4). — [a]) K1.4 वायु- (for वायुर्). — [b]) B8 G3 ययौ (for ववौ). — [d]) S नीरजस्क (G3 °स्कु)म् (for विरज°).

6 K2 om. 6[abc] (cf. v. l. 4). — [a]) K4.5 B D G3 [ए]व (for [अ]पि). — [c]) K4 मम दिव्यानि पुष्पाणि. — [d]) K2.5 D6 T -धन्विनः (for -धन्वनः).

7 [a]) K4.5 T G2.3 सं- (for स). K2.4 D1 महेष्वासः (for महाबाहुः). — [b]) Dc1 मरुधन्वना. — [c]) K2.4.5 ददर्श च द्विजश्रे(K5 °जं श्रे)ष्ठम्. — [d]) K3 B (except B2) D2 उतंकम्; T2 उदंकम्. K2.4.5 D1 उत्तंकमृषिसत्तमं. — T1 G M subst. for 7[cd]: T2 ins. after 7:

103* आगच्छन्तमपश्यद्वै उदङ्कं नाम नामतः ।
[G1 अगच्छंतम्. G3 तापसं (for नामतः).]

S cont.:

104* महर्षिं सिद्धतपसं सर्वलोकान्तविश्रुतम् ।
[G3 M1.2 -लोकेषु (for -लोकान्त-).]

8 [a]) K2 च तं (for तं सं-). B1.2 D2–4 मेधावी (for तेजस्वी). — [b]) K2 मुनिः. K1 पृथुवि-; D8 सुपृथु-; G3 कमल- (for पृथुल-). — [c]) K4 B1 D1–4 तु तदा; T1 G2 M च तथा; G1 तपसा (for च तदा).

9 [a]) K4 Dc1 संपृष्टः (Dc1 °ष्ट-). B4 कुशलस्. — [b]) Ś1 K1–3 मधुसूदनः. — [c]) K3 B उतंको; S उदंको. — [d]) K4 D1 प्रोवाच (for पप्रच्छ). K2 M2 माधवः. G3 पप्रच्छ मधुसूदनं.

उत्तङ्को ब्राह्मणश्रेष्ठस्ततः पप्रच्छ माधवम् ॥ ९
कच्चिच्छौरे त्वया गत्वा कुरुपाण्डवसद्म तत् ।
कृतं सौभ्रात्रमचलं तन्मे व्याख्यातुमर्हसि ॥ १०
अभिसंधाय तान्वीरानुपावृत्तोऽसि केशव ।
संबन्धिनः सुदयितान्सततं वृष्णिपुङ्गव ॥ ११
कच्चित्पाण्डुसुताः पञ्च धृतराष्ट्रस्य चात्मजाः ।
लोकेषु विहरिष्यन्ति त्वया सह परंतप ॥ १२
स्वराष्ट्रेषु च राजानः कच्चित्प्राप्स्यन्ति वै सुखम् ।
कौरवेषु प्रशान्तेषु त्वया नाथेन माधव ॥ १३
या मे संभावना तात त्वयि नित्यमवर्तत ।
अपि सा सफला कृष्ण कृता ते भरतान्प्रति ॥ १४

वासुदेव उवाच ।

कृतो यत्नो मया ब्रह्मन्सौभ्रात्रे कौरवान्प्रति ।
न चाशक्यन्त संधातुं तेऽधर्मरुचयो मया ॥ १५
ततस्ते निधनं प्राप्ताः सर्वे ससुतबान्धवाः ।
न दिष्टमभ्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा ।
महर्षे विदितं नूनं सर्वमेतत्तवानघ ॥ १६
तेऽत्यक्रामन्मतिं मह्यं भीष्मस्य विदुरस्य च ।
ततो यमक्षयं जग्मुः समासाद्येतरेतरम् ॥ १७
पञ्च वै पाण्डवाः शिष्टा हतमित्रा हतात्मजाः ।

C. 14. 1. B. 14. 5. K. 14. 5.

---

10 Before 10, M1.2 ins. उदङ्कः. — [a]) K1 नोनौ (sic); K4 D1 सौरे (for शौरे). G3 वीर (for गत्वा). — [b]) K2.4.5 D1 -संसदं; D5.6 -संगमं; M -संमतं (for -सद्म तत्). — [c]) K2.3 D1 सौभ्रातृम्. B1 D2–4 T2 M4 अतुलं; G2.3 अमलं (for अचलं). K5 कृतं सौभ्रातृवचनं.

11 [a]) K2.4.5 B D G1.2 अपि (for अभि-). — [c]) G3 सुसंबंधिः (sic). K5 T2 G2 M1–3 सुदयिताः; B2 Dn1 D2–4 स्वदयितान् (for सु°). — [d]) K3 कृष्ण- (for वृष्णि-). K2 G1 -पुंगवः; D4 °वान्. K5 सततं कृष्ण- (also कुरु)पुंगवाः.

12 [a]) D6 राजन् (for पञ्च). — [b]) K1–3 Dc1 D3–6 चात्मजः. — B3 om. 12[cd]. — [c]) T G2 M विचरिष्यंति; G3 विहरिष्यंते. — [d]) K3 G2 परंतपाः.

13 [a]) K1 सु- (for स्व-). M3 -राज्येषु; Bom. ed. -राष्ट्रे ते (for -राष्ट्रेषु). B4 स्वराष्ट्रे चैव राजानः; G3 स्वेषु देशेषु रा°. — [b]) D5.6 आप्स्यंति (for प्रा°). K2 यः (sic); G1 नः (for वै). — [d]) B4 Dn1 D5.6 केशव (for माधव).

14 [a]) T G1.2 सा (for या). K2.4 D1 कृष्ण (for तात). — [b]) K2 मने मे संप्रवर्तते (sic). — [c]) M1 ते (for सा). K2 om.; Dn1 D5.6 तात (for कृष्ण). — [d]) K2 om. कृता. T2 G भारतान्; M1.2 सफलान् (for भरतान्). — After 14, Ś1 K1.3 ins. an addl. colophon [ *Adhy. no.:* Ś1 61 ].

15 G1 om. (hapl.) 15[ab] with the ref. K2.4.5 D1 कृष्ण; Dn1 D5.6 श्रीभगवान् (for वासुदेव). — [a]) K3 महान् (for मया). B Dc1 D2–6 पूर्वं (for ब्रह्मन्). — [b]) K2 तत्र मे; K4.5 D1 प्रशमे; B Dc1 D5 सौसा( B3 °पा )म्ये; Dn1 D2.4.6 G3 M4 (*inf. lin.*) सौ( D4 G3 सं )शाम्ये; T1 सौकर्ये; T2 सौजन्ये; G2 सजाने; M3 सुमहान्; M4 सौषम्ये (for सौभ्रात्रे). K3 भरतान् (for कौरवान्). — [c]) T1 G2 M1 शक्यं तु; T2 G3 M2 [अ]शक्यं तु (G3 च) (sic); M3 शक्यास्तु (for [अ]शक्यन्त). Ś1 K1.3 संयंतुं; K2.4 D1 संस्थातुं (for संधातुं). — For 15[cd], B Dc1 Dn1 D2–6 subst. :

105* नाशक्यन्त यदा साम्ये ते स्थापयितुमञ्जसा ।

[ D2 नाशकत. Dc1 सोम्ये; D6 शाम्ये (for साम्ये). ]

16 [b]) G1 कौरव्याः (for सर्वे स-). D5 सहित-; D6 सुदित- (for ससुत-). — [c]) K1 व्यति- (submetric); K4 B1.5 Dn1 D4 G3 अप्यति-; B3 D2.3.6 अत्यति- (for अभ्यति-). Dc1 D5.6 -क्रांतं (for -क्रान्तुं). — [d]) D2–4 धनेन (for बलेन). K4 D1 च; G3 ह (for वा). — [e]) B1.5 Dc1 Dn1 D3.6 भूयः (for नूनं). — [f]) D2–4 सत्यम् (for सर्वम्). K4 तत्र; K5 चैतत्; D1 तच्च (for एतत्). M3 त्वया (for तव).

17 [a]) D1.6 corrupt. K5 ये; D5 G2 न (for ते). Dc1 ह्यकामन्; G2 [अ]तिक्रामन्. M1.2 मतं (for मतिं). G3 अत्यकामन्वचो मह्यं. — After 17[b], D1 ins.:

106* यथा तु मिलितं सर्वं मह्यं भीष्मस्य संगरम् ।

— [c]) Dc1 -क्षये; D4 -गृहं (for -क्षयं). — [d]) K5 परस्परं (for [इ]तरेतरम्).

18 [a]) K2.4 B D G1.3 [ए]व (for वै). D6 चाष्टा

धार्तराष्ट्राश्च निहताः सर्वे ससुतबान्धवाः ॥ १८
इत्युक्तवचने कृष्णे भृशं क्रोधसमन्वितः ।
उत्तङ्कः प्रत्युवाचैनं रोषादुत्फाल्य लोचने ॥ १९
यस्माच्छक्तेन ते कृष्ण न त्राताः कुरुपाण्डवाः ।
संबन्धिनः प्रियास्तस्माच्छप्स्येऽहं त्वामसंशयम् ॥ २०
न च ते प्रसभं यस्मात्ते निगृह्य निवर्तिताः ।
तस्मान्मन्युपरीतस्त्वां शप्स्यामि मधुसूदन ॥ २१
त्वया हि शक्तेन सता मिथ्याचारेण माधव ।
उपचीर्णाः कुरुश्रेष्ठा यस्त्वेतान्समुपेक्षथाः ॥ २२

वासुदेव उवाच ।

शृणु मे विस्तरेणेदं यद्वक्ष्ये भृगुनन्दन ।
गृहाणानुनयं चापि तपस्वी ह्यसि भार्गव ॥ २३
श्रुत्वा त्वमेतदध्यात्मं मुञ्चेथाः शापमद्य वै ।
न च मां तपसाल्पेन शक्तोऽभिभवितुं पुमान् ॥ २४
न च ते तपसो नाशमिच्छामि जपतां वर ।
तपस्ते सुमहद्दीप्तं गुरवश्चापि तोषिताः ॥ २५

---

(sic) (for शिष्टा). — b) K4 B2.3.5 Dn1 D2-6 हतामित्रा; M3 हतं मित्राः (sic) (for हतमित्रा). B5 हतौजसः; T G1 हतप्रजाः (for हतात्मजाः). — c) Ś1 K3 तु निहताः; D1 च नियताः; S (except G3) हताः सर्वे (for च निहताः). — d) B3 -राक्षसाः (for -बान्धवाः). S (except G3) सर्वैश्च सुत(T G2 सह)बांधवैः.

19 a) Ś1 K1.3 इत्युक्तवति कृष्णे तु; T1 G1 °क्तवचनं कृष्णं. — After 19a, Dc1 reads 20bc. — b) K2 स च (for भृशं). Ś1 K1 दुःख-; K2.3 शोक-; K5 M3 कोप- (for क्रोध-). — c) K1 B1.2 उतंकः; K2 उत्तकः; T G1.2 M उदंकः. Dc1 Dn1 D4-6 इत्युवाच (for प्रत्यु°). D1 T G1.2 M1.2 [इ]दं (for [ए]नं). B3-5 उतंक इत्युवाचैनं. — d) K1 उत्पात्य; T1 उत्प्लुत्य; G1.2 उद्धृत्य; M2 उत्पाट्य (for उत्फाल्य). K2.4.5 B D रोषादुत्फुल्ललोचनः (B3 °ने; D3 °नं); T2 G3 °दुद्वृत्तलोचनः.

20 Before 20, Ś1 K B2 Dc1 Dn1 D5.6 ins. उत्तंकः; B3-5 उतंकः; T G1.2 M उदंकः. Dc1 reads 20bc after 19a. — b) K1 Dc1 D6 त्राता. B Dc1 Dn1 D2-4 -पुंगवाः (for -पाण्डवाः). — c) D5.6 सर्वे स्थिताः (for संबन्धिनः). — d) K1 Dc1 D3 शप्ये; K3 शपे (for शप्स्ये). K2.4.5 D1 G3 शप्स्ये(K2 °स्ये)हं त्वां (K2 त्वा) न संशयः; T G1.2 M शप्स्ये त्वां (M2-4 त्वा) नात्र संशयः.

21 a) G1 स (for न). G1 सर्वे; G3 M3 च वै (for च ते). D1 प्रशमं (for प्रसभं). K4 B1 D1 तस्मात्. T1 न सर्वत्र नवं यस्मात्. — b) M1 निगृह्य न (for ते निगृह्य). K5 B D (except D1) निवारिताः; M3 न वर्तिताः (for निव°). K1 तन्निगृह्य निवृत्तितः. — c) M2-4 त्वा (for त्वां).

22 a) D2-4 यस्मात् (for त्वया). B1.2.4.5 D (except D1) transp. हि and शक्तेन. K1 B3 त्वया शक्तेन महता; G3 त्वया शक्तेन न त्राता. — c) D2-4 ते परीताः; T G1 प्रमादेन; G3 प्रमापिताः; M1.2.4 प्रमादिना; M3 प्रमाथिताः (for उपचीर्णाः). G2 प्रमाथिनः कुरुश्रेष्ठो (sic). — d) K2.4 D1 त्वं तान् (for त्वेतान्). B1.2.4.5 Dc1 Dn1 D2-6 नश्यंतः समु(Dn1 सम ह्यु-; D5.6 सम उ)पेक्षिताः; B3 G3 स्वायत्ताः (G2 स त्वया) समुपेक्षिताः; T G1.2 M यस्मात्सम्यगुपेक्षिताः.

23 K2.4 D1 श्री(K4 om. श्री)कृष्ण; G3 श्रीभगवान् (for वासुदेव). — b) Ś1 K1.3 यद्वक्ष्ये द्विजसत्तम. — c) D6 corrupt. K1.3 [अ]नुशयं; D5 °नये; M1.2 °दयं (for °नयं). G3 [ए]व (for [अ]पि). — d) D1 तपसि; G1 तपन्वै (for तपस्वी).

24 a) B4 D5 च; Dc1 om.; D2-4 T G1.2 तु (for त्वम्). B4 Dc1 D2-5 T G1.2 मे तद् (for एतद्). K2.4 D1 श्रुत्वा ममेदमध्यात्मं; K5 ममेदमध्यात्ममुचे (sic); D6 अश्रुत्वा च मे तदध्यात्म्यं (hypermetric). — b) T मुच्येथाः. D3 सायम् (sic) (for शापम्). Ś1 K1-3 B3 मे (for वै). — c) B1 G3 M मा (for मां). Dc1 तपसो. G3 तेन (for [अ]ल्पेन). — d) Dc1 शक्यो (for शक्तो). T G1.2 M शक्नोति शपितुं पुमान्; G3 शक्तो हि भावितुं भवान्.

25 a) K1 G3 मे (for ते). — b) K2.4 B1.4.5 D (except D6) T G1 M4 (*inf. lin.* as in text) तपतां; B2 G2 तपसां (for जपतां). G3 गच्छेयं तपसां वर. — c) D3 ते तु; D6 तेपे (for ते सु-). K5 B1.2.4.5 D2.3 T2 G1.3 तप्तं (for दीप्तं). K3 तपस्त्वया महत्तप्तं; D1 तपस्ते तु समुद्दीप्तं. — d) Ś1 K1.3 [ए]व; K5 B1.2.5 D2-4 सु- (for [अ]पि).

26 a) M4 कौमार-. K2 D4 च (for ते). — c) K1.3 तपसा.

कौमारं ब्रह्मचर्यं ते जानामि द्विजसत्तम । दुःखार्जितस्य तपसस्तस्मान्नेच्छामि ते व्ययम् ॥ २६

इति श्रीमहाभारते आश्वमेधिकपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

# ५३

उत्तङ्क उवाच ।
ब्रूहि केशव तत्त्वेन त्वमध्यात्ममनिन्दितम् ।
श्रुत्वा श्रेयोऽभिधास्यामि शापं वा ते जनार्दन ॥ १
वासुदेव उवाच ।
तमो रजश्च सत्त्वं च विद्धि भावान्मदाश्रयान् ।
तथा रुद्रान्वसूंश्चापि विद्धि मत्प्रभवान्द्विज ॥ २
मयि सर्वाणि भूतानि सर्वभूतेषु चाप्यहम् ।
स्थित इत्यभिजानीहि मा तेऽभूदत्र संशयः ॥ ३
तथा दैत्यगणान्सर्वान्यक्षराक्षसपन्नगान् ।
गन्धर्वाप्सरसश्चैव विद्धि मत्प्रभवान्द्विज ॥ ४
सदसच्चैव यत्प्राहुरव्यक्तं व्यक्तमेव च ।
अक्षरं च क्षरं चैव सर्वमेतन्मदात्मकम् ॥ ५
ये चाश्रमेषु वै धर्माश्चतुर्षु विहिता मुने ।
दैवानि चैव कर्माणि विद्धि सर्वं मदात्मकम् ॥ ६

C. 14. 156
B. 14. 54.
K. 14. 54.

Colophon. — *Sub-parvan:* K2. 4. 5 B D उत्तंकोपाख्यानं. — *Adhy. name:* K8 उतंकविश्वरूपदर्शनं. — *Adhy. no.* (figures, words or both): Ś1 62; B1. 2. 5 G8 52 (as in text); Dn1 M4 (*inf. lin.*) 53; T1 39; T2 G1. 2 M 38. — *Śloka no.:* Dn1 26.

## 53

1 B उतंक; S उदंक (for उत्तङ्क). — $^b$) G2 मम (for त्वम्). Ś1 K (except K2) B5 D1-4 अनिंदित (for °तम्). G8 तन्मेध्यात्ममरिंदम. — $^c$) B5 S (except T2) वि- (for ऽभि-). — $^d$) G8 न शापं (for शापं वा). K2 चांते; Dc1 वाथ; D5. 6 ते वा (by transp.); T1 G1. 2 M वापि.

2 K2. 4. 5 D1 G2 श्री(K4 D1 om. श्री)कृष्ण; G8 श्रीभगवान् (for वासुदेव). — $^b$) K2 तद्वि- (for विद्धि). K5 मदात्मकान् (for °श्रयान्). D6 द्विभावादात्मदाश्रयात् (sic). — After 2$^b$, T G M8 ins.:

107* स्थितिसृष्टिलयाध्यक्षो विष्णुब्रह्मेशसंज्ञितः ।
कदाचित्तमसा रुद्रो विष्णुः सत्त्वगुणे स्थितः ।
रजस्यपि तथा ब्रह्मा गुणादन्यगुणानुगौ ।
प्रणवात्मा च शब्दादींस्त्रिगुणात्मा चराचरम् ।

[(L. 1) G2 सृष्टिस्थिति-. G8 ब्रह्मविष्णवीशसंज्ञितः (for the post. half). — (L. 2) M8 रौद्रा. T2 G8 कदाचित्तमसो रौद्रो (for the prior half). G8 सर्वे- (for सत्त्व-). — (L. 3) G8 M8 [अ]न्यः स्याद् (for ब्रह्मा). T1 G1 स्वान्गुणान(G1 °न्य)गुणानुभौ; G2 स्याद्गुणादगुणानुगौ (for the post. half). — (L. 4) G8 शब्दात्मा (for शब्दादींस्). ]

— K2 om. 2$^{cd}$. — $^c$) B1 Dn1 D5. 6 T2 G8 वापि; B3. 5 D2. 4 काले (for चापि).

3 $^a$) Ś1 मत्तः; K2 मया (for मयि). — $^d$) D6 G8 तत्र (for अत्र).

4 D4 om. 4$^c$-5$^b$. — $^a$) D8 T1 G1 -गुणान् (for -ग°). — $^b$) K1 -रक्षांसि (for -राक्षस-). — $^c$) S विबुधाप्सरसश्चैव. — For 4$^{bc}$, B D (except D1; D4 om.) subst.:

108* यक्षगन्धर्वराक्षसान् ।
नागानप्सरसश्चैव.

— $^d$) K3 ये चान्ये द्विजसत्तम.

5 D4 om. 5$^{ab}$ (cf. v. l. 4). — $^c$) K1 चापरं; K2 विक्षरं; D8 M2 चाक्षरं (for च क्षरं). — $^d$) T1 सत्यम् (for सर्वम्). G8 मदाश्रयं (for °त्मकम्). K8 सर्वं मत्प्रभवं द्विज; K4. 5 B1. 2 D1. 8 सर्वं स्थावरजंगमं.

6 K2. 4 D1 om. (hapl.) 6. — $^a$) T1 यथा (for ये च). B3. 4 Dc1 आश्रमेषु च ये धर्माश्च. — $^b$) Dc1

च सदसच्चैव यद्विश्वं सदसतः परम् ।
ः परं नास्ति चैव देवदेवात्सनातनात् ॥ ७
ङ्कारप्रभवान्वेदान्विद्धि मां त्वं भृगूद्वह ।
सोमं तथैवेह त्रिदशाप्यायनं मखे ॥ ८
ारमपि हव्यं च विद्धि मां भृगुनन्दन ।
ध्वर्युः कल्पकश्चापि हविः परमसंस्कृतम् ॥ ९
ाता चापि मां स्तौति गीतघोषैर्महाध्वरे ।
यश्चित्तेषु मां ब्रह्मञ्शान्तिमङ्गलवाचकाः ।

स्तुवन्ति विश्वकर्माणं सततं द्विजसत्तमाः ॥ १०
विद्धि मह्यं सुतं धर्ममग्रजं द्विजसत्तम ।
मानसं दयितं विप्र सर्वभूतदयात्मकम् ॥ ११
तत्राहं वर्तमानैश्च निवृत्तैश्चैव मानवैः ।
बह्वीः संसरमाणो वै योनीर्हि द्विजसत्तम ॥ १२
धर्मसंरक्षणार्थाय धर्मसंस्थापनाय च ।
तैस्तैर्वेषैश्च रूपैश्च त्रिषु लोकेषु भार्गव ॥ १३
अहं विष्णुरहं ब्रह्मा शक्रोऽथ प्रभवाप्ययः ।

---

स्रो; Dn1 D5.6 चतुर्धा; G3 त्रिषु वै (for चतुर्षु). D2-6 विदिता (for विहिता). — D4 om. 6ᶜ-7ᵇ. ᶜ) K1 सर्वाणि (for कर्माणि). B Dc1 Dn1 D2.3. वैदिकानि च सर्वा(D6 धर्मा)णि; S (except G3) दैवनि च कर्माणि. —ᵈ) K5 सर्वं विद्धि (by transp.). सदात्मकं; B1.2 मदाश्रयं; G3 गुणात्मकं (for मदा°). G1.2 M विद्धि सर्वान्गुणान्मम.

7 D4 om. 7ᵃᵇ (cf. v. l. 6). —ᵃ) K2 om. असच्च. 1.4 D1 T G1.2 M असच्च सच्चैव च (G1 हि) यद्; G3 च्चैव तु सच्चैव. —ᵇ) Hypermetric. K5 B Dc1 n1 D2.3.5.6 T सदसत्; G3 सर्वतः (for सदसतः). 2 परंतपः (sic) (for परम्). —ᶜ) K4 D1 मत्तः; 3 M4 अतः (for ततः). K3.5 B Dc1 Dn1 D2-6 ततः K3 B2 Dn1 D4-6 मत्तः) परतरं नास्ति. —ᵈ) D2-4 देवात्; T1 चैवं वेदात्; T2 G1.3 वेदवेदात् (for वदेवात्).

8 ᵃ) K2 B Dc1 Dn1 D5.6 T1 G3 -प्रमुखान्; D2-4 थमान् (for -प्रभवान्). K2 G2 देवान् (for वेदान्). -ᵇ) Ś1 K1.3 मे त्वं; K2 मत्तो; M2 मा त्वं (for मां ). —ᶜ) K3.5 सूर्यं; D3 यूप-; M1.2 यूपः (for पं). B1.2 D2 होमं (for सोमं). K2 तथैवाज्ये; 1.2 D5.6 चरुं सोमं; B3.4 च होमं च; B5 Dc1 Dn1 2-4 चरुं होमं (for तथैवेह). —ᵈ) Ś1 K1 स वै; 2 मुखे; K3 च वै (for मखे). K5 त्रिदशाश्चापि ते खे; M3 °शाप्ययनं मखे.

9 ᵃ) K3 चापि (for अपि). K4.5 D1 होतव्यं (for व्यं च). —ᵇ) M मा (for मां). K4 D1 त्वं भृगूद्ह (for भृगुनन्दन). —ᶜ) K1.3 Dn1 D6 अध्वर्युं-. Ś1 K1-4 D1 कल्पयामास; K5 °तंत्रं च; D6 °कश्चैव; G1 माश्चापि (for °कश्चापि). —ᵈ) D3 हव्यं.

10 ᵃ) K3 वा (for च). K1-3 M मा (for मां). K4 D1 विद्धि (for स्तौति). —ᵇ) K2 महाध्वरैः. — D4 om. 10ᶜᵈᵉᶠ. —ᶜ) Ś1 K1.3 प्रायश्चित्तेपि. K3 सा; M मा (for मां). K5 विद्धि; D6 ब्रह्म; G3 ब्रह्मा. —ᵈ) K2 तथा (for शान्ति-). K1-3 -वाचकः. —ᵉ) K2 स्तवंति. —ᶠ) K1.5 Dc1 Dn1 D5.6 T G1 M1 द्विजसत्तम.

11 K2 om. (hapl.) 11ᵃᵇ. —ᵃ) D1 विधिर् (for विद्धि). B1.5 D2-4 मे स्व-; B2 G3 M3 मेध (for मह्यं). T2 G1 तु तद् (for सुतं). B3.4 Dc1 विद्धि धर्मं मम सुतम्; Dn1 D5.6 मम विद्धि सुतं धर्मम्; T1 विद्धि हव्यं तु तद्धर्मम्. —ᵇ) Dc1 अग्रजं तपतां वर. — K4 D2-4 om. (hapl.) 11ᶜ-12ᵈ. —ᶜ) M2 दयितो. K5 विप्रं. —ᵈ) Ś1 K1.3 -भवात्मकं; K2 G M -गुणा° (for -दया°).

12 K4 D2-4 om. 12 (cf. v. l. 11). —ᵃ) G3 अत्र (for तत्र). K1.2 वर्तमानश्. — K2 om. (hapl.) 12ᵇ-13ᵃ. —ᵇ) D1 S [अ]पि (for [ए]व). K5 B5 मानसैः; B4 Dc1 विग्रहैः (for मानवैः). — D1 om. 12ᶜ-13ᵇ. —ᶜ) Ś1 K1.3 संसरमानो; B1 संसारमाणो. T2 यो (for वै). G3 बहुधा म्रियमाणो वै. —ᵈ) G3 वर्तेयं (for योनीर्हि). B Dc1 Dn1 D5.6 G2 M योनीर्वि- (B3.4 °निर्व-; D6 °निर्वा-; G2 °र्नि व-; M3 °नी व-) र्तामि सत्तम; T G1 निवृत्तो मुनिसत्तम.

13 K3 om. 13ᵃᵇᶜ; D1 om. 13ᵃᵇ (for both, cf. v. l. 12). —ᵃ) T G1.2 लोक- (for धर्म-). K4.5 धर्मसंस्थापनार्थाय; G3 लोकसंरक्षणार्थं च; M3 धर्मसापेक्षणार्थाय. —ᵇ) K4.5 धर्मसंरक्षणाय च. —ᶜ) Ś1 K3 B1.3.4 D5.6 वेशैश्च (B3 °स्तु); K1 वंशैश्च; B2 वेषैः स्व-; D2 वेशैः स्व-; D3.4 वंशैः स्व-; G3 विषय- (for वेषैश्च). K5 तैस्तै रूपैश्च वेषैश्च; Dn1 ततस्तैर्वेषरूपैश्च. —ᵈ) Ś1 K1.3-5 D1 संचरे (K3 °रन्); K2 भारत (for भार्गव).

ग्रामस्य सर्वस्य स्रष्टा संहार एव च ॥ १४
र्मे वर्तमानानां सर्वेषामहमच्युत ।
र्मस्य सेतुं बध्नामि चलिते चलिते युगे ।
स्ता योनीः प्रविश्याहं प्रजानां हितकाम्यया ॥ १५
दा त्वहं देवयोनौ वर्तामि भृगुनन्दन ।
दाहं देववत्सर्वमाचरामि न संशयः ॥ १६
दा गन्धर्वयोनौ तु वर्तामि भृगुनन्दन ।
दा गन्धर्ववच्चेष्टाः सर्वाश्चेष्टामि भार्गव ॥ १७
नागयोनौ यदा चैव तदा वर्तामि नागवत् ।
यक्षराक्षसयोनीश्च यथावद्विचराम्यहम् ॥ १८
मानुष्ये वर्तमाने तु कृपणं याचिता मया ।
न च ते जातसंमोहा वचो गृह्णन्ति मे हितम् ॥ १९
भयं च महदुद्दिश्य त्रासिताः कुरवो मया ।
क्रुद्धेव भूत्वा च पुनर्यथावदनुदर्शिताः ॥ २०
तेऽधर्मेणेह संयुक्ताः परीताः कालधर्मणा ।
धर्मेण निहता युद्धे गताः स्वर्गं न संशयः ॥ २१

C. 14. 1584
B. 14. 54. 22
K. 14. 54. 24

---

14 $^a$) K3 ब्रह्म. — $^b$) T G1. 2 M1. 3. 4 [ऽ]हं (for च). K2. 4 B3. 4 Dc1 Dn1 D1-4 प्रभवाप्ययः (D2. 8 यं); G1 M °प्ययं; G2 °प्यहं. G3 शर्वः शक्रो भवाययौ. — $^c$) B3 om. सर्वस्य. — $^d$) K4 स्रष्टा.

15 D4 om. 15$^{ab}$. — $^a$) K1 D3 अधर्म-; Dc1 व्रधर्मे. — $^b$) Ś1 K1. 3-5 B3. 5 D5. 6 G2 M1. 3 अच्युतः K3. 5 B3 °त) (for अच्युत). K2 सर्वेषां मदनच्युताः (sic). — $^c$) B2 बध्नाति. K2. 4 D1 धर्मसेतुं निव(K2 व व)ध्नामि. — $^d$) K2 च युगे; D4 (marg. *sec. m.*) चलितं (for the second चलिते). D1 चलितं चलितं युगे; G3 चरिते चरिते युगे. — $^e$) Ś1 तासु; B6 तथा (for तास्ता). Dc1 योनिं; D4 योनिः. K2. 4. 5 D1 G3 तां तां योनिं प्रविश्या(K4 D1 °वक्ष्या)हं; T1 G1 तस्मा योनिं प्रविश्याहं. — $^f$) M4 प्राणिनां (for प्रजानां).

16 $^a$) T G1 पुनस् (for यदा). K2 यदा त्वं वेदयोनौ वा; B1. 2 (before corr.) D2-4 यदाहं देवयोनी- (B2 [before corr.] D4 °नि)षु. — $^b$) D8 वक्ष्यामि (for वर्तामि). G3 वर्ते कुरुकुलोद्वह. — Ś1 K1. 3. 5 om. (hapl.) 16$^c$-17$^b$. D1 repeats 16$^{cd}$ after 17$^b$. — $^c$) K4 D1 (both times) तदैव; B3 तदा त्वं; T G1 तदेहं (T °हे); G2 तदेव; M तदेह (for तदाहं). D3 दैववत्; G3 एव तत् (for देववत्). — $^d$) K2 भासयामि (for आचरामि). K4 (marg. *sec. m.*) D1 (both times) भृगू(K4 [orig.] रघू)द्वह (for न संशयः).

17 Ś1 K1. 3. 5 om. 17$^{ab}$ (cf. v. l. 16). D4 om. (? hapl.) 17. — $^a$) G2 यथा (for यदा). K2 B1-4 Dc1 च; B5 Dn1 D5. 6 वा (for तु). — $^b$) G3 वर्तेहं (for वर्तामि). — After 17$^b$, D1 repeats 16$^{cd}$ and om. 17$^{cd}$. — $^c$) K5 चेष्टां; B6 Dc1 D5. 6 सर्वम् (for चेष्टाः). B3 तदा गंधर्वचेष्टायाः; G3 यथा गंधर्ववद्वेषः. — $^d$) K4 चरामि भृगुनंदन; K5 सर्वां चेष्टामि सर्वशः; Dc1 D5. 6 आचरामि न संशयः.

18 $^a$) G1 यथा (for यदा). G3 वर्ते (for चैव). — $^b$) T1 तथा; M3 कदा (for तदा). D6 चेत्तामि (sic); G3 चेष्टा तु (for वर्तामि). — D4 om. 18$^{cd}$. — $^c$) K2 -योनौ च; K4 Dc1 D1 T G -योनौ तु; B1. 2 -योनीषु; B3. 4 -योन्यां तु; B5 -योनीस्तु; Dn1 D5. 6 M -योन्योस्तु (for -योनीश्च). — $^d$) K1 यथाविद्; K2 तदा तद्; D8 तथा* (for यथावद्). K4 तथावृद्धि चराम्यहं; G3 तथावृत्तिश्चरा°.

19 K2 om. (? hapl.) 19$^a$-20$^b$. — $^a$) Ś1 मानुषे; G3 मानुष्यं; M1. 2 °ष्या. K1. 3. 5 Dn1 D2-4 वर्तमानेन; B Dc1 M °ता ते तु; G1 बिभ्रता ते तु. K4 D1 मन्युना वर्तमानेपि. — $^b$) K1. 3 याचितं; K5 D5. 6 G2 याचता; M2 याचितो. B2 कृपणं यांति मायया. — K4 om. (hapl.) 19$^c$-20$^b$. — $^c$) G3 वै (for ते). D4 T2 जातसंमोहो (T2 °हाद्); T1 G1. 2 जयसंमोहाद् (T1 °हा). — $^d$) B1. 3 Dc1 D1-3 [ऽ]गृह्णंत; B5 गृह्णंतु. K5 यद्धितं; B4 T G1. 2 मोहितं (for मे हितम्). B2 Dn1 D4-6 वचोगृह्णंत मोहिताः (B2 °तं).

20 K2. 4 om. 20$^{ab}$ (cf. v. l. 19). — $^a$) B3 जयं (for भयं). T G1. 2 तु (for च). — $^b$) D4 यथा (for मया). — $^c$) G3 M1. 2 क्रुद्धे च (G3 तु). B1. 5 तु (for च). D5. 6 क्रुद्धेन वपुषा भूत्वा. — $^d$) T G1. 2 M उप- (for अनु-). Ś1 K1. 3. 5 D8 -दर्शितं (D3 °तः); K2. 4 D1 -पूर्वशः (for -दर्शिताः). G3 यथावदपि गर्हिताः.

21 $^a$) B1-3 Dc1 स्वेन धर्मेण; Dn1 ते स्वधर्मेण; D5. 6 ते तु पापेन; T2 G1 M4 ते धर्मेण ह (T2 हि); G3 तेनाधर्मेण (for तेऽधर्मेणेह). K3 संयुक्तः. — $^b$) T G1 पतिताः (for परीताः). K4 D1 -कर्मणा; B4 M2. 3

लोकेषु पाण्डवाश्चैव गताः ख्यातिं द्विजोत्तम । एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ २२

इति श्रीमहाभारते आश्वमेधिकपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

# ५४

उत्तङ्क उवाच ।

अभिजानामि जगतः कर्तारं त्वां जनार्दन ।
नूनं भवत्प्रसादोऽयमिति मे नास्ति संशयः ॥ १
चित्तं च सुप्रसन्नं मे त्वद्भावगतमच्युत ।
विनिवृत्तश्च मे कोप इति विद्धि परंतप ॥ २
यदि त्वनुग्रहं कंचित्त्वत्तोऽर्होऽहं जनार्दन ।
द्रष्टुमिच्छामि ते रूपमैश्वरं तन्निदर्शय ॥ ३

वैशंपायन उवाच ।

ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः ।
शाश्वतं वैष्णवं धीमान्ददृशे यद्धनंजयः ॥ ४
स ददर्श महात्मानं विश्वरूपं महाभुजम् ।
विस्मयं च ययौ विप्रस्तद्दृष्ट्वा रूपमैश्वरम् ॥ ५

---

-धर्मिणा ; $D_5$ -धर्मतः. $D_6$ परीता धर्मकालतः. — $^c$) $D_6$ निहतो. — $^d$) $D_6$ स्वर्गे.

22 $^a$) $D_{c1}$ सर्वे ; $G_3$ ख्यातिं ( for चैव ). — $^b$) $D_3$ गताः क्षाति ( sic ) ; $G_3$ गमिष्यंति ( for गताः ख्यातिं ). $K_{2.5}$ न संशयः ( for द्विजोत्तम ). $D_{5.6}$ गताः ख्यातिं ( $D_6$ °तं ) द्विजोत्तमाः. — $^d$) $M_{2-4}$ मा ( for मां ).

Colophon. — *Sub-parvan :* $K_{2.4.5}$ B D ( except $D_1$ ) उत्तं( $B_{1.2.4.5}$ °तं )कोपाख्यानं. — *Adhy. name :* $T_1$ भगवत्तत्त्वं ; $G_3$ श्रीकृष्णमाहात्म्यकथनं. — *Adhy. no.* ( figures, words or both ) : $Ś_1$ 63 ; $B_1$ 56 ; $B_{2.5}$ 53 ( as in text ) ; $D_{n1}$ $M_4$ ( *inf. lin.* ) 54 ; $D_4$ 50 ; $T_1$ 40 ; $T_2$ $G_{1.2}$ M 39 ; $G_3$ 52. — *Śloka no. :* $D_{n1}$ 23.

## 54

1 B उतंक ; S उदंक ( for उत्तङ्क ). — $^b$) $Ś_1$ $K_3$ $M_{2-4}$ त्वा. — $K_4$ $D_1$ om. ( hapl. ) $1^c$–$3^b$. — $^c$) $K_{2.3}$ तव ( for भवत्- ). $K_2$ [ऽ]द्य ( for ऽयम् ). — $^d$) $K_2$ मतिर् ( for इति ). $K_2$ $B_4$ S [अ]त्र ( for [अ]स्ति ). $D_5$ संशयं.

2 $K_4$ $D_1$ om. 2 ( cf. v. l. 1 ). — $^a$) $K_2$ वित्तं ; $G_3$ मनश् ( for चित्तं ). $D_{2.4}$ संप्रसन्नं ; $D_3$ संप्रशांतं. — $^b$) $M_2$ तद् ( for त्वद्- ). $B_2$ ( marg. as in text ) -रतम् ( for -गतम् ). — $^c$) $Ś_1$ $K_{1.3}$ $B_3$ शाप ( for कोप ). $B_{1.2.4.5}$ D ( $D_1$ om. ) विनिवृत्तं च मे ( $D_{c1}$ om. मे ) शापाद्. — $^d$) $G_3$ यदूत्तम ( for परंतप ).

3 $K_4$ $D_1$ om. $3^{ab}$ ( cf. v. l. 1 ). — $^a$) $T_2$ $G_2$ कच्चित् ; M किंचित् ( for कंचित् ). — $^b$) B D ( $D_1$ om. ) त्वत्तोर्हामि ; $T_1$ त्वत्तो भोक्तुं ; $G_1$ त्वद्भक्तोहं ( for त्वत्तोऽर्होऽहं ). $K_2$ ममोपरि रमाप्रिय. — $3^{cd}$ = ( var. ) 6. 33. $3^{cd}$. — $^c$) $Ś_1$ तद् ( for ते ). $K_2$ वासुदेव महा**. — $^d$) $K_{4.5}$ S वैष्णवं ( for ऐश्वरं ). $K_4$ मे नि- ; $D_4$ तद्धि ; $D_6$ विद्धि ; $G_3$ मां नि- ( for तन्नि- ). $K_2$ तद्रूपं दर्शयाद्य वै.

4 $K_2$ om. 4. — $^a$) $K_{4.5}$ $D_1$ तु ( for स ). — $^c$) $K_4$ $D_1$ वैष्णवं शाश्वतं धीमान्. — $^d$) $K_{4.5}$ $D_1$ $G_3$ यद्ददर्श ; $B_2$ ददृशे तद् ; $M_2$ °शे यं ( sic ). $G_2$ ददृशे धर्मनंदनः.

5 After $5^a$, $K_4$ $D_1$ ins. :

109* वैष्णवं रूपमुत्तमम् ।
सुमहत्तेजसा युक्तं.

— $^b$) $Ś_1$ $K_{1.3}$ महा( $K_3$ °ह )द्भुतं ; $D_{c1}$ महाभूतं ; T $G_1$ °भुज. — After $5^b$, $K_{4.5}$ B D $T_2$ ins. :

110* सहस्रसूर्यप्रतिमं दीप्तिमत्पावकोपमम् ।
सर्वमाकाशमावृत्य तिष्ठन्तं विश्वतोमुखम् ।
तद्दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम् ।

[ ( L. 1 ) $D_4$ दीप्त्या यत् ( for दीप्तिमत् ). — ( L. 2 ) $D_4$ आकाशं ; $T_2$ सर्वमावृत्य तिष्ठंतं ( for the prior half ). $D_4$ आकाशं ; $T_2$ विश्वेशं ( for तिष्ठन्तं ). $B_2$ $D_{n1}$ $D_{2-6}$ सर्वतोमुखं ( for विश्व° ). — ( L. 3 ) $D_{4.6}$ $T_2$ तं ( for तद् ). $B_{1.2}$ ( marg.

उत्तङ्क उवाच ।

विश्वकर्मन्नमस्तेऽस्तु यस्य ते रूपमीदृशम् ।
पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः ॥ ६
द्यावापृथिव्योर्यन्मध्यं जठरेण तदावृतम् ।
भुजाभ्यामावृताश्चाशास्त्वमिदं सर्वमच्युत ॥ ७
संहरस्व पुनर्देव रूपमक्षय्यमुत्तमम् ।
पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छामि शाश्वतम् ॥ ८

वैशंपायन उवाच ।

तमुवाच प्रसन्नात्मा गोविन्दो जनमेजय ।
वरं वृणीष्वेति तदा तमुत्तङ्कोऽब्रवीदिदम् ॥ ९
पर्याप्त एष एवाद्य वरस्त्वत्तो महाद्युते ।
यत्ते रूपमिदं कृष्ण पश्यामि प्रभवाप्ययम् ॥ १०
तमब्रवीत्पुनः कृष्णो मा त्वमत्र विचारय ।
अवश्यमेतत्कर्तव्यममोघं दर्शनं मम ॥ ११

C. 14. B. 14. K. 14.

---

as above). 3 अच्युतं; D5. 6 उत्तमं (for अद्भुतम्). ]

—$^{c}$) G3 ततो (for ययौ). —$^{d}$) B D (except D1) तं दृष्ट्वा परमेश्वरं.

6 B उतंक; S उदंक (for उत्तङ्क). — After the ref., T G M3. 4 ins.:

111* नमो नमस्ते सर्वात्मन्नारायण परात्पर ।
परमात्मन्पद्मनाभ पुण्डरीकाक्ष माधव ।
हिरण्यगर्भरूपाय संसारोत्तारणाय च ।
पुरुषाय पुराणाय चान्तर्यामाय ते नमः ।
अविद्यातिमिरादित्यं भवव्याधिमहौषधम् । [5]
संसारार्णवपारं त्वां प्रणमामि गतिर्भव ।
सर्ववेदैकवेद्याय सर्वदेवमयाय च ।
वासुदेवाय नित्याय नमो भक्तप्रियाय ते ।
दयया दुःखमोहान्मां समुद्धर्तुमिहार्हसि ।
कर्मभिर्बहुभिः पापैर्बद्धं पाहि जनार्दन । [10]

[ (L. 1) T G1 परात्मक (for परात्पर). — (L. 3) T1 G1. 2 संसारोत्तरणाय च (for the post. half). — (L. 4) T2 G1 शांतशामाय; G3 भूतांतर्धाय (for चान्तर्यामाय). — (L. 5) G3 तव (for भव-). T2 G1 -महौषधिं. — (L. 6) T1 G1 -सारं (for -पारं). M4 त्वा (for त्वां). — (L. 7) T2 G1 सर्ववेदैरवेदाय (for the prior half). G1. 2 सर्ववेद- (for °देव-). — (L. 9) M4 मा (for मां). G3 यदा हि दुःखमापन्नं (for the prior half). G3 त्वम् (for इह). ]

—$^{a}$) Ś1 K1–3 D6 -कर्म; G3 -रूप (for -कर्मन्). —$^{b}$) T2 G3 ऐश्वरं (for ईदृशम्). B D (except D1) विश्वात्मन्वि(Dc1 °त्मा वि)श्वसंभव. — D3 om. $6^{c}$–$7^{b}$. —$^{c}$) K3 च (for ते). Ś1 K1 देवी; K3 देव (for व्याप्ता). —$^{d}$) Ś1 B2 संवृतं; K4 Dc1 D1 च वृतं (for चावृतं).

7 D3 om. $7^{ab}$ (cf. v. l. 6). —$^{a}$) K3 तन् (for यन्). G3 मध्ये. —$^{b}$) B3 जठरे (submetric) (for °रेण). K4 Dn1 D1. 2. 4–6 तवावृतं; B4 वृतं तदा; B5 G2 तथावृतं; G3 M3 समा (for तदा°). —$^{c}$) Some MSS. आवृत्ताश्. K5 त्वाशास्; G3 शाखास् (for चाशास्). —$^{d}$) K4 M2 अच्युतं.

8 $^{b}$) K3–5 D1 अक्षयम्. —$^{c}$) Ś1 K1. 3 त्वा. —$^{d}$) Ś1 K1. 3 केशव (for शाश्वतम्).

9 After the ref., K4 D1 ins.:

112* मुनिं वित्रस्तमनसं दृष्ट्वा कृष्णो महामनाः ।
मनसा सुप्रसन्नेन प्रीयमाणो जनार्दनः ।

—$^{d}$) B Dc1 उतंको; S उदंको.

10 $^{a}$) K4 D1 कृष्ण (for एष). K2. 4. 5 D1 मे त्वद्य; D5. 6 एवायं (for एवाद्य). G3 पर्याप्त एवाद्य वर. —$^{b}$) G3 एष; Bom. ed. परस् (for वरस्). K3 तु त्वो (for त्वत्तो). D6 महाद्युतिः. —$^{c}$) D2 तत्; D5 ये (for यत्). M1. 2 lacuna for कृष्ण. —$^{d}$) K2 T M1–3 प्रभवाव्ययं; K4 D1 प्रलयाव्ययं; B1–3 Dn1 D2–6 पुरुषोत्तम; B4. 5 Dc1 पुरुषाव्ययं (for प्रभवाप्ययम्).

11 $^{a}$) Ś1 K1. 3 पुनस्तमब्रवीत्कृष्णो. —$^{b}$) G3 मां त्वमत्र विहारय (sic). —$^{c}$) K2 एव (for एतत्). —$^{d}$) K2 Dc1 मया; T2 G M1. 2. 4 तव (for मम). B1. 2 अमोघं मम दर्शनं.

12 B उतंक; S उदंक. —$^{a}$) K4 B1 Dn1 D1. 5 अवश्यं. Ś1 K1. 3 मे; K2. 4. 5 B1. 3–5 Dc1 D1 G3 चेद्; B2 Dn1 D2–6 च (for वै). G2 अवश्यः करणीयो वै. —$^{b}$) Ś1 K1–3 B1 यदेतन्; G3 यद्येव (for यद्येतन्). K4 D1. 6 यथैतन्म(D6 एतन्मे म)न्यते भवान्.

उत्तङ्क उवाच ।

अवश्यकरणीयं वै यद्येतन्मन्यसे विभो ।
तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम् ॥ १२

वैशंपायन उवाच ।

ततः संहृत्य तत्तेजः प्रोवाचोत्तङ्कमीश्वरः ।
एष्टव्ये सति चिन्त्योऽहमित्युक्त्वा द्वारकां ययौ ॥ १३
ततः कदाचिद्भगवानुत्तङ्कस्तोयकाङ्क्षया ।
तृषितः परिचक्राम मरौ सस्मार चाच्युतम् ॥ १४
ततो दिग्वाससं धीमान्मातङ्गं मलपङ्किनम् ।
अपश्यत मरौ तस्मिञ्श्वयूथपरिवारितम् ॥ १५
भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम् ।
तस्याधः स्रोतसोऽपश्यद्वारि भूरि द्विजोत्तमः ॥ १६
स्मरन्नेव च तं प्राह मातङ्गः प्रहसन्निव ।
एह्युत्तङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह ।
कृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाहतम् ॥ १७
इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दत ।
चिक्षेप च स तं धीमान्वाग्भिरुग्राभिरच्युतम् ॥ १८
पुनः पुनश्च मातङ्गः पिबस्वेति तमब्रवीत् ।
न चापिबत्स सक्रोधः क्षुभितेनान्तरात्मना ॥ १९
स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना ।
श्वभिः सह महाराज तत्रैवान्तरधीयत ॥ २०
उत्तङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः ।

---

— $^c$) K3 यत्रेष्टो; D5. 6 य( D6 त )त्स्वेन; G3 यच्छ्रेन (for यत्रेष्टं). — $^d$) K4 मेरुषु; D3 मरुश्च (for मरुषु).

13 N om. the ref. — $^a$) Dc1 संहृत्य. D5. 6 तेजः स्वं (for तत्तेजः). — $^b$) B Dc1 [उ]त्तंकम्; S [उ]द्दंकम्. — $^c$) K3 D3. 4 यष्टव्ये; D5. 6 प्रष्टव्ये. G3 स तु (for सति). — $^d$) Ś1 द्वारिकां. G3 गतः (for ययौ). — After 13, Ś1 K1. 3 ins. an addl. colophon [ *Adhy. no.*: Ś1 64 ].

14 Before 14, Ś1 K1. 3 ins वैशंपायन उवाच. — $^b$) K1 भ्रतंकस्; B Dc1 उतंकस्; S उदंकस्. B1. 2 M1 -काम्यया (for -काङ्क्षया). — $^d$) D3 चास्मार (for स°).

15 $^b$) D2 G1 corrupt. K3 मतंगं. Ś1 (before corr. as in text) B1. 2 D6 -पंकिलं; K2 -पंकितं; K6 -लिंपितं; Dc1 -पंकिणं; T -वर्तिनं. K4 मातंगं वलकंपिनं. — G3 om. 15$^c$–17$^b$. — $^c$) T2 G1 अपश्यत्तु. K3 मलौ (for मरौ). — $^d$) Ś1 K1. 3 श्व( K1 क )जूट-; K2 4 स्वयूथ- (for श्वयूथ-). B1 -विराजितं (submetric) (for -परिवारितम्).

16 G3 om. 16 (cf. v. l. 15). — $^a$) K1 corrupt; G2 भूषणं (for भी°). T2 भद्र- (for बद्ध-). D5. 6 -निस्त्रिंश. — $^b$) K3 -दारिणं (for -धा°). — $^c$) Dc1 corrupt. T1 G1. 2 Cv [अ]थ (for [अ]धः). K2. 4 B2. 3 Dc1 D1. 3 श्रोतसो; D4 M4 स्रोतसा. — $^d$) K3 सुजोत्तमः (sic); K4 Dc1 D6 M2 द्विजोत्तम (K1 °मं).

17 G3 om. 17$^{ab}$ (cf. v. l. 15). — $^a$) Ś1 K1. 3 स्रवद्वै स; K4 D1 स्रवज्जलं; K6 श्रवंतं स; B1. 2 स्मयन्नेव; D6 स्मरंतेव; S ( G3 om.; T2 before corr.) स्रवंतं स (for स्मरन्नेव). M1. 2 तत् (for तं). — $^b$) K3 मतंगः. — $^c$) B1–4 [उ]तंक; B5 [उ]दंक. K4. 5 D1 T G1. 2 प्रतीच्छ त्वं; D2 °क्षस्व; D3 °ह्यस्व; D5 °यस्व (for °च्छस्व). — $^d$) K2 वारि मत्तो (by transp.); B1. 2 वारि भूरि (B1 °वि); B5 मत्तो भूरि. — $^f$) D6 त्वा. B1 क्षुत्- (for तृट्-). K1. 2. 4 D1 -समाहितं; K3 -पिपासितं; Dc1 S -समन्वितं; Dn1 D1–6 -समाश्रितं (for °हतम्). K6 त्वां दृष्ट्वा वर्धितं हि वै.

18 $^b$) G3 तं क्रोधान् (for तत्तोयं). K3 D6 [अ]भिनंदत; T G [अ]भ्यमन्यत (for °नन्दत). — $^c$) G3 चुकोप (for चिक्षेप). — $^d$) T2 अश्याभिर् (for उग्रा°). Ś1 K1–3 अच्युतः (K2 °त).

19 T1 om. 19$^a$–21$^b$. — $^a$) T2 G1. 2 तु (for च). B4 मतंगश्च (for च मातङ्गः). — K4 D1 M1. 2 om. (hapl.) 19$^c$–22$^d$. — $^c$) B4 Dc1 चापिबत (for न चापिबत्). K2 सुसंक्रुद्धः; T2 G1. 3 च सक्रोधः (G3 °धात्). — $^d$) G1. 3 M3 क्षुधितेन (for क्षुभि°).

20 K4 D1 T1 M1. 2 om. 20 (cf. v. l. 19). D3 om. (hapl.) 20$^{ab}$; Ś1 reads it on marg. — $^a$) Ś1 तथापि; K1. 3 तथा हि; B4 Dc1 तथा तु (for स तथा). K5 स निश्चयात्तथा तेन. — $^b$) G3 महामनाः.

21 K4 D1 M1. 2 om. 21; T1 om. 21$^{ab}$ (for all,

मेने प्रलब्धमात्मानं कृष्णेनामित्रघातिना ॥ २१
अथ तेनैव मार्गेण शङ्खचक्रगदाधरः ।
आजगाम महाबाहुरुत्तङ्कश्चैनमब्रवीत् ॥ २२
न युक्तं तादृशं दातुं त्वया पुरुषसत्तम ।
सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो ॥ २३
इत्युक्तवचनं धीमान्महाबुद्धिर्जनार्दनः ।
उत्तङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत् ॥ २४
यादृशेनेह रूपेण योग्यं दातुं धृतेन वै ।
तादृशं खलु मे दत्तं त्वं तु तन्नावबुध्यसे ॥ २५
मया त्वदर्थमुक्तो हि वज्रपाणिः पुरंदरः ।
उत्तङ्कायामृतं देहि तोयरूपमिति प्रभुः ॥ २६

स मामुवाच देवेन्द्रो न मर्त्योऽमर्त्यतां व्रजेत् ।
अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन ॥ २७
अमृतं देयमित्येव मयोक्तः स शचीपतिः ।
स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् ॥ २८
यदि देयमवश्यं वै मातङ्गोऽहं महाद्युते ।
भूत्वामृतं प्रदास्यामि भार्गवाय महात्मने ॥ २९
यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै ।
प्रदातुमेष गच्छामि भार्गवायामृतं प्रभो ।
प्रत्याख्यातस्त्वहं तेन न दद्यामिति भार्गव ॥ ३०
स तथा समयं कृत्वा तेन रूपेण वासवः ।
उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत् ।

C.
B.
K.

---

cf. v. l. 19). — a) B Dc1 उतंकस्; T2 G M3.4 उदंकस्. K3 D3 ततो; T2 तदा (for तथा). — b) K3 तथा; D6 तमो (sic); G2 तत्र (for ततो). T2 G1 शंकित-; G2 वृद्धित-; M3.4 व्रीळित- (for व्रीडित-). — c) K3 *लब्धम्; D4 प्रालब्धम्; G1 प्रलु°; G3 प्रलोभ्यम्. — d) G2 कृष्णेनामिततेजसा.

22 K4 D1 M1.2 om. 22 (cf. v. l. 19). — c) B D (D1 om.) -बुद्धिर् (for -बाहुर्). — d) K1 B उतंकश्; K2.3 Dc1 उतं(K2 °त्तं)कं; S (M1.2 om.) उदंकश्. Ś1 K1.3 [इ]दम्; K5 तम्; D3 G1 [ए]वम् (for [ए]नम्).

23 Before 23, K4 D1 ins. उत्तङ्क उवाच. — a) M2 युक्तस्. K5 त्वीदृशं (for ता°). — b) Ś1 K1.3 त्वया तु पुरुषोत्तम. — c) K3 -मुखेभ्यो. — d) K2.4 B2 D1 -श्रोतसा; D6 -स्रोतसां.

24 a) Ś1 K1.3.5 [उ]क्तो (for [उ]क्त-). B D (except D1) तं तु; T G1 धीरं (for धीमान्). — b) K1.3 महाबुद्धि-. — c) K1 B Dc1 उतंकं; S उदंकं.

25 a) Ś1 K D1 G3 [ए]व (for [इ]ह). — b) D5 दातुं योग्यं (by transp.). Ś1 K1.3 वृत्तेन; K4.5 D1-3 T2 G1 घृतेन; B5 G2 व्रतेन; G3 अनेन (for धृतेन). B1-3.4 (marg.) ह (for वै). B4 Dc1 योग्यं दातुं द्रुवेनघ. — d) Ś1 T G2.3 तं (for तन्). B3.4 Dc1 -बुध्यथाः (for °से). B2.5 Dn1 D2-6 Bom. ed. तच्च (D5.6 लब्धं; Bom. ed. यच्च) त्वं नावबुध्यथाः.

26 a) B2 Dn1 D2-6 वै; M1.2 [ऽ]सि (for हि). — b) B3 पुनः पुनः (for पुरंदरः). — c) B Dc1 उतंकाय; S उदं°. — d) K2 इदं (for इति). Ś1 K1.3 प्रभो.

27 K3 Dc1 om. 27c–28d. — c) G1 M अन्यद् (for अन्यम्). — d) K4 असकृद्; T2 तेन त्वं (for [इ]त्यसकृद्). K4 D1 ह्यसकृज्जगदीश्वरः.

28 K3 Dc1 om. 28 (cf. v. l. 27). — a) K2.4.5 B1.3 D1 इत्येवं. — b) B1 इति (for मया). K4 उक्तं. Dn1 च (for स). — G1 om. 28c–29d. — c) K1 corrupt. D1 G2 M मा (for मां).

29 G1 om. 29 (cf. v. l. 28). — a) Ś1 D3 देवम् (sic); K1 चेयम् (for देयम्). K2 हि; D5.6 ते; G3 चेन् (for वै). — b) M1.2 [ऽ]यं (for ऽहं). B1.2 Dn1 D2-6 T G3 महामते (for °द्युते). — c) K2 D2 भूत्वामूतं. — d) K2 महामते; D6 °त्मनि.

30 a) G3 [ए]तत् (for [ए]वं). K2 -गृह्णामि; K4 D6 -गृह्णाति; D1 (also as in text) -गृह्णासि. — b) K2.4.5 D1 उत्तमं (for अद्य वै). B3 भार्गवोप्यमृतं विभो. — c) K5 एव (for एष). — d) K4 B5 Dc1 D1.5.6 T G2.3 विभो (for प्रभो). B1.2 Dn1 D2-4 भार्गवस्यामृतं विभो; B3 वचनात्तव केशिहन्. — f) K2 om. न. T G1.2 M दास्यामि (for दद्याम्). K2.4.5 D1 माधव (for भार्गव). B Dc1 Dn1 D3-6 G3 दास्यामि न (B3-5 Dc1 D5.6 G3 न दास्यामि) कथंचन.

उत्तङ्क उवाच ।
अवश्यकरणीयं वै यद्येतन्मन्यसे विभो ।
तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम् ॥ १२
वैशंपायन उवाच ।
ततः संहृत्य तत्तेजः प्रोवाचोत्तङ्कमीश्वरः ।
एष्टव्ये सति चिन्त्योऽहमित्युक्त्वा द्वारकां ययौ ॥ १३
ततः कदाचिद्भगवानुत्तङ्कस्तोयकाङ्क्षया ।
तृषितः परिचक्राम मरौ सस्मार चाच्युतम् ॥ १४
ततो दिग्वाससं धीमान्मातङ्गं मलपङ्किनम् ।
अपश्यत मरौ तस्मिञ्श्वयूथपरिवारितम् ॥ १५
भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम् ।
तस्याधः स्रोतसोऽपश्यद्वारि भूरि द्विजोत्तमः ॥ १६
स्मरन्नेव च तं प्राह मातङ्गः प्रहसन्निव ।
एह्युत्तङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह ।
कृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाहतम् ॥ १७
इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दत ।
चिक्षेप च स तं धीमान्वाग्भिरुग्राभिरच्युतम् ॥ १८
पुनः पुनश्च मातङ्गः पिबस्वेति तमब्रवीत् ।
न चापिबत्स सक्रोधः क्षुभितेनान्तरात्मना ॥ १९
स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना ।
श्वभिः सह महाराज तत्रैवान्तरधीयत ॥ २०
उत्तङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः ।

—$^c$) K3 यत्रेष्टो; D5.6 य(D6 त)त्त्वेन; G3 यच्छ्रेत (for यत्रेष्टं). —$^d$) K4 मेरुषु; D3 मरूश्च (for मरुषु).

13 N om. the ref. —$^a$) Dc1 संहृत्य. D5.6 तेजः स्वं (for तत्तेजः). —$^b$) B Dc1 [उ]तंकम्; S [उ]दंकम्. —$^c$) K3 D3.4 यष्टव्ये; D5.6 प्रष्टव्ये. G3 स तु (for सति). —$^d$) Ś1 द्वारिकां. G3 गतः (for ययौ). —After 13, Ś1 K1.3 ins. an addl. colophon [*Adhy. no.:* Ś1 64].

14 Before 14, Ś1 K1.3 ins वैशंपायन उवाच. —$^b$) K1 भ्रतंकस्; B Dc1 उतंकस्; S उदंकस्. B1.2 M1 -काम्यया (for -काङ्क्षया). —$^d$) D3 चासार (for स°).

15 $^b$) D2 G1 corrupt. K3 मतंगं. Ś1 (before corr. as in text) B1.2 D6 -पंकिलं; K2 -पंकितं; K6 -लिंपितं; Dc1 -पंकिणं; T -वर्तिनं. K4 मातंगं वल्कंपिनं. —G3 om. 15$^c$–17$^b$. —$^c$) T2 G1 अपश्यत्तु. K3 मलौ (for मरौ). —$^d$) Ś1 K1.3 श्व(K1 क्ष)जूट-; K2.4 स्वयूथ- (for श्वयूथ-). B4 -विराजितं (submetric) (for -परिवारितम्).

16 G3 om. 16 (cf. v. l. 15). —$^a$) K1 corrupt; G2 भूषणं (for भी°). T2 भद्र- (for बद्ध-). D5.6 -निस्त्रिंश. —$^b$) K3 -दारिणं (for -धा°). —$^c$) Dc1 corrupt. T1 G1.2 Cv [अ]थ (for [अ]धः). K2.4 B1.3 Dc1 D1.3 श्रोतसो; D4 M4 स्रोतसा. —$^d$) K3 सृजोत्तमः (sic); K4 Dc1 D6 M2 द्विजोत्तम (K4 °मं).

17 G3 om. 17$^{ab}$ (cf. v. l. 15). —$^a$) Ś1 K1.3 स्रवद्वै स; K4 D1 स्रवज्जलं; K6 श्रवंतं स; B1.2 स्रयन्नेव; D6 स्मरंतेव; S (G3 om.; T2 before corr.) स्रवंतं स (for स्मरन्नेव). M1.2 तत् (for तं). —$^b$) K3 मतंगः. —$^c$) B1–3 [उ]तंक; B5 [उ]दंक. K4.5 D1 T G1.2 प्रतीच्छ त्वं; D2 °क्षस्व; D3 °ह्यस्व; D6 °यस्व (for °च्छस्व). —$^d$) K2 वारि मत्तो (by transp.); B1.2 वारि भूरि (B1 °वि); B5 मत्तो भूरि. —$^f$) D6 त्वा. B1 क्षुत्- (for तृट्-). K1.2.4 D1 -समाहितं; K3 -पिपासितं; Dc1 S -समन्वितं; Dn1 D3–6 -समाश्रितं (for °हतम्). K6 त्वां दृष्ट्वा वर्धितं हि वै.

18 $^b$) G3 तं क्रोधान् (for तत्तोयं). K3 D6 [अ]भिनंदत; T G [अ]भ्यमन्यत (for °नन्दत). —$^c$) G3 चुकोप (for चिक्षेप). —$^d$) T2 अय्याभिर् (for उग्रा°). Ś1 K1–3 अच्युतः (K2 °त).

19 T1 om. 19$^c$–21$^b$. —$^a$) T2 G1.2 तु (for च). B4 मतंगश्च (for च मातङ्गः). —K4 D1 M1.2 om. (hapl.) 19$^c$–22$^d$. —$^c$) B4 Dc1 चापिबत (for न चापिबत्). K2 सुसंक्रुद्धः; T2 G1.3 च सक्रोधः (G3 °धात्). —$^d$) G1.3 M3 क्षुधितेन (for क्षुभि°).

20 K4 D1 T1 M1.2 om. 20 (cf. v. l. 19). D6 om. (hapl.) 20$^{ab}$; Ś1 reads it on marg. —$^a$) Ś1 तथापि; K1.3 तथा हि; B4 Dc1 तथा तु (for स तथा). K6 स निश्चयात्तथा तेन. —$^b$) G3 महामनाः.

21 K4 D1 M1.2 om. 21; T1 om. 21$^{ab}$ (for all,

मेने प्रलब्धमात्मानं कृष्णेनामित्रघातिना ॥ २१
अथ तेनैव मार्गेण शङ्खचक्रगदाधरः ।
आजगाम महाबाहुरुत्तङ्कश्चैनमब्रवीत् ॥ २२
न युक्तं तादृशं दातुं त्वया पुरुषसत्तम ।
सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो ॥ २३
इत्युक्तवचनं धीमान्महाबुद्धिर्जनार्दनः ।
उत्तङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत् ॥ २४
यादृशेनेह रूपेण योग्यं दातुं वृतेन वै ।
तादृशं खलु मे दत्तं त्वं तु तन्नावबुध्यसे ॥ २५
मया त्वदर्थमुक्तो हि वज्रपाणिः पुरंदरः ।
उत्तङ्कायामृतं देहि तोयरूपमिति प्रभुः ॥ २६
स मामुवाच देवेन्द्रो न मर्त्योऽमर्त्यतां व्रजेत् ।
अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन ॥ २७
अमृतं देयमित्येव मयोक्तः स शचीपतिः ।
स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् ॥ २८
यदि देयमवश्यं वै मातङ्गोऽहं महाद्युते ।
भूत्वामृतं प्रदास्यामि भार्गवाय महात्मने ॥ २९
यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै ।
प्रदातुमेष गच्छामि भार्गवायामृतं प्रभो ।
प्रत्याख्यातस्त्वहं तेन न दद्यामिति भार्गव ॥ ३०
स तथा समयं कृत्वा तेन रूपेण वासवः ।
उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत् ।

C. 14. B. 14 K. 14.

cf. v. l. 19). — $^{a}$) B Dc1 उतंकस्; T2 G M3.4 उदंकस्. K3 D3 ततो; T2 सदा (for तथा). — $^{b}$) K3 तथा; D6 तमो (sic); G2 तत्र (for ततो). T3 G1 शंकित-; G2 वृडित-; M3.4 व्रीळित- (for व्रीडित-). — $^{c}$) K3 *लब्धम्; D4 प्रालब्धम्; G1 प्रलु°; G3 प्रलोभ्यम्. — $^{d}$) G2 कृष्णेनामिततेजसा.

22 K4 D1 M1.2 om. 22 (cf. v. l. 19). — $^{c}$) B D (D1 om.) -बुद्धिर् (for -बाहुर्). — $^{d}$) K1 B उतंकश्; K2.3 Dc1 उतं(K2 °त्तं)कं; S (M1.2 om.) उदंकश्. Ś1 K1.3 [इ]दम्; K5 तम्; D3 G1 [ए]वम् (for [ए]नम्).

23 Before 23, K4 D1 ins. उत्तङ्क उवाच. — $^{a}$) M2 युक्तस्. K5 त्वीदृशं (for ता°). — $^{b}$) Ś1 K1.3 त्वया तु पुरुषोत्तम. — $^{c}$) K3 -मुखेभ्यो. — $^{d}$) K2.4 B2 D1 -श्रोतसा; D6 -स्रोतसां.

24 $^{a}$) Ś1 K1.3.5 [उ]क्तो (for [उ]क्त-). B D (except D1) तं तु; T G1 धीरं (for धीमान्). — $^{b}$) K1.3 महाबुद्धि-. — $^{c}$) K1 B Dc1 उतंकं; S उदंकं.

25 $^{a}$) Ś1 K D1 G3 [ए]व (for [इ]ह). — $^{b}$) D5 दातुं योग्यं (by transp.). Ś1 K1.3 वृत्तेन; K4.5 D1-3 T2 G1 धृतेन; B5 G2 व्रतेन; G3 अनेन (for वृतेन). B1-3.4 (marg.) ह (for वै). B1 Dc1 योग्यं दातुं वृतेनघ. — $^{c}$) Ś1 T G2.3 तं (for तत्). B3.4 Dc1 -बुध्यथाः (for °से). B2.5 Dn1 D2-6 Bom. ed. तच्च (D5.6 लब्धं; Bom. ed. यच्च) त्वं नावबुध्यथाः.

26 $^{a}$) B2 Dn1 D2-6 वै; M1.2 [s]सि (for हि). — $^{b}$) B3 पुगः पुनः (for पुरंदरः). — $^{c}$) B Dc1 उतंकाय; S उदं°. — $^{d}$) K2 इदं (for इति). Ś1 K1.3 प्रभो.

27 K3 Dc1 om. 27$^{c}$-28$^{d}$. — $^{c}$) G1 M अन्यद् (for अन्यम्). — $^{d}$) K2 असकृद्; T2 तेन त्वं (for [इ]त्यसकृद्). K4 D1 ह्यसकृज्जगदीश्वरः.

28 K3 Dc1 om. 28 (cf. v. l. 27). — $^{a}$) K2.4.5 B1.3 D1 इत्येवं. — $^{b}$) B1 इति (for मया). K4 उक्तं. Dn1 च (for स). — G1 om. 28$^{c}$-29$^{d}$. — $^{c}$) K1 corrupt. D1 G2 M मा (for मां).

29 G1 om. 29 (cf. v. l. 28). — $^{a}$) Ś1 D3 देवम् (sic); K1 चेयम् (for देयम्). K2 हि; D5.6 ते; G3 चेन् (for वै). — $^{b}$) M1.2 [s]यं (for sहं). B1.3 Dn1 D2-6 T G3 महामते (for °द्युते). — $^{c}$) K2 D2 भूत्वाभूतं. — $^{d}$) K2 महामते; D6 °त्मनि.

30 $^{a}$) G3 [ए]तत् (for [ए]वं). K2 -गृह्णामि; K4 D6 -गृह्णाति; D1 (also as in text) -गृह्णाति. — $^{b}$) K2.4.5 D1 उत्तमं (for अद्य वै). B3 भार्गवोप्यमृतं विभो. — $^{c}$) K5 एव (for एष). — $^{d}$) K4 B5 Dc1 D1.5.6 T G2.3 विभो (for प्रभो). B1.2 Dn1 D2-4 भार्गवस्यामृतं विभो; B3 वचनात्तव केशिहन्. — $^{f}$) K2 om. न. T G1.2 M दास्यामि (for दद्याम्). K2.4.5 D1 माधव (for भार्गव). B Dc1 Dn1 D3-6 G3 दास्यामि न (B3-5 Dc1 D5.6 G3 न दास्यामि) कथंचन.

चण्डालरूपी भगवान्सुमहांस्ते व्यतिक्रमः ॥ ३१
यत्तु शक्यं मया कर्तुं भूय एव तवेप्सितम् ।
तोयेप्सां तव दुर्धर्ष करिष्ये सफलामहम् ॥ ३२
येष्वहःसु तव ब्रह्मन्सलिलेच्छा भविष्यति ।
तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः ॥ ३३
रसवच्च प्रदास्यन्ति ते तोयं भृगुनन्दन ।
उत्तङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते ॥ ३४
इत्युक्तः प्रीतिमान्विप्रः कृष्णेन स बभूव ह ।
अद्याप्युत्तङ्कमेघाश्च मरौ वर्षन्ति भारत ॥ ३५

इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

31 [a]) T G1 तदा (for तथा). — For 31[ab], G3 subst.:

113* स तथा तेन रूपेण वासवस्त्वामुपागतः ।

— [c]) D4 [श्रा]दि- (for [अ]पि). — [d]) K4.5 D1 T1 M1 ददन्; G2 दधत् (for ददत्). — [e]) K5 B1–4 Dn1 D2–6 G3 चांडाल- (D4 °ळ-). D6 -रूपो; T1 -रूप- (for -रूपी). K3 D5 मघवा (for भगवान्). — [f]) K2 स (for सु-). D6 तद् (for ते).

32 [a]) K2 यत्र; M1 यस्तु (for यत्तु). D5.6 [अ]शक्यं (for शक्यं). G3 यत्तु कर्तुं मया शक्यं. — [b]) M1.2 एष (for एव). — [c]) B2 G2 तोयेच्छां (for तोयेप्सां). Ś1 K2.4.5 B1 Dn1 D2–6 दुर्धर्षां; K1 °र्षं; B2 °र्षः. Dc1 तोयेच्छां यदि दुर्धर्ष. — [d]) Dc1 सफलम्; D3 स सताम् (for सफलाम्).

33 [a]) B D (except D1) च ते (for तव). K1 T G1 M1 ब्रह्म. — [b]) K1.2.4 B4 Dc1 Dn1 D1–4 G3 सलिलेप्सा; D5.6 तोयेप्सा च; T G1 सुजलेप्सा (G1 °च्छा) (for सलिलेच्छा). — [c]) K4.5 D5.6 मेरौ; D4 पूर्णौ (sic) (for मरौ). — [d]) K3 जलपूर्णः पयोधरः.

34 [a]) G3 प्रसवाच् (for रसवच्). — [b]) K2.5 तत्तोयं; Dc1 D5.6 S तोयं ते (G3 वै) (by transp.). K4 भृगुनंदनं. — [c]) K1 B Dc1 उतंकमेघा; S उदंकमेघा. — [d]) K6 corrupt. Ś1 K1 चैव ते; K2.4 D1.5.6 चापरे; M4 वा भुवि (for चापि ते).

35 [a]) K1 इत्युक्ता. K1 Dn1 विप्र; K2.4.5 D1 क्षिप्रं; K3 विप्राः. — [b]) K2 T1 G1 च (for स). — [c]) K1 B Dc1 [उ]तंक-; S (except G3) [उ]दंक-. K2.5 तु; K4 D1 S ते (for च). — [d]) D3–6 मेरौ (for मरौ). K2 वर्षंत; T G1.2 M वर्तंति (for वर्षन्ति). K4 D1 चापरे (for भारत).

Colophon. — *Sub-parvan:* K2.4.5 B D T1 उत्तं- (B1.3 Dc1 °तं-; T1 °दं-)कोपाख्यानं. — *Adhy. no.* (figures, words or both): Ś1 65; B1 48; B2 51 (as in text); Dn1 M4 (*inf. lin.*) 55; D4 51; T1 41; T2 G1.2 M 40; G3 53. — *Śloka no.:* Dn1 38.

# ५५

जनमेजय उवाच ।
त्तङ्कः केन तपसा संयुक्तः सुमहातपाः ।
ः शापं दातुकामोऽभूद्विष्णवे प्रभविष्णवे ॥ १
वैशंपायन उवाच ।
उत्तङ्को महता युक्तस्तपसा जनमेजय ।
गुरुभक्तः स तेजस्वी नान्यं कंचिदपूजयत् ॥ २
सर्वेषामृषिपुत्राणामेष चासीन्मनोरथः ।
औत्तङ्कीं गुरुवृत्तिं वै प्राप्नुयामिति भारत ॥ ३
गौतमस्य तु शिष्याणां बहूनां जनमेजय ।
उत्तङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा ॥ ४
स तस्य दमशौचाभ्यां विक्रान्तेन च कर्मणा ।
सम्यक्चैवोपचारेण गौतमः प्रीतिमानभूत् ॥ ५
अथ शिष्यसहस्राणि समनुज्ञाय गौतमः ।
उत्तङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत ॥ ६
तं क्रमेण जरा तात प्रतिपेदे महामुनिम् ।
न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः ॥ ७
ततः कदाचिद्राजेन्द्र काष्ठान्यानयितुं ययौ ।
उत्तङ्कः काष्ठभारं च महान्तं समुपानयत् ॥ ८
स तु भाराभिभूतात्मा काष्ठभारमरिंदम ।
निष्पिपेष क्षितौ राजन्परिश्रान्तो बुभुक्षितः ॥ ९

## 55

1 $^{a}$) B (except $B_{2}$) उतंकः; S उदंकः. $G_{3}$ नैव (for केन). — $^{b}$) $K_{4}$ $D_{1}$ तु; T $G_{1,2}$ $M_{3,4}$ स (for सु-). $K_{1-3}$ -महातपः; $K_{5}$ °मुने. B $D_{c1}$ $D_{n1}$ $D_{2-6}$ संयुक्तो वै ($B_{3}$ om. वै) महामनाः ($D_{3}$ °मुनिः). — $^{c}$) $K_{3}$ तापं (for शापं). $G_{2}$ मोक्तुकामो (for दातु°).

2 $^{a}$) B (except $B_{2}$) $D_{c1}$ उतंको; S उदंको. $D_{5,6}$ तपसा (for महता). $K_{2}$ स उत्तंको महायुक्तस्. — $^{b}$) $B_{1}$ तेजसा; $D_{5,6}$ महता (for तपसा). — $^{c}$) $D_{1}$ गुरुभॆक्तः; $D_{3}$ °सक्तः (for °भक्तः). — $^{d}$) $K_{2}$ नो (for न). $K_{5}$ $B_{2,4}$ $D_{n1}$ $D_{2,4,5}$ $T_{1}$ $G_{3}$ [अ]न्यत् (for [अ]न्यं). $K_{1,2}$ $D_{n1}$ $D_{2,4,5}$ T $G_{1,3}$ किंचिद्; $K_{3}$ $D_{c1}$ कश्चिद् (for कंचिद्). $D_{3}$ नान्यत्किंचिदसंजयत्.

3 $^{a}$) $D_{3}$ अपि (for ऋषि-). — $^{b}$) $K_{5}$ B D (except $D_{1}$) om. च. — $^{c}$) $K_{4}$ उत्तंकीं; B $D_{c1}$ $D_{n1}$ औतंकीं ($D_{n1}$ °किं); S औदंकीं. $Ś_{1}$ $K_{1,3}$ -भक्तिं (for -वृत्तिं). — $^{d}$) $K_{3-5}$ $B_{3,4}$ D S (except $G_{3}$) प्राप्नुयाम (for °याम्).

4 $^{a}$) $K_{2,3}$ गोतमस्य. $D_{2}$ मुख्यानां; $G_{3}$ पुत्राणां (for शिष्याणां). — $^{c}$) $B_{1}$ उतंके; S उदंके. $K_{2}$ [ऽ]न्यधिका; $K_{4}$ [ऽ]ध्य°; $G_{3}$ ह्य° (for ऽभ्य°). — $^{d}$) $Ś_{1}$ $K_{1,3}$ तथा (for तदा).

5 $^{a}$) $B_{3}$ मनस्य (sic) (for स तस्य). $D_{2}$ सम- (for दम-). $K_{3}$ -शौर्याणां (for -शौचाभ्यां). — $^{b}$) $K_{2,4}$, $D_{1}$ शीलाद्येन; T G विज्ञानेन; M विश्रां($M_{4}$ प्रशां) तेन (for विक्रान्तेन). $K_{1}$ कर्मणां. — $^{c}$) $K_{4}$ $D_{6}$ एवोप- $M_{2}$ स्वैवाव- (for चैवोप-). $K_{2}$ -कारेण (for -चारेण) — $^{d}$) $K_{2,3}$ गोतमः.

6 $^{a}$) $T_{1}$ $G_{1,2}$ $M_{3,4}$ (*inf. lin.* as in text) तथा (for अथ). $D_{6}$ शिष्याः (for शिष्य-). — $^{b}$) $G_{3}$ -ज्ञाप्य. $M_{1}$ गौतमं. B D (except $D_{1}$) समनुज्ञातवानृषिः; $M_{3,4}$ (*inf. lin.*) °ज्ञातुमैहत. — $^{c}$) $K_{1,3}$ उत्तंकः; B $D_{c1}$ उतंकं; S उदंकं. $D_{5}$ परम- (for परया). — $^{d}$) $D_{6}$ ऐच्छथ.

7 $^{a}$) $D_{c1}$ तथा; $M_{2}$ जरया (hypermetric) (*for* जरा). $K_{2}$ $B_{3,5}$ $D_{c1}$ तत्र; $D_{5}$ $M_{1,2}$ राजन्; $D_{6}$ ज्ञातुं (for तात). — $^{b}$) B $D_{c1}$ $T_{1}$ G $M_{3,4}$ परिरेभे (for प्रतिपेदे). $K_{4}$ $D_{1}$ -द्युतिः; $K_{5}$ -द्युतिं (for -मुनिम्). — $^{c}$) $D_{c1}$ om. न. $B_{3}$ वा (for च). $Ś_{1}$ $K_{1,3}$ व्यबुध्यत; B $D_{c1}$ $T_{2}$ [अ]वबु°; $G_{1}$ तां बुध्यति (for [अ]न्वबुध्यत). $K_{2}$ ततः (for तदा). — $^{d}$) $D_{6}$ मुनिं.

8 $^{b}$) $T_{1}$ $G_{1}$ काष्ठान् (for काष्ठानि). $K_{2}$ [आ]नयने (for °यितुं). $M_{1,2}$ काष्ठानानेतुमैहत. — $^{c}$) B $D_{c1}$ उतंकः; S उदंकः. $K_{4}$ $D_{1}$ काष्ठं (for काष्ठ-). $K_{1}$ $D_{2}$ $M_{1,2}$ तं; $K_{2}$ (also as in text) स; $G_{3}$ तु (for च). — $^{d}$) $K_{4}$ महांतं सुसमानयत्.

9 $^{a}$) $K_{2}$ च; B D (except $D_{1}$) $T_{2}$ $G_{3}$ तद्; $T_{1}$

तस्य काष्ठे विलग्नाभूज्जटा रूप्यसमप्रभा ।
ततः काष्ठैः सह तदा पपात धरणीतले ॥ १०
ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भार्गवः ।
दृष्ट्वा तां वयसोऽवस्थां रुरोदार्तस्वरं तदा ॥ ११
ततो गुरुसुता तस्य पद्मपत्रनिभेक्षणा ।
जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना ।
पितुर्नियोगाद्धर्मज्ञा शिरसावनता तदा ॥ १२
तस्या निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः ।
न हि तानश्रुपातान्वै शक्ता धारयितुं मही ॥ १३
गौतमस्त्वब्रवीद्विप्रमुत्तङ्कं प्रीतमानसः ।
कस्मात्तात तवाद्येह शोकोत्तरमिदं मनः ।
स स्वैरं ब्रूहि विप्रर्षे श्रोतुमिच्छामि ते वचः ॥

उत्तङ्क उवाच ।

भवद्गतेन मनसा भवत्प्रियचिकीर्षया ।
भवद्भक्तिगतेनेह भवद्भावानुगेन च ॥ १५
जरेयं नावबुद्धा मे नाभिज्ञातं सुखं च मे ।
शतवर्षोषितं हि त्वं न मामभ्यनुजानथाः ॥ १६
भवता ह्यभ्यनुज्ञाताः शिष्याः प्रत्यवरा मया ।
उपपन्ना द्विजश्रेष्ठ शतशोऽथ सहस्रशः ॥ १७

गौतम उवाच ।

त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव ।
व्यतिक्रामन्महान्कालो नावबुद्धो द्विजर्षभ ॥ १८

---

G1.2 M8 तं; M1.2.4 सं- (for तु). — b) G1 अरिंदमः. — c) Dn1 D4 निश्चिक्षेप (for निष्पिपेष). G3 ततो (for क्षितौ). — d) G2 -श्रांतो.

10 G3 om. $10^{ab}$. — a) B3 काष्ठ-. Ś1 K1.3 सु- (for वि-). — b) K4 D1 जातरूपाभवत्तदा.

11 a) Dc1 -निष्पेष- (for -निष्पिष्टः). D3 ततः स भांडनिष्पेष्टः (sic). — b) Dn1 D2-6 भारत (for भार्गवः). K2 क्षुधाक्रांतोति भार्गवः. — c) K2 वयसावस्थां. — d) B1.2.5 Dc1 Dn1 D2-4 T1 G1 [आ]र्तस्वर(Dc1 °न)स्. K2 तथा (for तदा). D5.6 गुरोरार्तस्वरस्तदा. — After 11, K5 reads $13^{ab}$.

12 a) K1 कुतो (for ततो). D1 चास्य (for तस्य). — b) B D (except D1) -निभानना (for -निभेक्षणा). — d) B1.5 कराभ्यां (for करेण). K4 D1 G3 M3 वयो- (G3 M3 तपो)युक्तस्य धीमतः; T G1.2 M1.2.4 कवेरार्तस्य धीमतः. — e) T2 वियोगाद् (for नियो°). G1 भागज्ञा; G3 धर्मात्मिन्न् (for धर्मज्ञा). Ś1 K1.3 पितुर्निदेशाद्धर्माच्च.

13 K5 reads $13^{ab}$ after 11. — a) K5 [अ]भि- (for नि-). G1 दंडा (sic) (for दग्धौ). Ś1 K1.3 तस्या नि(K1 °स्मान्नि)पेतुर्निर्दग्धा. — b) K3 कचास्तैर्; B3.5 तौ करावू; Dc1 D1 करौ ताव्; G1 तैरार्तैर्; G3 करौ तस्य (for करौ तैर्). K2.4.5 D1 -वारिभिः (for -बिन्दुभिः). — c) T1 G1 च (for हि). G3 अश्रपत्तं (sic) (for अश्रुपातान्). B1.2.5 Dn1 D2-5 तु; D8 च (for वै). — d) K1 शक्तं; K4 D1 शक्त्या. Ś1 K1 मम; K2 D2 G2.3 मही; B3 स हि; B5 Dc1 Dn1 स ह (for मही). K3 शक्ता वरयितुं च सा.

14 a) K4 B2 D1 विप्र. G3 गौतमश्चाब्रवीदेन — b) K1 B (except B4) Dc1 उतंकं; T G1.2 उदंकं. K1.2 B5 Dc1 D1.6 T2 प्रीति- (for प्रीत-). उदंकं विप्रसत्तमं. — K3 om. $14^{c}$–$17^{b}$. — c) B3.5 G1 M2 तस्मात्; D3 य° (for क°). G1 पदापाद्ये (si (for तवाद्येह). — d) D6 वचः (for मनः). शोकांतरमिदं तव. — e) Ś1 K1 स्वसैनं (sic); G3 सुख (for स स्वैरं). K2 वद (for ब्रूहि). Dc1 D5.6 स मे (Dc1 °त्वरं) ब्रूहि तत्त्वतः. — f) B Dn1 D2-4 तत्त्व (for ते वचः).

15 K3 om. 15 (cf. v. l. 14). B Dc1 उतंक; उदंक (for उत्तङ्क). — a) K2 भवत्कृतेन; K5 भगव द्गते (for भवद्गतेन). — c) Ś1 K1 -गतेनैव; M2 -गं हंत (for -गतेनेह). — d) D2 -भागानुगेन (for -भावा° B1.2 D5.6 ह (for च).

16 K3 om. 16 (cf. v. l. 14). — a) K2 [अ]व बुध्या. B3.4 Dc1 वै (for मे). T G1.2 जरां तां नावबु (T1 °म बु)ध्यामि. — b) Ś1 K1.2 वि-; D6 [अ]नु-; G1 [अ]व-; G3 प्र- (for [अ]भि-). — c) B1-3.5 Dc1 Dn1 D2.3.5.6 मां हि; D4 मां वै; M3 च त्वं (for हि त्वं). B4 शतवर्षे मम गते. — d) B D (except D1) त्वम् (for माम्). Ś1 अभ्यनुजानथ; K1.4 D1 °न्वजानथाः; K2 °त्वजन्यथा; B Dc1 Dn1 D2-6 M °नुजानिथाः; T1 G2.3 °नुजज्ञिवान् (for °नुजानथाः).

17 K3 om. $17^{ab}$ (cf. v. l. 14). — a) K5 B D (except D1) तु (for हि). — b) Ś1 प्रत्यवतां (sic).

किं त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव ।
अनुज्ञां गृह्य मत्तस्त्वं गृहान्गच्छस्व मा चिरम् ॥ १९

उत्तङ्क उवाच ।

गुर्वर्थं कं प्रयच्छामि ब्रूहि त्वं द्विजसत्तम ।
तमुपाकृत्य गच्छेयमनुज्ञातस्त्वया विभो ॥ २०

गौतम उवाच ।

दक्षिणा परितोषो वै गुरूणां सद्भिरुच्यते ।
तव ह्याचरतो ब्रह्मंस्तुष्टोऽहं वै न संशयः ॥ २१
इत्थं च परितुष्टं मां विजानीहि भृगूद्वह ।
युवा षोडशवर्षो हि यदद्य भविता भवान् ॥ २२
ददामि पत्नीं कन्यां च स्वां ते दुहितरं द्विज ।
एतामृते हि नान्या वै त्वत्तेजोऽर्हति सेवितुम् ॥ २३
ततस्तां प्रतिजग्राह युवा भूत्वा यशस्विनीम् ।
गुरुणा चाभ्यनुज्ञातो गुरुपत्नीमथाब्रवीत् ॥ २४
किं भवत्यै प्रयच्छामि गुर्वर्थं विनियुङ्क्ष्व माम् ।
प्रियं हि तव काङ्क्षामि प्राणैरपि धनैरपि ॥ २५
यद्दुर्लभं हि लोकेऽस्मिन्रत्नमत्यद्भुतं भवेत् ।
तदानयेयं तपसा न हि मेऽत्रास्ति संशयः ॥ २६

अहल्योवाच ।

परितुष्टास्मि ते पुत्र नित्यं भगवता सह ।

---

$K_{2.4}$ $B_{1-4}$ D ( except $D_{c1}$ ) $T_1$ $G_2$ मम ; $K_5$ च ये ; $T_2$ $G_1$ त्वया ( for मया ). — [c] ) $K_4$ $D_1$ उपसन्ना ( for °पन्ना ). $K_2$ T द्विजश्रेष्ठाः.

18 $M_{1.2}$ om. the ref. — [a] ) $K_{2.4}$ $D_1$ व्यतिक्रांतो ; $K_3$ $M_{1.2}$ °क्रमन् ; $D_3$ °क्रमान् ( for °क्रामन् ). Ś$_1$ $K_{1.3.4}$ $B_{1.2.5}$ $D_{4-6}$ T $G_2$ महा- ( for महान् ). — [d] ) $D_{5.6}$ [अ]बुद्धो हि ; $T_1$ $G_1$ [अ]बन्बुध्या ( sic ) ; $G_2$ °बुध्ये. $G_3$ द्विजोत्तम ( for द्विजर्षभ ).

19 Before 19, $M_1$ ins. गौतमः. — [a] ) T $G_1$ [अ]त्र ( for [अ]द्य ). $K_3$ किं त्व*यद्यतिश्रद्धा. — [c] ) $K_4$ $D_1$ $G_3$ प्राप्य ( for गृह्य ). Ś$_1$ $K_{1-3}$ अनुज्ञा गृह्यतां मत्तस् ; B $D_{c1}$ $D_{n1}$ $D_{2-6}$ $T_2$ °ज्ञां प्रतिगृह्य त्वं ( $D_3$ °ह्यस्व ). — [d] ) Ś$_1$ $K_{1.3}$ त्वं गृहान्गच्छ ; $K_{2.4.5}$ $D_1$ $G_3$ स्वगृहं गच्छ ; B $D_{c1}$ $D_{n1}$ $D_{2-6}$ स्वगृहान्गच्छ ( for गृहान्गच्छस्व ). $M_4$ गृहान्गच्छ यथासुखं. — After 19, Ś$_1$ $K_{1.3}$ ins. an addl. colophon [ *Adhy. no.*: Ś$_1$ 67 ].

20 B उतंक ; S उदंक ( for उत्तङ्क ). — [a] ) Ś$_1$ $K_{1.3}$ $B_1$ $D_{3.6}$ T $G_{2.3}$ किं ; $G_1$ सं- ( for कं ). — [c] ) $B_2$ तद् ; $G_3$ किम् ( for तम् ). $K_{2.4.5}$ B D T G उपाहृत्य ( for °कृत्य ). — [d] ) $K_4$ $D_1$ [अ]नघ ( for विभो ).

21 $K_2$ om. the ref. — [b] ) $B_6$ $D_{c1}$ $M_3$ इष्यते ( for उच्यते ). — [c] ) $M_{1.2}$ व्याहरतो. $K_3$ $D_{5.6}$ ब्रह्म ; $K_5$ नित्यं ; T G धर्मं ( for ब्रह्मंस् ).

22 [a] ) $K_4$ $D_1$ इष्टं ( for इत्थं ). Ś$_1$ $G_3$ हि ; $K_{1.3}$ तु ( for च ). M मा ( for मां ). — [d] ) $K_{4.5}$ $B_{2.4.5}$ $D_{n1}$ $D_{1-4}$ यद्यद्य ; $B_{1.3}$ $D_{c1}$ सदोद्य ( for यदद्य ). यावदद्य भवता भवान् ( hypermetric ) ; S यद( T तवा- ; $T_2$ $G_{2.3}$ तद )द्य त्वं भविष्यसि ( $M_2$ also °रि

23 [a] ) $B_{1.2.5}$ $D_{c1}$ $D_{n1}$ $D_{2.3}$ $G_1$ M ददानि °मि ). $B_3$ ददानि पत्नीं रम्यां च ; $T_1$ ददामि पत्नीत्वे. — [b] ) $K_{2.4.5}$ $D_1$ विभो ; $D_{5.6}$ नृप ( for द्विज ). — [c] ) $M_{1.2}$ नान्यो. $K_2$ corrupt ; B D ( except $D_1$ ) एतामृतेँ( $D_3$ °तां )गना ( $D_{5.6}$ °नां ) नान्या ; $G_3$ एतामृते मनु स्वार्है. — [d] ) $G_3$ तत्तेजो.

24 Before 24, S ( except $T_2$ $G_1$ ) ins. वैशंपायनः. — [a] ) $K_3$ यतस् ( for ततस् ). — [b] ) $G_3$ तपस्विनीं ( for यश° ). — [d] ) $D_{5.6}$ अथो ( for अथ ).

25 Before 25, $D_{5.6}$ ins. उतङ्क उवाच. — [a] ) $K_{4.5}$ $B_{1.5}$ D $G_2$ M कं ( for किं ). — [b] ) $D_6$ om. वि. $D_1$ $M_{2.4}$ मा ( for माम् ). — [c] ) Ś$_1$ $K_{1.3}$ च तव ; $K_{2.4}$ B $D_{n1}$ $D_{2-4}$ हितं च ( for हि तव ). $K_3$ कांक्ष्यामि ; $G_3$ कांक्षा मे. $D_{5.6}$ प्रिये च ते हितं कांक्षे. — [d] ) $D_6$ ध्वजैर् ( sic ) ( for धनैर् ). $T_2$ प्राणैर्वापि जनैरपि.

26 [a] ) Ś$_1$ $K_{1.3}$ सु- ; $D_3$ ये ( sic ) ( for यद् ). — [b] ) Ś$_1$ धातुम् ; $K_4$ $D_1$ बलम् ; $B_2$ $D_{c1}$ न त्वम् ; $D_6$ तत्र ; $T_1$ नित्यम् ; $G_2$ सत्यम् ; $G_3$ प्रियम् ( for रत्नम् ). $G_3$ इत्यद्भुतं ( for अत्य° ). $D_{n1}$ $D_{2-6}$ महत् ( for भवेत् ). — [d] ) Ś$_1$ $K_{1.3}$ [ऽ]स्तीह ; $B_3$ [ऽ]स्त्यत्र ( by transp. ) ; $G_3$ भ्रांति-. $K_2$ न हि मेप्यस्ति दुर्लभं ; $T_2$ $G_1$ तर्हि मे नास्ति संशयः.

27 $K_{2.4}$ $D_{3-6}$ अहिल्या. — [a] ) $K_{2.4.5}$ $D_1$ वत्स ;

पर्याप्तये तद्भद्रं ते गच्छ तात यथेच्छकम् ॥ २७

वैशंपायन उवाच ।

उत्तङ्कस्तु महाराज पुनरेवाब्रवीद्वचः ।
आज्ञापयस्व मां मातः कर्तव्यं हि प्रियं तव ॥ २८

अहल्योवाच ।

सौदासपत्न्या विदिते दिव्ये वै मणिकुण्डले ।
ते समानय भद्रं ते गुर्वर्थः सुकृतो भवेत् ॥ २९
स तथेति प्रतिश्रुत्य जगाम जनमेजय ।
गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा ॥ ३०
स जगाम ततः शीघ्रमुत्तङ्को ब्राह्मणर्षभः ।
सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले ॥ ३१
गौतमस्त्वब्रवीत्पत्नीमुत्तङ्को नाद्य दृश्यते ।
इति पृष्टा तमाचष्ट कुण्डलार्थं गतं तु वै ॥ ३२
ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतम् ।
शप्तः स पार्थिवो नूनं ब्राह्मणं तं वधिष्यति ॥ ३३

अहल्योवाच ।

अजानन्त्या नियुक्तः स भगवन्ब्राह्मणोऽद्य मे ।
भवत्प्रसादान्न भयं किंचित्तस्य भविष्यति ॥ ३४
इत्युक्तः प्राह तां पत्नीमेवमस्त्विति गौतमः ।
उत्तङ्कोऽपि वने शून्ये राजानं तं ददर्श ह ॥ ३५

इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

B1. 2. 5 Dn1 D2–6 T1 विप्र (for पुत्र). — [b]) B D (except D1) नित्यं भ( D2 °त्यभ )क्त्या तवानघ. — [c]) D3 पर्याप्तमेव तद्भद्रं. — [d]) Ś1 K1. 3 पुत्र (for तात). D (except Dc1 D1) T G1. 2 यथेप्सितं; G3 °च्छसि (for °च्छकम्).

28 [a]) K1 B Dc1 उतंकस्; S उदंकस्. G3 तां (for तु). B3 महातेजाः (for °राज). — [b]) G3 वचोऽब्रवीत् (by transp.). — [c]) K3 आज्ञापयाद्य (for °यस्व). G3 M3. 4 मा (for मां). K1 D3 माता (sic) (for मातः). — [d]) T G1. 2 किं कर्तव्यं (for कर्तव्यं हि). B1. 2. 5 D (except D1) कर्तव्यं च (B5 हि) तव प्रियं.

29 K2. 4 D4. 5 अहिल्या. — [a]) K4 D1 [अ]-भिहते; B1. 3–5 G3 विश्रुते; Dc1 विहि*; T G1. 2 रुचिरे (for विदिते). K5 परितुष्टास्मि ते वत्स (cf. 27[a]); B2 Dn1 D2–6 सौदासपत्नीविश्रुते. — [b]) Ś1 K1 स-; K3 हि; B D (except D1) ये (for वै). — G3 om. (hapl.) 29[c]–31[d]. — [c]) K2 G1. 2 M ममानय; K3 D3 समानाय (for °नय). G1 तु (for ते). — [d]) B1. 3 G1 M1 स कृतो; B2 स हृतो (for सुकृतो).

30 G3 om. 30 (cf. v. l. 29). Before 30, T2 G1 ins. वैशंपायन उवाच. — [a]) D4 प्रतिसत्य. — [c]) D2 -प्रियार्थी वै; D3 -प्रियार्थत्वं. — [d]) D3 न (for ते).

31 G3 om. 31 (cf. v. l. 29). K4 D1 om. 31[ab]. — [b]) K1 B D2 उतंको; S उदंको. — [c]) T1 सदासं (for सौदासं). K3 पौरुषादं. — [d]) K3 भिक्षतुं; D2 भक्षितुं.

32 [b]) K1 B Dc1 उतंको; S उदंको. S [अ]त्र (for [अ]द्य). — [c]) K4 पृष्टे; G3 प्रति; M3 पृष्ट्वा. K5 D4 समाचष्ट; D5. 6 तथाचष्ट (for तमा°). — [d]) Ś1 K1 B Dc1 D2–6 G3 च सा; K3 च सः; K5 च तु (for तु वै). K2. 4 D1 कुंडलार्थं तु तं गतं; Dn1 °र्थं तु वै च सा.

33 [a]) G2 वै (for स). — [b]) K4 ते (for न). K2 Dc1 च; K4 न; G3 वा (for ते). — [c]) D6 शप्ता; G1. 3 ततः (for शप्तः). — [d]) Ś1 K1. 3 भक्षिष्यते; G3 हनिष्यति (for वधि°).

34 K4 D1 om. 34 with the ref. Ś1 K1. 3 om. the ref. K2 D4–6 अहिल्या. K2 om. 34[ab]. — [a]) K1. 3 T2 M अजानत्या. K1 सन् (for स). — [b]) D3 G1 भगवान्. B D (D1 om.) मया; G3 [s]द्य वै (for ऽद्य मे). — [c]) K5 D4 तव (for भवत्-). B3 भवत्प्रसादादुभवां (sic). — [d]) S (except M3) तत्र (for तस्य). D5. 6 करिष्यति (for भवि°).

35 [a]) K1 इत्युक्ता. K3 तौ तदा (for प्राह तां). — [c]) B उतंको; S उदंको. K4 D1 हि (for ऽपि). — [d]) G3 राजानं च ददर्श सः.

# ५६

वैशंपायन उवाच ।
स तं दृष्ट्वा तथाभूतं राजानं घोरदर्शनम् ।
दीर्घश्मश्रुधरं नृणां शोणितेन समुक्षितम् ॥ १
चकार न व्यथां विप्रो राजा त्वेनमथाब्रवीत् ।
प्रत्युत्थाय महातेजा भयकर्ता यमोपमः ॥ २
दिष्ट्या त्वमसि कल्याण षष्ठे काले ममान्तिकम् ।
भक्षं मृगयमाणस्य संप्राप्तो द्विजसत्तम ॥ ३
उत्तङ्क उवाच ।
राजन्गुर्वर्थिनं विद्धि चरन्तं मामिहागतम् ।
न च गुर्वर्थमुद्युक्तं हिंस्यमाहुर्मनीषिणः ॥ ४
राजोवाच ।
षष्ठे काले ममाहारो विहितो द्विजसत्तम ।
न च शक्यः समुत्स्रष्टुं क्षुधितेन मयाद्य वै ॥ ५
उत्तङ्क उवाच ।
एवमस्तु महाराज समयः क्रियतां तु मे ।
गुर्वर्थमभिनिर्वर्त्य पुनरेष्यामि ते वशम् ॥ ६
संश्रुतश्च मया योऽर्थो गुरवे राजसत्तम ।
त्वदधीनः स राजेन्द्र तं त्वा भिक्षे नरेश्वर ॥ ७
ददासि विप्रमुख्येभ्यस्त्वं हि रत्नानि सर्वशः ।
दाता त्वं च नरव्याघ्र पात्रभूतः क्षिताविह ।

---

Colophon. — *Sub-parvan :* Ś$_1$ K$_{3.4}$ B D M$_{1-3}$ उत्तं( B$_{1.3-5}$ °तं-; M$_{1-3}$ °दं )कोपाख्यानं; T उदंकचरितं. — *Adhy. name :* K$_{2.5}$ D$_1$ कुंडलानयनं. — *Adhy. no.* (figures, words or both): Ś$_1$ 68: B$_{1.3.5}$ 55 (as in text); Dn$_1$ M$_4$ (*inf. lin.*) 56; D$_4$ 52; T$_1$ 42; T$_2$ G$_{1.2}$ M 41; G$_3$ 45. — *Śloka no.:* Dn$_1$ 35.

## 56

1 $^a$) D$_1$ महाभूतं; G$_2$ तदा° (for तथा°). — $^b$) K$_{2.4.5}$ D$_1$ -रूपिणं (for -दर्शनम्). — $^d$) Dc$_1$ समुक्षितुं; D$_3$ °च्छ्रितुं; G$_1$ °क्षितुं (for °क्षितम्).

2 $^a$) Dc$_1$ न व्यथं; D$_3$ नान्यथा; G$_3$ स कथां. — $^b$) K$_2$ च; K$_4$ Dc$_1$ D$_1$ [अ]पि (for तु). T$_2$ [ए]तम्. — $^c$) D$_1$ प्रत्युदाय (sic); T$_2$ G$_1$ प्रत्याययौ; G$_{2.3}$ M प्रत्युद्ययौ.

3 $^a$) K$_1$ दृष्ट्या. Ś$_1$ कल्याणि. G$_3$ दिष्ट्या प्राप्तोसि विप्रर्षे. — $^b$) B$_3$ मध्ये; G$_3$ ह्यस्मिन् (for षष्ठे). Dc$_1$ ममांतिके. — $^c$) K$_3$ B Dc$_1$ Dn$_1$ D$_{3.5.6}$ G$_3$ भक्ष्यं. Ś$_1$ D$_3$ मृगयमानस्य. — $^d$) Ś$_1$ K$_4$ D$_{1.6}$ M$_2$ द्विजसत्तमः. Dc$_1$ स प्राप्तो यमांतिकं (submetric).

4 D$_3$ om. 4. G$_1$ om. (hapl.) 4$^a$–5$^b$. T$_1$ G$_2$ (both om. the ref.) read 4 after 6$^b$. B उतंक; T$_2$ G$_3$ M उदंक (for उत्तङ्क). — $^b$) K$_4$ D$_1$ इव (for इह). — $^c$) G$_3$ M$_2$ ह्यत्युक्तं (for उद्युक्तं). — $^d$) D$_3$ मनीषिणं.

5 G$_1$ om. 5$^{ab}$ (cf. v. l. 4). T$_2$ G$_2$ om. D$_3$ om. the ref. — $^a$) K$_1$ कष्टे (for षष्ठे). समाहारो; B$_4$ मयाहारो. — $^c$) M$_{1.2}$ स (for Ś$_1$ K$_3$ स शक्यः; K$_{2.4}$ D$_1$ शक्यते; B$_5$ Dn$_1$ शक्यस्त्वं (for च शक्यः). K$_2$ Dc$_1$ D$_3$ समुत्सृष्टुं °ष्टं); T$_1$ त्वमुत्स्रष्टुं. D$_6$ अशनस्त्वं समुत्सृष्टुं. — G$_{1.3}$ क्षुधितस्य ममाद्य वै; M$_{1-3}$ विहिनेदं (M$_3$ °तं ममाद्य वै (sic); M$_4$ क्षुधितेनेदमद्य वै.

6 B उतंक; S उदंक (for उत्तङ्क). — $^a$) मया राजन् (for महाराज). — $^b$) K$_1$ D$_6$ स मया समयः). Ś$_1$ K$_{1.3}$ च मे; B$_3$ T$_2$ G$_{1.3}$ M$_{3.4}$ तु वै; T$_1$ G$_2$ तव (for तु मे). K$_2$ समयः क्रियते हि मे; M$_1$ सम***माशु वै; M$_2$ समय*समाशु वै. — After 6$^b$, T$_1$ G$_2$ read 4. — $^c$) K$_{1.2}$ -निर्वृत्य. — $^d$) D$_{5.6}$ आयामि (for एष्यामि). B$_4$ [अं]तिकं (for वशम्).

7 $^a$) Ś$_1$ संश्रितश्च; T$_2$ G$_1$ संश्रुतस्य; G$_2$ °तं च; G$_3$ संशितश्च. — $^d$) K$_1$ B Dc$_1$ Dn$_1$ D$_{2-6}$ तं त्वां; K$_5$ त्वां तं; T$_1$ G$_2$ M$_{1.2}$ तत्त्वा; T$_2$ स त्वा (for तं त्वा). K$_{2.5}$ नराधिप (for नरेश्वर). K$_4$ D$_1$ तं त्वां भिक्षे (D$_1$ °क्ष्ये) नराधिप.

8 B$_3$ partly damaged. — $^b$) Ś$_1$ K$_{1.3}$ सर्वदा; K$_{2.5}$ B Dc$_1$ Dn$_1$ D$_{2-6}$ नित्यदा; G$_3$ [अ]नेकशः (for सर्वशः). K$_4$ D$_1$ रत्नानि त्वं हि नित्यदा. — $^c$) K$_1$ दत्ता त्वं च; K$_{2.4}$ B$_{1.2}$ D G$_2$ M दाता च त्वं (D$_4$ तं) (by transp.); B$_{3.5}$ सदा च त्वं; T G$_1$ दापय त्वं.

सुप्रतीतैस्तदा विप्रैः स्वागमैः सुस्वनैर्नृप ।
अश्रान्तैश्चापि लघुभिरध्वर्युवृषभैस्तथा ॥ १०
आलम्भसमये तस्मिन्गृहीतेषु पशुष्वथ ।
महर्षयो महाराज संबभूवुः कृपान्विताः ॥ ११
ततो दीनान्पशून्दृष्ट्वा ऋषयस्ते तपोधनाः ।
ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः ॥ १२
अपविज्ञानमेतत्ते महान्तं धर्ममिच्छतः ।
न हि यज्ञे पशुगणा विधिदृष्टाः पुरंदर ॥ १३
धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो ।
नायं धर्मकृतो धर्मो न हिंसा धर्म उच्यते ॥ १४
आगमेनैव ते यज्ञं कुर्वन्तु यदि हेच्छसि ।
विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान्भवेत् ॥ १५
यज बीजैः सहस्राक्ष त्रिवर्षपरमोषितैः ।
एष धर्मो महाञ्शक्र चिन्त्यमानोऽधिगम्यते ॥ १६
शतक्रतुस्तु तद्वाक्यमृषिभिस्तत्त्वदर्शिभिः ।
उक्तं न प्रतिजग्राह मानमोहवशानुगः ॥ १७
तेषां विवादः सुमहाञ्जज्ञे शक्रमहर्षिणाम् ।
जङ्गमैः स्थावरैर्वापि यष्टव्यमिति भारत ॥ १८

---

हूयमाने तथाहूये. —$^{b}$) $K_{2,4}$ $D_{1}$ मंत्रैर् (for होत्रे). $K_{2,5}$ -गुणान्वितैः. $K_{1}$ $B_{1,3-5}$ $Dc_{1}$ $D_{2-6}$ होत्रे ($Dc_{1}$ वह्नौ) गुणसमन्विते. —$^{c}$) $K_{4}$ देवैश्च.

10 $^{a}$) $K_{3,4}$ ते प्रतीतैस्; $D_{1}$ सव्रतांतैस्; $D_{5,6}$ प्रभायुतैस्; T $G_{2}$ सुव्रतैस्तैस्; $G_{1}$ संवृतैस्तैस्; $G_{3}$ त्रिग्र-तैस्तैस्. $K_{1,4,5}$ $B_{1,5}$ $D_{2-6}$ T $G_{1,2}$ तथा. —$^{b}$) $B_{3}$ सागरैः (sic); $B_{5}$ सामगैः; $T_{1}$ G स्वागतैः (for °मैः). $K_{1,4,5}$ $B_{1,3-5}$ $D_{2-4,6}$ T G सुस्वरैर्; $K_{2}$ स्वसुरैर्; $D_{1}$ सुस्थितैर्; $D_{5}$ सुखरैर् (for सुस्वनैर्). $Ś_{1}$ नृपैः; T $G_{1}$ नृभिः. $Dc_{1}$ स्वागमेषु परैर्नृप. —$^{c}$) $D_{3}$ अस्रांतैश्; $G_{3}$ अक्रांतैश्. T $G_{1}$ बहुभिर् (for लघुभिर्). $K_{5}$ अयतैश्चापि गुरुभिर्. —$^{d}$) $D_{6}$ अलब्ध- (for अध्वर्यु-). $B_{3}$ $Dc_{1}$ $D_{1}$ तदा (for तथा). $G_{1}$ अध्वर्युवृषभस्तदा.

11 $^{a}$) $Ś_{1}$ $K_{2-4}$ $M_{1-3,4}$ (*inf. lin.* as in text) आरंभ- (for आलम्भ-). — $D_{1}$ reads $11^{bc}$ twice. —$^{b}$) $K_{4}$ ग्रहेषु च (for गृहीतेषु). $K_{2,4}$ अपि (for अथ). —$^{c}$) $K_{2,4}$ ततो महर्षयो राजन्. —$^{d}$) $K_{1}$ $B_{1,3-5}$ D (except $D_{1}$; $Dn_{1}$ missing) बभूवुः कृपयान्विताः.

12 $^{a}$) $D_{6}$ om. पशून्. —$^{b}$) $D_{6}$ ते ऋषयस् (by transp.). —$^{c}$) $D_{5,6}$ चक्रं (sic) (for शक्रं). —$^{d}$) $G_{3}$ शक्र- (for यज्ञ-). $Dc_{1}$ नायं यज्ञविधिं शुभं (sic); $D_{1}$ नायं ज्ञानविधिः श्रुतः.

13 $^{a}$) $K_{4}$ अथ; $T_{2}$ उप-; $G_{1,3}$ अपि (for अप-). $K_{1}$ $B_{1,3-5}$ $D_{2,4-6}$ अपरिज्ञान($K_{1}$ $D_{2}$ °त)मेतत्ते; $D_{3}$ तस्य ते अपरिज्ञानं. —$^{c}$) $T_{1}$ $G_{1}$ संति (for न हि). $B_{1,3,4}$ $Dc_{1}$ पशुगण-; $B_{5}$ $T_{2}$ °वधो; $T_{1}$ $G_{1,3}$ बहुगणा (for पशु°). —$^{d}$) $K_{2}$ $D_{3}$ विधिं दृष्ट्वा; $B_{1,3,4}$ $Dc_{1}$ -वधो दृष्टः. $K_{6}$ परंतप (for पुरंदर). $B_{5}$ दृष्टः परपुरंजय.

14 $^{a}$) $T_{1}$ $G_{1}$ -दूषकस्; $G_{2}$ -द्रवकस् (for -घातकस्). $Dc_{1}$ हि (for तु). —$^{b}$) $K_{2,4}$ ततः (for तत्र). —$^{c}$) $Ś_{1}$ $K_{2-4}$ $D_{1}$ यज्ञ- (for धर्म-). $K_{1}$ $B_{1,3-5}$ $Dc_{1}$ $D_{2-6}$ T यज्ञो (for धर्मो). $K_{5}$ नायं धर्मकृतानां हि.

15 $^{a}$) $K_{2,4}$ $D_{1}$ $G_{3}$ तं यज्ञं; $K_{5}$ यज्ञेन (for ते यज्ञं). —$^{b}$) $K_{3}$ कुर्वंति. $K_{1}$ $B_{1,5}$ $D_{2-6}$ चेच्छसि; $K_{3}$ ही°; $Dc_{1}$ हेच्छथ; $D_{1}$ मेनसि (sic) (for हेच्छसि). $K_{2,4}$ कर्तुं यदि तु मन्यसे. —$^{d}$) $M_{1}$ धर्मं (sic). $K_{3}$ सुमहद्. T G अभूत् (for भवेत्).

16 $^{a}$) $K_{1,2,4,5}$ $Dc_{1}$ $D_{1,5}$ यज्ञ-; $T_{2}$ M यज्ञैः; $G_{2,3}$ धर्म- (for यज). $D_{6}$ स भवान्यज्ञबीजैश्च. —$^{b}$) $K_{1}$ -परमोचितैः; $K_{2,4}$ °क्षितैः ($K_{2}$ °ते); $K_{5}$ °दितैः; $D_{1}$ -परिमोषितैः; S -परमस्थि($T_{1}$ $G_{1}$ °मं स्थि)तैः. $D_{6}$ सहस्राक्ष विवर्षैता (sic). —$^{c}$) $K_{5}$ एष यज्ञो; $Dc_{1}$ धर्मं एष (by transp.). $B_{3}$ यज्ञ; $Dc_{1}$ राजन् (for शक्र). —$^{d}$) $K_{1}$ $B_{1,3-5}$ D (except $D_{1}$; $Dn_{1}$ missing) महागुणफलोदयः; $K_{2,4}$ विद्यमानोधिगच्छते; $T_{1}$ $G_{1}$ चिंतयानो नि($G_{1}$ °नोसि)गम्यते.

17 $^{a}$) $Ś_{1}$ $K_{2-4}$ स; $M_{1,4}$ च (for तु). $K_{2}$ तं (for तद्). $D_{5}$ वाच्यम्. —$^{c}$) $K_{2,4}$ उक्तं तत्; $D_{5,6}$ तदुक्तं (for उक्तं न). —$^{d}$) $K_{1}$ महान्; $K_{5}$ जानन्; $B_{1,3,4}$ $Dc_{1}$ $D_{1-4}$ $M_{1-3,4}$ (*inf. lin.* as in text) मानान्; $B_{5}$ काम-; $D_{5,6}$ मनाग् (for मान-). $K_{1,4}$ $B_{1,4,5}$ D (except $D_{1}$; $Dn_{1}$ missing) $M_{1-3,4}$ (*inf. lin.* as in text) -वशं गतः; Cv -वशानुगः (as in text).

18 $^{a}$) $T_{1}$ येषां; $G_{1,2}$ एषां. $K_{3}$ विव्याधः (sic) (for विवादः). —$^{b}$) $K_{2,4,5}$ $D_{1}$ M यज्ञे (for जज्ञे). $Ś_{1}$ -महर्षिणा; $K_{2}$ °णौ; $K_{3}$ °णः. $K_{1}$ $D_{5,6}$ शक्रयज्ञे महात्मनां ($K_{1}$ कथंचन); $B_{1,3-5}$ $Dc_{1}$ $D_{2-4}$ शक्रय($B_{3}$ यत्र य)ज्ञे तपस्विनं. —$^{c}$) $Ś_{1}$ $K_{3,5}$ $D_{1}$ चैव; T G

ते तु खिन्ना विवादेन ऋषयस्तत्त्वदर्शिनः ।
ततः संधाय शक्रेण पप्रच्छुर्नृपतिं वसुम् ॥ १९
महाभाग कथं यज्ञेष्वागमो नृपते स्मृतः ।
यष्टव्यं पशुभिर्मेध्यैरथो बीजैरजैरपि ॥ २०
तच्छ्रुत्वा तु वचस्तेषामविचार्य बलाबलम् ।
यथोपनीतैर्यष्टव्यमिति प्रोवाच पार्थिवः ॥ २१
एवमुक्त्वा स नृपतिः प्रविवेश रसातलम् ।
उक्त्वेह वितथं राजंश्चेदीनामीश्वरः प्रभुः ॥ २२
अन्यायोपगतं द्रव्यमतीतं यो ह्यपण्डितः ।
धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते ॥ २३
धर्मवैतंसिको यस्तु पापात्मा पुरुषस्तथा ।
ददाति दानं विप्रेभ्यो लोकविश्वासकारकम् ॥ २४
पापेन कर्मणा विप्रो धनं लब्ध्वा निरङ्कुशः ।
रागमोहान्वितः सोऽन्ते कलुषां गतिमाप्नुते ॥ २५

---

चापि (for वापि). —$^d$) Ś1 K3 नेति; D1 चेति (for इति).

19 $^a$) Ś1 K3 तेन; K2.4 ततः; D1 ते नि- (for ते तु). D1 -वृत्ता; M1.2 भिन्ना (for खिन्ना). K2.4 [अ]तिवादेन; D3 विवादे तं; T2 विनादेन. —$^b$) K2 -दर्शिभिः. — K1 om. 19$^{cd}$. —$^c$) B1.3-5 Dc1 D2-6 तदा; T G अभि- (for ततः). —$^d$) K2 D1.2 G2 पप्रच्छ. — After 19, Dc1 ins.:

189* धर्मसंशयमापन्नान्सत्यं ब्रूहि महामते ।

20 Before 20, T G ins. ऋषयः. —$^{ab}$) K5 S महाप्राज्ञ (for °भाग). K1.2.4 D1-6 यज्ञे स्वागमो; K6 बुद्धे स्वागमो (sic); T1 यज्ञेष्वागमे; M4 (*inf. lin.*) यज्ञे आगमे (for यज्ञेष्वागमो). Ś1 D1 G1.3 नृपतेः स्मृतः; K1 D2-6 °सत्तम (K1 D2 °मः); B1.5 °संमतः; B3 °संस्मृतः; T1 M4 °तेः सुतः; M1 °ते मतः; M4 (*inf. lin.*) °तिस्मृतः. Cv आगमे नृपतिः स्थितः (for 20$^b$). — K5 repeats 20$^{cd}$ after 21. —$^c$) G3 बहुभिर्; Cv पशु° (as in text). K1 B1.5 D2-6 मुख्यैर् (for मेध्यैर्). —$^d$) K3 अथ. Ś1 K3 D1 अथौषधैः; K1 D2-6 M रसैरिति; K2.4 रथैरिति; B3-5 M4 (*inf lin.*) अजैरिति. K5 (first time) अथो वाजैरथौषधैः, (second time) अथ बीजैः फलैरपि.

21 $^a$) B3 ततः श्रुत्वा (for तच्छ्रुत्वा तु). D1 स; T2 च (for तु). K1 B1.4.5 Dc1 D2-4 G2.3 M वसुस्; D1 वयस् (for वचस्). —$^b$) K1 अभिचार्य (sic); Dc1 स विचार्य. K2.4 महाबलं; D1 बलाबले. —$^d$) K5 M3.4 होवाच (for प्रो°). — After 21, K5 repeats 20$^{cd}$.

22 $^a$) K1 D2-6 [अ]थ; K6 G2 [ए]वं; T2 [ए]व (for [इ]ह). K1 B1.3-5 Dc1 D1-6 प्रश्नं; K5 राजा; D6 प्रत्यं (for राजंश्). K2.4 उक्ते हि वितथं (K2 °थे) राजंश्. —$^d$) K1 वेदानाम् (for चेदी°). B5 ऋषभः (for ईश्वरः). K3 प्रभो; B3-5 Dc1 पुरा (for प्रभुः). — After 22, K1.5 B1.3-5 D (except D1; D1 missing) ins.:

190* तस्मान्न वाच्यं ह्येकेन बहुज्ञेनापि संशये ।
प्रजापतिमपाहाय स्वयंभुवस्तते प्रभुम् ।

[ (L. 1) Dc1 केनापि; D5.6 त्वेकेन. — (L. 2) Dc1 उपास्थाय (for अपाहाय). Dc1 प्रभुः; D6 भुवं. ]

— After the above, the same MSS. read 26-27, Dc1 repeating 26 in its proper place.

23 $^a$) K3 Dc1 D1 M4 अन्यायो( K3 °ययो )पागतं; M1-3 °योपार्जितं. D1 वित्तम् (for द्रव्यम्). —$^b$) K1 B1.5 D2-6 अभीक्ष्णं; D1 आनीतं; S सततं (for अतीतं). —$^c$) K1.5 B1.3-5 Dc1 D2-6 धर्माभि( Dc1 °ति )शंकी ( B3 °कां ). Ś1 damaged; K2 B3 Dc1 T1 त्यजते; K3 यजेत; B1.5 T2 G त्यजति; D1 यतते (for यजते). —$^d$) K1 B1 D2-6 न स धर्मफलं लभे- (D6 भवे)त्; B3-5 Dc1 न स धर्मफली भवेत्.

24 $^a$) K3.4 -वैहिंसको; D1 -विध्वंसको; T1 G1.2 -वैतंडिको (for °सिको). K5 मूढः; T G ह्येष (for यस्तु). —$^b$) G3 तदा (for तथा). K1 B1.3-5 Dc1 D2.4-6 पापात्मा पुरुषाधमः; D3 °त्मा पुरुषर्षभः. —$^d$) Ś1 D1.6 G2.3 लोके. K (except K3) B1.3-5 D (except D1; Dn1 missing) T G1 -कारणं (for °कम्).

25 $^a$) K1 विप्र. —$^b$) M1.4 दानं (for धनं). K1 B1.3-5 D (except D1; Dn1 missing) प्राप्य (for लब्ध्वा). T1 G1 निरंकुशं. —$^c$) K2.4 शेते; K5 सर्वां; B3 शांते (for सोऽन्ते). —$^d$) K2.4 योनिम् (for गतिम्). Ś1 आप्नुवन्; K1.4.5 B1.3-5 D2-6 T G अश्नुते; K3 Dc1 D1 आप्नुयात्.

26 K4 om. 26$^a$–28$^b$. K1.5 B1.3-5 D (except D1; Dn1 missing) read 26-27 after 190*. Dc1 reads 26 for the first time, after 190*. —$^a$) Dc1 (both times) येन (for तेन). Ś1 K2 D1 S तेन

तेन दत्तानि दानानि पापेन हतबुद्धिना ।
तानि सत्त्वमनासाद्य नश्यन्ति विपुलान्यपि ॥ २६
तस्याधर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ।
दाने न कीर्तिर्भवति प्रेत्य चेह च दुर्मतेः ॥ २७
अपि संचयबुद्धिर्हि लोभमोहवशंगतः ।
उद्वेजयति भूतानि हिंसया पापचेतनः ॥ २८
एवं लब्ध्वा धनं लोभाद्यजते यो ददाति च ।
स कृत्वा कर्मणा तेन न सिध्यति दुरागमात् ॥ २९
उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः ।
दानं विभवतो दत्त्वा नराः स्वर्यान्ति धर्मिणः ॥
एष धर्मो महांस्त्यागो दानं भूतदया तथा ।
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा ।
सनातनस्य धर्मस्य मूलमेतत्सनातनम् ॥ ३१
श्रूयन्ते हि पुरा विप्रा विश्वामित्रादयो नृपाः ।
विश्वामित्रोऽसितश्चैव जनकश्च महीपतिः ।
कक्षसेनार्ष्टिषेणौ च सिन्धुद्वीपश्च पार्थिवः ॥ ३२
एते चान्ये च बहवः सिद्धिं परमिकां गताः ।
नृपाः सत्यैश्च दानैश्च न्यायलब्धैस्तपोधनाः ॥ ३३

(M1 यानि) दानानि दत्तानि. —$^{b}$) B1. 5 [अ]शुभ-; B3. 4 Dc1 (second time) D1-6 [अ]शुद्ध-; Dc1 (first time) कृत- (for हत-). —$^{c}$) B3 तान्वै (for तानि). K5 B1. 5 सर्वम्; B3 सर्वान्; Dc1 (second time) सत्यम्; D1 संतम् (for सत्त्वम्). K5 B1. 3. 5 Dc1 (both times) अनादत्य; M समासाद्य (for अना°). K1 B4 D2-6 तानि (D6 ततः) सर्वाण्यनादत्य.

27 For the sequence in K1. 5 B1. 3-5 D (except D1; Dn1 missing), cf. v. l. 26. K4 om. 27 (cf. v. l. 26). —$^{a}$) K1 तस्माद्धर्म-; K3 D1 T1 तस्य धर्म- (T1 °र्मे); T2 G1 तस्याधर्मे. T2 प्रवृद्धस्य. —$^{b}$) Dc1 नास्तिकस्य; D6 हिंसि°. G1 महात्मनः (for दुरा°). — Ś1 om. 27$^{c}$-30$^{b}$. —$^{c}$) G1 एतानि (for दाने न). T G3 एतेनाकीर्तिर्भवति. —$^{d}$) K1 B5 D2-6 न प्रेत्य (for प्रेत्य च). G2 सु- (for the second च). B1 D6 दुर्मतिः.

28 Ś1 om. 28 (cf. v. l 27). K4 om. 28$^{ab}$ (cf. v. l. 26). —$^{a}$) K2 पाप-; B3 T1 अति-; B4 अभि-; D1 अप- (for अपि). M1 -दुर्बुद्धिर् (for -बुद्धिर्हि). Dc1 अतिसंधाय बुद्ध्या तु. —$^{b}$) Dc1 यश्च (for लोभ-). T G -वशानुगः (for -वशंगतः). —$^{c}$) T G यज्ञं करोति भूतानि. —$^{d}$) T1 G1. 2 हिंसयेत्; G3 M हिंसयन्. T1 -चेतसः. K1. 5 B1. 3-5 Dc1 D2-6 [अ]पापेनाशुभ (B4 D4-6 °द्ध)-बुद्धिना.

29 Ś1 om. 29 (cf. v. l. 27). —$^{a}$) K1. 5 B1. 3-5 D2-6 T G मोहाद् (for लोभाद्). K2. 4 एवं लब्ध्वा धर्ममोहाद्. —$^{b}$) K2. 4 ब्राह्मणाय (for यजते यो). K1 यो दद्याद्यजतस्य च (sic). —$^{c}$) D1 सत्यवात् (sic) (for स कृत्वा). —$^{d}$) K2. 4 दुरात्मनः (K4 °ना) (for °गमात्). —For 29$^{bcd}$, B1. 3-5 Dc1 D2-6 subst.:

191* यो हि दद्याद्यजेत वा ।
न तस्य स फलं प्रेत्य भुङ्क्ते पापधनागमात् ।
[(L. 2) Dc1 फलमभ्येत्य (for स फलं प्रेत्य).]

30 Ś1 om. 30$^{ab}$ (cf. v. l. 27). —$^{a}$) K2. 4 उञ्छ मूल-; Dc1 D2 उछं मूल-; T G1 इच्छन्मूलं; G2 उंच्छ मूल-; M1 उंछमूल-. —$^{b}$) K2. 4. 5 B3. 4 T G -पा (for -पात्रं). K2. 4 तपोधन; K3 T G1. 2 °नः ❀ Cv : तपोवनमित्यत्र रक्षकं तापः । ❀ —$^{c}$) K विभवते; K5 °भावतो; D6 °भजतो; Cv विभवतो (as in text). G3 लब्ध्वा; Cv दत्त्वा (as in text) —$^{d}$) K2 स्वर्याति. Ś1 K1 B1. 3-5 D2-4 धार्मिकाः (for धर्मिणः). K3 D5. 6 T G ततः (K3 D5. 6 नरः) स्वर्याति धार्मिकः; K5 ततः स्वर्गमितो गताः; Dc1 नराः स्वर्यं धर्मतः.

31 $^{a}$) M एवं (for एष). K1 B1. 3-5 Dc1 D2- महायो (Dc1 °न्यो) गो; K5 महात्यागो; D1 महाख्यातो (for महांस्त्यागो). —$^{b}$) G2 तदा (for तथा). —$^{c}$) T G दया (for तथा). —$^{d}$) K5 क्षमा धृतिः (by transp.). —$^{f}$) T G M1 फलम् (for मूलम्). Ś1 समासतः; K3 समाहितः; B3 उदाहृतं (for सनातनम्).

32 $^{a}$) K1. 2. 4 Dc1 D1. 3. 4 श्रूयते. Dc1 च (for हि). K1 B1. 4. 5 Dc1 D2-6 -वृत्ता; K2. 4. 5 M2-4 सिद्धाः; B3 वृत्तो; D1 वृद्धा (for विप्रा). M1 श्रूयंते हि पुरासिन्या. — G3 om. 32$^{c}$-34$^{b}$. —$^{d}$) Dc1 D1 महामतिः. —$^{e}$) K1 B3. 4 D2-6 G2 कक्षसेना (D2. 3 G2 °नो) ष्टिसेनौ; K2 B1. 5 °नार्ष्णि (K2 °र्षि) सेनौ; K3 °नार्द्धिषेणौ; K4 T2 कक्षीवानार्ष्टिसेनौ (K4 °क्षीणौ); K5 ऋष्यसेनार्ष्टिषेणौ; D1 कश्यपोनार्ष्टिषेणौ. —$^{f}$) D4. 6 सिद्ध- (for सिन्धु-). T1 -द्वीपौ. K1. 3 D4. 6 पार्थिव; K4 °वे.

33 G3 om. 33 (cf. v. l. 32). K2 om. 33.

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाश्रितास्तपः । दानधर्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत ॥ ३४

इति श्रीमहाभारते आश्वमेधिकपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

# ९५

जनमेजय उवाच ।

धर्मागतेन त्यागेन भगवन्सर्वमस्ति चेत् ।
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि भाषितुम् ॥ १
ततोञ्छवृत्तेर्यद्वृत्तं सक्तुदाने फलं महत् ।
कथितं मे महद्ब्रह्मंस्तथ्यमेतदसंशयम् ॥ २
कथं हि सर्वयज्ञेषु निश्चयः परमो भवेत् ।
एतदर्हसि मे वक्तुं निखिलेन द्विजर्षभ ॥ ३

वैशंपायन उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अगस्त्यस्य महायज्ञे पुरावृत्तमरिंदम ॥ ४
पुरागस्त्यो महातेजा दीक्षां द्वादशवार्षिकीम् ।
प्रविवेश महाराज सर्वभूतहिते रतः ॥ ५
तत्राग्निकल्पा होतार आसन्सत्रे महात्मनः ।
मूलाहारा निराहाराः साश्मकुट्टा मरीचिपाः ॥ ६

---

— b) D5.6 गताः सिद्धिं परामितः. — c) T G1 कृपा- (for नृपाः). D5.6 न्यायैश्च (for दानैश्च). — d) K1 तपोधनैः; D5.6 तथा धनैः.

34 G3 om. 34ab (cf. v. l. 32). — b) K6 च श्रितास्; Dc1 वारि° (for चाश्रि°). — c) B3 -धर्मात्मकाः; T G -धर्माश्रिताः; M2 -धर्मादिना (for °ग्निना). K6 दानधर्माश्रिताः सिद्धास्. — d) D1 चाति (sic) (for यान्ति). M2.3 नित्यशः (for भारत).

Colophon missing in Dn1. — *Adhy. name :* K2.4 उञ्छव्रतोपाख्यानं; K6 नकुलोपाख्यानं; B3.5 शक्रमहर्षिसंवादः; T G1 शुद्धदानप्रशंसा (T2 °शमनं); Bom. ed. हिंसामिश्रधर्मनिंदा. — *Adhy. no.* (figures, words or both): Ś1 128; T1 81; T2 G1.2 80; G3 91; M1.4 76; M2.3 79; M4 (*inf. lin.*) 96.

## 95

☞ This adhy. is missing in Dn1 (cf. v. l. 14. 93. 22). B2 is not collated for this adhy.

1 a) D5.6 धर्मराजेन. K6 वित्तेन; D1 न्यायेन (for त्यागेन). — b) K1.4 B1.2-5 D (except D1; Dn1 missing) स्वर्गम्; K6 M फलम् (for सर्वम्).

2 a) Ś1 K3 तद्; K1 B2-5 Dc1 D2-6 तस्य; K2.4.5 B1 D1 G1 M4 तथा; G3 तदा (for ततो). Ś1 K3 T G2 [उं]छवृत्तौ; K2.4 G3 [औं]छवृत्तौ (G3 °त्तं); G1 [उं]छवृत्तं (for °वृत्तेर्). K3 ये (sic) (for यद्). — b) Ś1 (before corr as in text) सक्तुप्रस्थ-; K2 D1 °दान-; M यज्ञदान- (for सक्तुदाने). T G1 सक्तुदा[नं] महाफलं; G2.3 सक्तुदानं महत्फलं. — c) D1 प्राप्[तं] (for कथितं). K1 B1.5 D2-6 तु; K2 च; K4 B3.4 Dc1 T2 M1-3 ते (for मे). K1 B1.3-5 [D] (except D1; Dn1 missing) मम; K4.5 M2-4 म[हा] (for महद्). — d) Ś1 K2-4 D1 M1 सत्यम् (f[or] तथ्यम्). K3 M न संशयः; T1 G1 असंशयः.

3 a) G2 -धर्मेषु (for -यज्ञेषु). — b) D2.8 [s]भ[वत्] (for भवेत्).

4 a) T1 G1 पुरा (for महा-).

5 a) M अगस्त्यो हि (for पुरागस्त्यो). K2.4 अ[ग]स्त्यस्य महाराज.

6 a) K1.2 D2.4 अत्र (for तत्र). — b) K2 आसन्यज्ञे; T G चासन्सर्वे (for आसन्सत्रे). K1 महान[्] (sic). — c) Ś1 K2-4 फलाहारा (for मूला°). K1 B3-5 D (except D1; Dn1 missing) फलाहाराः; M2 निलाहाराः (for निरा°). — d) K1 शास्म-; K2.4 D1 G2 क्षश्म- (sic); T G1.3 चाश्म- (for साश्म-). K4 -कुट्य-; D1 -कुट्ट- (for -कुट्टा).

7 a) Hypermetric. Ś1 K3 परिपू(K3 °पू)र्ण[े]

परिघृष्टिका वैघसिकाः संप्रक्षालास्तथैव च ।
यतयो भिक्षवश्चात्र बभूवुः पर्यवस्थिताः ॥ ७
सर्वे प्रत्यक्षधर्माणो जितक्रोधा जितेन्द्रियाः ।
दमे स्थिताश्च ते सर्वे दम्भमोहविवर्जिताः ॥ ८
वृत्ते शुद्धे स्थिता नित्यमिन्द्रियैश्चाप्यवाहिताः ।
उपासते स्म तं यज्ञं भुञ्जानास्ते महर्षयः ॥ ९
यथाशक्त्या भगवता तदन्नं समुपार्जितम् ।
तस्मिन्सत्रे तु यत्किंचिदयोग्यं तत्र नाभवत् ।
तथा ह्यनेकैर्मुनिभिर्महान्तः क्रतवः कृताः ॥ १०
एवंविधेस्त्वगस्त्यस्य वर्तमाने महाध्वरे ।
न ववर्ष सहस्राक्षस्तदा भरतसत्तम ॥ ११
ततः कर्मान्तरे राजन्नगस्त्यस्य महात्मनः ।
कथेयमभिनिर्वृत्ता मुनीनां भावितात्मनाम् ॥ १२
अगस्त्यो यजमानोऽसौ ददात्यन्नं विमत्सरः ।
न च वर्षति पर्जन्यः कथमन्नं भविष्यति ॥ १३
सत्रं चेदं महद्विप्रा मुनेर्द्वादशवार्षिकम् ।
न वर्षिष्यति देवश्च वर्षाण्येतानि द्वादश ॥ १४
एतद्भवन्तः संचिन्त्य महर्षेरस्य धीमतः ।
अगस्त्यस्यातितपसः कर्तुमर्हन्त्यनुग्रहम् ॥ १५
इत्येवमुक्ते वचने ततोऽगस्त्यः प्रतापवान् ।

---

$K_{1.5}$ $D_{2}$ Cn °घृ ($K_{5}$ °मृ)ष्टिका; $K_{2.4}$ परि($K_{2}$ °र)-मुष्टिका; $D_{1}$ °घृष्टितो; $D_{3}$ °घृष्टिक-; $T_{1}$ पंपुप्पका; $T_{2}$ $G_{1.2}$ पति($T_{2}$ °रि)पुष्टका; $G_{3}$ परिवृष्टिका; M परिघृष्टा; Cnp °पृच्छिका (for °घृष्टिका). $D_{1}$ विच्च-सिकाः; $D_{6}$ वैघसिकास्; M वैतसिका: — [b]) $K_{1}$ $D_{2-4.6}$ त्वप्रच्छा($D_{3.4.6}$ °क्षा)लास्; $B_{1.3}$ संप्रक्षानास्; $D_{1}$ संप्रख्यातास्; $D_{5}$ त्वप्रज्ञानास्; S संप्रक्षाळास्; Bom. ed. प्रसंख्यानास्; Cnp अप्रक्षालास्. — [c]) $K_{2.4}$ [ए]व; $G_{2}$ [अ]पि (for [अ]त्र).

8 $G_{3}$ om. $8^{ab}$. — [a]) $K_{3}$ सर्व- (for सर्वे). — [c]) $D_{c1}$ यमे; $G_{3}$ रेगे (sic) (for दमे). $K_{1}$ $B_{1.5}$ $D_{2-6}$ सर्वे ते (by transp); $B_{3}$ ये सर्वे. — [d]) $K_{1}$ corrupt. $K_{5}$ $B_{3-5}$ $D_{c1}$ M तमोदंभ-; $D_{2.4-6}$ हिंसादंभ-; $D_{3}$ दंभहिंसा-; T $G_{1.3}$ मोहदंभ-.

9 $K_{1}$ om. $9^{a}$–$10^{b}$. $K_{2.4}$ om. (hapl.) $9^{ab}$. — [a]) $Ś_{1}$ $K_{3}$ शुद्धवृत्ते; $D_{c1}$ वृत्ते शुभे; $D_{1}$ युद्धे वृत्ते; $D_{5.6}$ वृत्ते शुद्ध-; T G वृद्धैः शुद्धै($G_{3}$ °भै)स् (for वृत्ते शुद्धे). T $G_{1}$ तथा (for स्थिता). — [b]) $B_{1.3-5}$ $D_{2-6}$ $T_{2}$ $G_{2}$ [अ]बाधिताः (for [अ]वाहिताः). — [c]) $K_{2.3}$ उपासंति; M °संते. $K_{3}$ T $G_{1}$ स्म ते; $G_{3}$ स्वयं (for स्म तं). $B_{1.3-5}$ D (except $D_{1}$; $D_{n1}$ missing) उपातिष्ठंन तं ($D_{6}$ ते) यज्ञं. — [d]) $K_{2.4}$ ते भुंजाना (by transp.); $K_{5}$ भुंजंते स्म; $B_{1.3-5}$ D (except $D_{1}$; $D_{n1}$ missing) यजंतस्ते ($B_{1}$ °श्च).

10 $K_{1}$ om. $10^{ab}$ (cf. v. l. 9). — [a]) $K_{2.4}$ यथा भक्त्या. — [b]) $K_{2.4}$ तदस्तं; $B_{3}$ °र्थं; $M_{1}$ यदन्नं. — [c]) $D_{c1}$ यस्मिन्. $Ś_{1}$ सतेन; $K_{3.5}$ $D_{1}$ $M_{1}$ सत्रेन; $M_{2.3}$ सत्रेण; $M_{4}$ यज्ञेन (for सत्रे तु). $K_{1}$ $B_{1.5}$ $D_{c1}$ $D_{2-5}$ यद्वृत्तं; $D_{6}$ यद्द्रव्यं; M किंचिद्यद् (by transp.). $K_{2.4}$ तस्मिन्सत्रे ततः किंचिद्. — [d]) $Ś_{1}$ $K_{2.3.5}$ $D_{1}$ यद्योग्यं; $K_{4}$ प्रघोषं (for अयोग्यं). $K_{1}$ $B_{1.5}$ $D_{c1}$ $D_{2-6}$ यद्योग्यं च तदाभवत्; $B_{3.4}$ यदयोग्यं तदा°. — $K_{2.4}$ om. $10^{ef}$. — [e]) $D_{2.6}$ T $G_{1.2}$ यथा; $G_{3}$ यदा (for तथा). $D_{1}$ मुनिभिर्याज्ञिकैश्चैव. — [f]) T G बहवः (for महान्तः).

11 [a]) $K_{1.4.5}$ $B_{1.3-5}$ $D_{3-5}$ $G_{2}$ $M_{4}$ (*inf. lin.*) एवंविधे; $M_{4}$ एवं विधस्. $Ś_{1}$ $K_{2.3}$ $D_{1}$ एवंकृते त्व($K_{2}$ °विधेस्त्व)गस्त्येन. — [b]) $D_{1}$ विधिवद्धे; $T_{1}$ $G_{1}$ वर्धमाने (for वर्त°). $K_{1.3.4}$ $B_{3.4}$ D (except $D_{1}$; $D_{n1}$ missing) त($D_{2}$ य)थाध्वरे (for महा°). — [c]) $D_{5}$ सहस्राणि (for °क्षस्). $D_{6}$ नैव वर्षसहस्राणि.

12 [c]) $Ś_{1}$ $K_{3}$ इति; $T_{1}$ $G_{1}$ इह (for अभि-). $K_{1}$ $D_{1}$ -निवृत्ता; $D_{c1}$ -संवृत्ता. — [d]) $K_{1.3}$ भवितात्मनां (sic).

13 [a]) $Ś_{1}$ $K_{3}$ वै; $K_{2.4}$ [ऽ]त्र; $D_{1}$ G M [ऽ]यं; T यद् (for ऽसौ). — [b]) $D_{3}$ न (for [अ]न्नं). M अमत्सरः. — [d]) $G_{1}$ अन्यद् (for अन्नं).

14 [a]) $Ś_{1}$ $K_{2-4}$ $D_{1}$ [ए]तन् (for इदं). $T_{1}$ विप्र. — [b]) $K_{2.4}$ -वार्षिकी ($K_{4}$ °कीं) (sic); $B_{3}$ -वर्षकं. $K_{6}$ कथमन्नं भविष्यति (= $13^{d}$). — [c]) $B_{4}$ $G_{3}$ च ($G_{3}$ हि) वर्षति (for वर्षिष्यति). $K_{2}$ देवस्य; $B_{1}$ देवेशो (for देवश्च). $K_{1}$ तत्र वर्षति देवश्च; $K_{4}$ न वर्षति देवराजो; $K_{5}$ न वर्षिण्यश्च तेजश्च.

15 [a]) $T_{1}$ $G_{1}$ एवं (for एतद्). $T_{2}$ संचित्य; $G_{1.2}$ सत्यस्य; $G_{3}$ सत्रस्य (for संचिन्त्य). — [b]) $Ś_{1}$ $K_{3.5}$ $D_{1}$ T तस्य (for अस्य). — [c]) $K_{2.4}$ $D_{1}$ $T_{2}$ $M_{1-3}$ [अ]पि

प्रोवाचेदं वचो वाग्मी प्रसाद्य शिरसा मुनीन् ॥ १६
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
चिन्तायज्ञं करिष्यामि विधिरेष सनातनः ॥ १७
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
व्यायामेनाहरिष्यामि यज्ञानन्यानतिव्रतान् ॥ १८
बीजयज्ञो मयायं वै बहुवर्षसमाचितः ।
बीजैः कृतैः करिष्ये च नात्र विघ्नो भविष्यति ॥ १९
नेदं शक्यं वृथा कर्तुं मम सत्रं कथंचन ।
वर्षिष्यतीह वा देवो न वा देवो भविष्यति ॥ २०
अथ वाभ्यर्थनामिन्द्रः कुर्यान्न त्विह कामतः ।
स्वयमिन्द्रो भविष्यामि जीवयिष्यामि च प्रजाः ॥ २१
यो यदाहारजातश्च स तथैव भविष्यति ।
विशेषं चैव कर्तास्मि पुनः पुनरतीव हि ॥ २२
अद्येह स्वर्णमभ्येतु यच्चान्यद्वसु दुर्लभम् ।
त्रिषु लोकेषु यच्चास्ति तदिहागच्छतां स्वयम् ॥ २३
दिव्याश्चाप्सरसां संघाः सगन्धर्वाः सकिंनराः ।

---

(for [अ]ति-). —$^{d}$) K2 D6 M1 अर्हति; G1 अर्हसि. — After 15, Ś1 K3 D1 ins. an addl. colophon [ *Adhy. no.*: Ś1 129 ]

16 Before 16, K3 D1 ins. वैशंपायन उवाच. —$^{b}$) K1 प्रत्युवाच ह (hypermetric) (for प्रतापवान्). —$^{c}$) K1 B1.3-5 D (except D1; Dn1 missing) प्रोवाच वाक्यं (B3.4 Dc1 °ग्मी) स तदा.

17 K3 M4 om. (hapl.) 17$^{c}$–18$^{b}$. B1 repeats 17$^{cd}$ after 19$^{b}$. —$^{c}$) K5 स्पर्धायज्ञं; G3 चिंतायज्ञान्. Dc1 विधास्यामि (sic) (for करिष्यामि). —$^{d}$) T G विधिरेषा सनातनी (sic). — After 17, K1 ins. 192*.

18 K3 M4 om. 18$^{ab}$ (cf. v. l. 17). K1.2 om. 18$^{ab}$. K4 B1.3-5 D (except D1; Dn1 missing) T G1.2 ins. after 18$^{b}$: K1 after 17:

192* स्पर्शयज्ञं करिष्यामि विधिरेष सनातनः ।
　　यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।

[ (L. 1) ❀ Cv: स्पर्शयज्ञं पूजार्थं साल्यामादिस्पर्शयज्ञः तम् । ❀ T G1.2 विधिरेषा सनातनी (sic) (for the post. half). — K4 om. line 2. ]

—$^{c}$) Ś1 D2 T2 हरिष्यामि; K2.4 आहनि° (for आहरि°). ❀ Cnp, Cv: व्यायामेन, शरीरक्लेशेन । ❀ —$^{d}$) K3 D1 अतिव्रत: (D1 °ता:); D2 °क्रमात्. — For 18$^{cd}$, Bom. ed. subst.:

193* ध्येयात्मना हरिष्यामि यज्ञानेतान्यतव्रतः ।

19 $^{a}$) Ś1 K2-4 मया (Ś1 °द्य) लब्धो; K5 G3 M1.4 मयायं भो; B5 मया यद्वै; D1 मया लब्धो; D3 मया वैव; T G1.2 महारंभो; M2.3 समारंभो (for मयायं वै). —$^{b}$) Dc1 बहुवर्षं. K2.4 -समोचितः; D3 -समन्वितः; M -समाहितः. — After 19$^{b}$, B1 repeats 17$^{cd}$. —$^{c}$) B1.3-5 हुतं (for कृतैः). K2 करिष्येव; K3 °ष्येद्यं; K5 °ष्येश्च; B1.5 °ष्यामि; D1 °ष्यंते (for °ष्ये च). बीजैः कृत्ये करिष्येवं (sic); K1 D2-6 बीजैर्हितं करिष्यामि Dc1 एतत्सत्रं करिष्यामि. —$^{d}$) K3 नाना-; T G नात्र M नान्न- (M4 न्य-) (for नात्र). D1 -साद्वि (for विघ्नो). K3 (*sup. lin.* as in text) करिष्यसि (for भविष्यति).

20 K4 om. (hapl.) 20$^{a}$–22$^{b}$. —$^{a}$) K2 इदयं; G3 यज्ञं (for शक्यं). D4 मया (for वृथा). K2 वाक्यं (for कर्तुं). K3 न शक्यमन्यथा कर्तुं. —$^{b}$) G3 शक्यं (for सत्रं). —$^{c}$) K5 S न वर्षिष्यति; D2 वर्धिष्यतीह. Ś1 K3.5 B1 D1 देवो वा (D1 वै) (by transp.); K1 वासवो; K2 देवोत्र. —$^{d}$) Dc1 वृथायं; T2 G3 वा देयो; Bom. ed. वा वर्षं (for वा देवो).

21 K4 om. 21 (cf. v. l. 20). —$^{a}$) K2.3 तु (for वा). K3 [अ]स्यर्थनाम्; K5 [अ]भ्यचैनाम्; T1 ह्यर्थनाम्; G3 [अ]प्यर्थि°; M1 ह्यर्थि° (for [अ]भ्यर्थ°). D1 अथ वा वर्षयामींद्रं. —$^{b}$) T1 कार्यं (for कुर्यान्). K2 D1 ननु; M4 (*inf. lin.*) नास्तु (for न तु). K1 B1.3-5 Dc1 D2-6 न करिष्यति कामतः; K3 कुर्यादिह न का°; K5 कुर्वन्नन्विह का°. —$^{d}$) K2 वा (for च).

22 K4 om. 22$^{ab}$ (cf. v. l. 20). —$^{a}$) Ś1 K2.3 D1 G3 यथाहार-. G1 -दानश्च; G2.3 -दानं (for -जातश्च). Dc1 यो यथैव समाजातः; T1 यो यथाहारयानश्च. —$^{c}$) M2-4 वर्षाणां (for विशेषं). K2.4 S [अ]पि (for [ए]व). Dc1 [अ]सि; D3 तु (for [अ]स्मि). Ś1 K3 विशेषेणापि कर्तासि. —$^{d}$) T G M1 ह (for हि). M2.3 लोकानां च न संशयः.

23 $^{a}$) K3 स्वलम् (sic); Dc1 स्वर्गम्; D2 कर्णम् (for स्वर्णम्). —$^{b}$) K3 अपि; K5 Dc1 वस्तु-; B3 भुवि (for वसु). K1 B1.5 D2-6 किंचन (for दुर्लभम्). — T1 om. 23$^{c}$–25$^{b}$. —$^{d}$) K1 B1.5 D2-6 [आ]गम्यतां;

परिघृष्टिका वैघसिकाः संप्रक्षालास्तथैव च ।
यतयो भिक्षवश्चात्र बभूवुः पर्यवस्थिताः ॥ ७
सर्वे प्रत्यक्षधर्माणो जितक्रोधा जितेन्द्रियाः ।
दमे स्थिताश्च ते सर्वे दम्भमोहविवर्जिताः ॥ ८
वृत्ते शुद्धे स्थिता नित्यमिन्द्रियैश्चाप्यवाहिताः ।
उपासते स्म तं यज्ञं भुञ्जानास्ते महर्षयः ॥ ९
यथाशक्त्या भगवता तदन्नं समुपार्जितम् ।
तस्मिन्सत्रे तु यत्किंचिदयोग्यं तत्र नाभवत् ।
तथा ह्यनेकैर्मुनिभिर्महान्तः क्रतवः कृताः ॥ १०
एवंविधेस्त्वगस्त्यस्य वर्तमाने महाध्वरे ।
न ववर्ष सहस्राक्षस्तदा भरतसत्तम ॥ ११
ततः कर्मान्तरे राजन्नगस्त्यस्य महात्मनः ।
कथेयमभिनिर्वृत्ता मुनीनां भावितात्मनाम् ॥ १२
अगस्त्यो यजमानोऽसौ ददात्यन्नं विमत्सरः ।
न च वर्षति पर्जन्यः कथमन्नं भविष्यति ॥ १३
सत्रं चेदं महद्विप्रा मुनेर्द्वादशवार्षिकम् ।
न वर्षिष्यति देवश्च वर्षाण्येतानि द्वादश ॥ १४
एतद्भवन्तः संचिन्त्य महर्षेरस्य धीमतः ।
अगस्त्यस्यातितपसः कर्तुमर्हन्त्यनुग्रहम् ॥ १५
इत्येवमुक्ते वचने ततोऽगस्त्यः प्रतापवान् ।

K1. 5 D2 Cn °पृ K5 °सृ )ष्टिका; K2. 4 परि( K2 °र )-मुष्टिका; D1 °पृष्टितो; D3 °घृष्टिक-; T1 पंपुष्पका; T2 G1. 2 पति( T2 °रि )पुष्टका; G3 परिवृष्टिका; M परिघृष्टा; Cnp °पृच्छिका (for °घृष्टिका). D1 विघसिकाः; D6 वैघमिकास्; M वैतसिकाः — b) K1 D2-4. 6 स्वप्रच्छा( D3. 4. 6 °क्षा )लास्; B1. 3 संप्रक्षानास्; D1 संप्रख्यातास्; D5 स्वप्रज्ञानास्; S संप्रक्षाळास्; Bom. ed. प्रसंख्यानास्; Cnp अप्रक्षालास्. — c) K2. 4 [ए]व; G2 [अ]पि ( for [अ]त्र ).

8 G3 om. $8^{ab}$. — a) K3 सर्व- (for सर्वे). — c) Dc1 यमे; G3 रेगे (sic) (for दमे). K1 B1. 5 D2-6 सर्वे ते (by transp); B3 ये सर्वे. — d) K1 corrupt. K5 B3-5 Dc1 M तमोदंभ-; D2. 4-6 हिंसादंभ-; D3 दंभहिंसा-; T G1. 3 मोहदंभ-.

9 K1 om. $9^{a}$-$10^{b}$. K2. 4 om. (hapl.) $9^{ab}$. — a) Ś1 K3 शुद्धवृत्ते; Dc1 वृत्ते शुभे; D1 युद्धे वृत्ते; D5. 6 वृत्ते शुद्ध-; T G वृद्धैः शुद्धै( G3 °भै )स् ( for वृत्ते शुद्धे ). T G1 तथा ( for स्थिता ). — b) B1 3-5 D2-6 T2 G2 [अ]बाधिताः ( for [अ]वाहिताः ). — c) K2. 3 उपासंति; M °संते. K3 T G1 स्म ते; G3 स्वयं (for स्म तं). B1. 3-5 D ( except D1; Dn1 missing ) उपातिष्ठंन तं ( D6 ते ) यज्ञं. — d) K2. 4 ते भुंजाना ( by transp. ); K5 भुंजंते स्म; B1. 3-5 D (except D1; Dn1 missing) यजंतस्ते ( B1 °श्च ).

10 K1 om. $10^{ab}$ ( cf. v. l. 9 ). — a) K2. 4 यथा भक्त्या. — b) K2. 4 तदस्तं; B3 °र्थं; M1 यदन्नं. — c) Dc1 यस्मिन्. Ś1 सतेन; K3. 5 D1 M1 सत्रेन; M2. 3 सत्रेण; M4 यज्ञेन (for सत्रे तु). K1 B1. 5 Dc1 D2-5 यद्वृत्तं; D6 यद्द्रव्यं; M किंचिद्यद् ( by transp.). K2. 4 तस्मिन्सत्रे ततः किंचिद्. — d) Ś1 K2. 3. 5 D1 यद्योग्यं; K4 प्रयोषं ( for अयोग्यं ). K1 B1. 5 Dc1 D2-6 यद्योग्यं च तदाभवत्; B3. 4 यदयोग्यं तदा°. — K2. 4 om. $10^{ef}$. — e) D2. 6 T G1. 2 यथा; G3 यदा ( for तथा ). D1 मुनिभिर्याज्ञिकैश्चैव. — f) T G बहवः ( for महान्तः ).

11 a) K1. 4. 5 B1. 3-5 D3-5 G2 M4 ( *inf. lin.* ) एवंविधे; M4 एवं विधस्. Ś1 K2. 3 D1 एवंकृते त्व( K2 °विधेस्त्व )गस्त्येन. — b) D1 विधिवद्धे; T1 G1 वर्धमाने ( for वर्त° ). K1. 3. 4 B3. 4 D ( except D1; Dn1 missing ) त( D2 य )थाध्वरे ( for महा° ). — c) D5 सहस्राणि ( for °क्षस् ). D6 नैव वर्षसहस्राणि.

12 c) Ś1 K3 इति; T1 G1 इह ( for अभि- ). K1 D1 -निवृत्ता; Dc1 -संवृत्ता. — d) K1. 3 भवितात्मनां ( sic ).

13 a) Ś1 K3 वै; K2. 4 [ऽ]त्र; D1 G M [ऽ]यं; T यद् ( for ऽसौ ). — b) D3 न ( for [अ]न्नं ). M अमत्सरः. — d) G1 अन्यद् ( for अन्नं ).

14 a) Ś1 K2-4 D1 [ए]तन् ( for इदं ). T1 विप्र. — b) K2. 4 -वार्षिकी ( K4 °कीं ) (sic); B3 -वर्षकं. K5 कथमन्नं भविष्यति ( = $13^{d}$ ). — c) B4 G3 च ( G3 हि ) वर्षति ( for वर्षिष्यति ). K2 देवस्य; B1 देवेशो ( for देवश्च ). K1 तत्र वर्षति देवश्च; K4 न वर्षति देवराजो; K5 न वर्षिष्यश्च तेजश्च.

15 a) T1 G1 एवं ( for एतद् ). T2 संचित्य; G1. 2 सत्यस्य; G3 सत्रस्य ( for संचिन्त्य ). — b) Ś1 K3. 5 D1 T तस्य ( for अस्य ). — c) K2. 4 D1 T2 M1-3 [अ]पि

प्रोवाचेदं वचो वाग्मी प्रसाद्य शिरसा मुनीन् ॥ १६
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
चिन्तायज्ञं करिष्यामि विधिरेष सनातनः ॥ १७
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
व्यायामेनाहरिष्यामि यज्ञानन्यानतिव्रतान् ॥ १८
बीजयज्ञो मयायं वै बहुवर्षसमाचितः ।
बीजैः कृतैः करिष्ये च नात्र विघ्नो भविष्यति ॥ १९
नेदं शक्यं वृथा कर्तुं मम सत्रं कथंचन ।
वर्षिष्यतीह वा देवो न वा देवो भविष्यति ॥ २०
अथ वाभ्यर्थनामिन्द्रः कुर्यान्न त्विह कामतः ।
स्वयमिन्द्रो भविष्यामि जीवयिष्यामि च प्रजाः ॥ २१
यो यदाहारजातश्च स तथैव भविष्यति ।
विशेषं चैव कर्तास्मि पुनः पुनरतीव हि ॥ २२
अद्येह स्वर्णमभ्येतु यच्चान्यद्वसु दुर्लभम् ।
त्रिषु लोकेषु यच्चास्ति तदिहागच्छतां स्वयम् ॥ २३
दिव्याश्चाप्सरसां संघाः सगन्धर्वाः सकिंनराः ।

---

(for [अ]ति-). —$^{d}$) K2 D6 M1 अर्हति; G1 अर्हसि. — After 15, Ś1 K3 D1 ins. an addl. colophon [*Adhy. no.*: Ś1 129]

16 Before 16, K3 D1 ins. वैशंपायन उवाच. —$^{b}$) K1 प्रत्युवाच ह (hypermetric) (for प्रतापवान्). —$^{c}$) K1 B1. 3-5 D (except D1; Dn1 missing) प्रोवाच वाक्यं (B3. 4 Dc1 °ग्मी) स तदा.

17 K3 M4 om. (hapl.) 17$^{c}$–18$^{b}$. B1 repeats 17$^{cd}$ after 19$^{b}$. —$^{c}$) K5 स्पर्धायज्ञं; G3 चिंतायज्ञान्. Dc1 विधास्यामि (sic) (for करिष्यामि). —$^{d}$) T G विधिरेषा सनातनी (sic). — After 17, K1 ins. 192*.

18 K3 M4 om. 18$^{ab}$ (cf. v. l. 17). K1. 2 om. 18$^{ab}$. K4 B1. 3-5 D (except D1; Dn1 missing) T G1. 2 ins. after 18$^{b}$: K1 after 17:

192* स्पर्शयज्ञं करिष्यामि विधिरेष सनातनः ।
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।

[(L. 1) ❀ Cv: स्पर्शयज्ञं पूजार्थं सालग्रामादिस्पर्शयज्ञः तम् । ❀ T G1. 2 विधिरेषा सनातनी (sic) (for the post. half). — K4 om. line 2.]

—$^{c}$) Ś1 D2 T2 हरिष्यामि; K2. 4 आहनि° (for आहरि°). ❀ Cnp, Cv: व्यायामेन, शरीरक्लेशेन । ❀ —$^{d}$) K3 D1 अतिव्रतः (D1 °ताः); D2 °क्रमात्. — For 18$^{cd}$, Bom. ed. subst.:

193* ध्येयात्मना हरिष्यामि यज्ञानेतान्यतव्रतः ।

19 $^{a}$) Ś1 K2-4 मया (Ś1 °हा) लब्धो; K6 G3 M1. 4 मयायं भो; B5 मया यद्वै; D1 मया लब्धो; D3 मया वैव; T G1. 2 महारंभो; M2. 3 समारंभो (for मयायं वै). —$^{b}$) Dc1 बहुवर्षं. K2. 4 -समोचितः; D3 -समन्वितः; M -समाहितः. — After 19$^{b}$, B1 repeats 17$^{cd}$. —$^{c}$) B1. 3-5 हुतं (for कृतैः). K2 करिष्यैव; K3 °ष्येश्च; K5 °ष्येश्च; B1. 5 °ष्यामि; D1 °ष्यंते (for °ष्ये च). Ś1 बीजैः कृत्ये करिष्येवं (sic); K1 D2-6 बीजैर्हितं करिष्यामि; Dc1 एतत्सत्रं करिष्यामि. —$^{d}$) K3 नाना-; T G नाति-; M नात्र- (M4 त्य-) (for नात्र). D1 -साद्दि (for विघ्नो). K3 (*sup. lin.* as in text) करिष्यसि (for भविष्यति).

20 K4 om. (hapl.) 20$^{a}$–22$^{b}$. —$^{a}$) K2 इदयं; G3 यज्ञं (for शक्यं). D4 मया (for वृथा). K2 वाक्यं (for कर्तुं). K3 न शक्यमन्यथा कर्तुं. —$^{b}$) G3 शक्यं (for सत्रं). —$^{c}$) K5 S न वर्षिष्यति; D2 वर्धिष्यतीह. Ś1 K3. 5 B1 D1 देवो वा (D1 वै) (by transp.); K1 वासवो; K2 देवोत्र. —$^{d}$) Dc1 वृथायं; T2 G3 वा देयो; Bom. ed. वा वर्षं (for वा देवो).

21 K4 om. 21 (cf. v. l. 20). —$^{a}$) K2. 3 तु (for वा). K3 [अ]त्यर्थनाम्; K5 [अ]भ्यर्चनाम्; T1 ह्यर्थनाम्; G3 [अ]प्यर्थि°; M4 ह्यर्थि° (for [अ]भ्यर्थ°). D1 अथ वा वर्षयामीदं. —$^{b}$) T1 कार्यं (for कुर्यान्). K2 D1 ननु; M4 (*inf. lin.*) नास्तु (for न तु). K1 B1. 3-5 Dc1 D2-6 न करिष्यति कामतः; K3 कुर्यादिह न का°; K5 कुर्वन्नन्विह का°. —$^{d}$) K2 वा (for च).

22 K4 om. 22$^{ab}$ (cf. v. l. 20). —$^{a}$) Ś1 K2. 3 D1 G3 यथाहार-. G1 -दानश्च; G2. 3 -दानं (for -जातश्च). Dc1 यो यथैव समाजातः; T1 यो यथाहारयानश्च. —$^{c}$) M2-4 वर्षाणां (for विशेषं). K2. 4 S [अ]पि (for [ए]व). Dc1 [अ]सि; D6 तु (for [अ]स्मि). Ś1 K3 विशेषेणापि कर्तास्मि. —$^{d}$) T G M1 ह (for हि). M2. 3 लोकानां च न संशयः.

23 $^{a}$) K3 स्वलम् (sic); Dc1 स्वर्गम्; D2 कर्णम् (for स्वर्णम्). —$^{b}$) K3 अपि; K5 Dc1 वस्तु-; B3 भुवि (for वसु). K1 B1. 5 D2-6 किंचन (for दुर्लभम्). — T1 om. 23$^{c}$–25$^{b}$. —$^{d}$) K1 B1. 5 D2-6 [आ]गम्यतां;

विश्वावसुश्च ये चान्ये तेऽप्युपासन्तु वः सदा ॥ २४
उत्तरेभ्यः कुरुभ्यश्च यत्किंचिद्वसु विद्यते ।
सर्वं तदिह यज्ञे मे स्वयमेवोपतिष्ठतु ।
स्वर्गं स्वर्गसदश्चैव धर्मश्च स्वयमेव तु ॥ २५
इत्युक्ते सर्वमेवैतदभवत्तस्य धीमतः ।
ततस्ते मुनयो दृष्ट्वा मुनेस्तस्य तपोबलम् ।
विस्मिता वचनं प्राहुरिदं सर्वे महार्थवत् ॥ २६
प्रीताः स्म तव वाक्येन न त्विच्छामस्तपोव्ययम् ।
स्वैरेव यज्ञैस्तुष्टाः स्मो न्यायेनेच्छामहे वयम् ॥ २७
यज्ञान्दीक्षास्तथा होमान्यच्चान्यन्मृगयामहे ।
तन्नोऽस्तु स्वकृतैर्यज्ञैर्नान्यतो मृगयामहे ॥ २८
न्यायेनोपार्जिताहाराः स्वकर्मनिरता वयम् ।
वेदांश्च ब्रह्मचर्येण न्यायतः प्रार्थयामहे ॥ २९
न्यायेनोत्तरकालं च गृहेभ्यो निःसृता वयम् ।
धर्मदृष्टैर्विधिद्वारैस्तपस्तप्स्यामहे वयम् ॥ ३०
भवतः सम्यगेषा हि बुद्धिर्हिंसाविवर्जिता ।

---

S ( T1 om. ) °च्छतु.

24 T1 om. 24 (cf. v. l. 23). — $^{a}$) T2 यदि; G दिवि (for दिव्याश्). B1.3.4 Dc1 दिव्याप्सरस-संघाश्च. — $^{b}$) K1 B1.3-5 D (except D1; Dn1 missing) गंधर्वाश्च (for सगन्धर्वाः). — $^{d}$) B1.5 Dc1 D3-6 मे; D2 ते; M1 मा; M2.3 वा (for वः). B1.5 Dc1 D2-6 मखं (for सदा). K1 ते प्रयासंतु (sic) ते मखं; K2.4.5 B3.4 D1 तेप्युपायांतु नः (K5 वः; B3.4 मे) सदा (B3.4 मखं); T2 G तेपि (G3 ते च) युष्मानुपासतां.

25 T1 om. $25^{ab}$ (cf. v. l. 23). — $^{a}$) K5 तु (for च). — $^{b}$) Ś1 K3 B1 G3 विद्यते वसु (by transp.); K5 वस्तु विद्यते. — D1 om. $25^{cdef}$. — $^{c}$) K1 B1.3.5 D (D1 om.; Dn1 missing) यज्ञेषु; B4 यज्ञे तु (for यज्ञे मे). — $^{d}$) T1 G [उ]पतिष्ठतां. — D6 om. $25^{ef}$. — $^{e}$) K1 corrupt. D2 स्वर्गाः; M1 स्वर्गे. G1 स्वर्गस्ततश्; G2 °सतश् (for °सदश्). — $^{f}$) Ś1 K3 Dc1 D1 M1.2 एतु (for एव). Ś1 K3 Dc1 D1 मे; K1.5 B4 च; M1.2 वै (for तु).

26 $^{a}$) K2 इत्युक्तं; D1 om.; T1 G1 इत्युक्तः. K1 एवं तु (for एवैतद्). Dc1 यच्च यज्ञविधौ मे वै. — $^{b}$) K1 B1.3-5 D (except D1; Dn1 missing) अभवत्तपसा मुनेः (K1 D3.6 °ने). — After $26^{b}$, K1 B1.3-5 Dc1 D2-6 ins. :

194* तस्य दीप्ताग्निमहसस्त्वगस्त्यस्यातितेजसः ।
[ B1 -सदृशस्; D6 -महतस् (for °सस्). ]

— $^{c}$) K1 B1.3-5 D2-6 दृष्टा; Dc1 सर्वे (for दृष्ट्वा). — $^{d}$) D4 ददृशुस्ते (for मुनेस्तस्य). K1 B1.3-5 Dc1 D2.3.5.6 ददृशुस्त( Dc1 दृष्ट्वा तस्त )पसो बलं. — $^{f}$) B3 मम; D2.3 T G1 सर्वं (for सर्वे). — After 26, D4 ins. an addl. colophon [ *Adhy. no.* 87 ].

27 Before 27, MSS. ins. ऋषय ऊचुः. — $^{a}$) K1 B1.3 D2.3 प्रीताः स्मस्; K2 प्रीतात्मा; D6 प्रीतास्मि (sic). Dc1 प्रीताः स्म तपसा ते वै. — $^{b}$) T G1 ननु (for न तु). T1 तपोवनं; G °धनं (for °व्ययम्). Dc1 तदिच्छामस्तपो वयं. — $^{c}$) K1 B1.3-5 D (except D1; Dn1 missing) T2 G2 तैर् (for स्वैर्). K1 स; K5 B1.3-5 D (except D1; Dn1 missing) T G स्म (for स्मो). — $^{d}$) K2 व्ययं (for वयम्). K1 कृतं यज्ञं शुचिव्रतः.

28 K1 om. 28–29. — $^{a}$) Ś1 K2 यज्ञा (sic); K5 B1.5 Dc1 D2-5 यज्ञं; B3.4 D6 T G1.2 यज्ञ- (for यज्ञान्). K2.4 Dc1 M2.3 दीक्षांस्; K5 B1.3-5 D2.4-6 दीक्षां. — Ś1 B1.3-5 Dc1 D2-6 om. (hapl.) $28^{cd}$. — $^{c}$) K4 च (for नो). G1 सुहुतैर्; G2 तोषितो; M सुकृतैर् (for स्व°). T G3 तयोः संघर्षितैर्यज्ञैर्. — $^{d}$) K4 G1 न्यायतो (for नान्यतो).

29 K1 om. 29 (cf. v. l. 28). — $^{b}$) K4 B1.3-5 D2-6 स्वकर्माभिरता व( D3 व्य )यं. — Ś1 G1 om. (hapl.) $29^{c}$–$30^{b}$. — $^{c}$) B1 T1 देवाश्; Dc1 विदाश्; D6 M1 वेदाश्; G2.3 देवांश् (for वेदांश्). K2-4 D1 ब्रह्मचर्यं च. — $^{d}$) T G2.3 न्यायेन (for न्यायतः).

30 Ś1 G1 om. $30^{ab}$ (cf. v. l. 29). — $^{a}$) K3 न्याय्यतोत्तर- (sic). T G2.3 न्यायेन रंजि( T1 रचि )ताः काले. — $^{b}$) Some MSS. निसृता. — K3 B3 Dc1 G2 om. (hapl.) $30^{cd}$. — $^{c}$) B1 धर्मतस्तैर्; M2.3 °निर्दृष्टैर्. K2.4 D1 विधिद्वारे; K5 च विविधैस् (for विधिद्वारैस्). T G1.3 दृष्टैश्च विधिवद्द्वारैस् (T1 °विधैर्द्वारैस्; G1 °धिव-द्वानैस्).

31 $^{a}$) Dc1 corrupt. Ś1 भवता; D3 °तं. Ś1 K3.5 D1 एवैषा; K1 B1.3-5 D2-6 दृष्टा तु (for एषा हि). K2.4 भवतः सम्यगास्वेषा (sic); M1 °तः सम्यगेहाभूद्.

एतामहिंसां यज्ञेषु ब्रूयास्त्वं सततं प्रभो ॥ ३१
प्रीतास्ततो भविष्यामो वयं द्विजवरोत्तम ।
विसर्जिताः समाप्तौ च सत्रादस्माद्व्रजामहे ॥ ३२
वैशंपायन उवाच ।
तथा कथयतामेव देवराजः पुरंदरः ।
ववर्ष सुमहातेजा दृष्ट्वा तस्य तपोबलम् ॥ ३३
असमाप्तौ च यज्ञस्य तस्यामितपराक्रमः ।
निकामवर्षी देवेन्द्रो बभूव जनमेजय ॥ ३४
प्रसादयामास च तमगस्त्यं त्रिदशेश्वरः ।
स्वयमभ्येत्य राजर्षे पुरस्कृत्य बृहस्पतिम् ॥ ३५
ततो यज्ञसमाप्तौ तान्विससर्ज महामुनीन् ।
अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ॥ ३६

इति श्रीमहाभारते आश्वमेधिकपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

# ९६

जनमेजय उवाच ।
कोऽसौ नकुलरूपेण शिरसा काञ्चनेन वै ।
प्राह मानुषवद्वाचमेतत्पृष्टो वदस्व मे ॥ १
वैशंपायन उवाच ।
एतत्पूर्वं न पृष्टोऽहं न चास्माभिः प्रभाषितम् ।
श्रूयतां नकुलो योऽसौ यथा वागस्य मानुषी ॥

---

— c) G1 स ताम् ( for एताम् ). K6 B1.3-5 Dc1 एकोयं ( B1.5 °पि ) विधियज्ञेषु. — d) K2.4 Dc1 T G विभो ( for प्रभो ).

32 a) K6 M तव ( for ततो ). K3 भविष्यामि (sic); B1 °म. — b) K2 चेयं; K6 यज्ञे; T2 वरं ( for वयं ). K1 B1.5 D2-6 वयं तु ( B1 च ) द्विजसत्तम ( D6 °माः ). — c) B5 partly damaged. B1 विवर्जिताः. K2.4 समाप्ते; G2 °साप्त्. D1 तु ( for च ). — M1 om. 32d-34a. — d) K2 व्रजाम्यहं; K6 T1 G1 M2-4 व्रजेम हि.

33 M1 om. 33 ( cf. v. l 32 ). MSS. om. the ref. — a) Ś1 K3 कामयताम् ( for कथ° ). K1 B1.3-5 Dc1 D2-6 तेषां; T1 G2 एवं ( for एव ). D1 तथा कथय मे देव. — b) K2 D1 देवदेवः; K3 °राज°. — c) K2 एवं वर्ष महातेजा ( sic ). — d) Dc1 तपोवने ( for °बलम् ). B1.5 तस्य तत्तपसो बलं.

34 M1 om. 34a ( cf. v. l 32 ). — a) Ś1 D1 T2 G2.3 आसमाप्तौ; K1 B1.3-5 D2-6 आसमाप्तेश्. K3.4 D1 तु ( for च ). — b) M1 यस्य ( for तस्य ). — c) K2 corrupt. B5 damaged. K1.5 B1.3.4 D ( except D1; Dn1 missing ) पर्जन्यो ( for देवेन्द्रो ).

35 T2 G1 om. 35ab. — a) K2.4 तदा; Dc1 पुनर् ( for च तम् ). — b) K2.4 त्रिदिवेश्वरं ( K4 °री ). — c) B3 अयम् ( for स्व° ). — d) K2 बृहस्पतिः; B5 महामतिं.

36 a) K2 वा; D1 ( also as in text ) G1 तु ( for तान् ). — After 36b, T G1 ins.:

195* विपिने तत्र नकुलो नकुलोऽन्तर्हितस्तदा ।

— c) K6 -प्रीतान्; M1 -प्रीता. — d) K2-4 Dc1 यथा विधिः.

Colophon om. in K1 B1.4.5 D3-6; missing in Dn1. — *Adhy. name :* Ś1 K3 अगस्त्ययज्ञसमाप्तिः; K6 नकुलोपाख्याने अगस्त्योपाख्यानं; B3 Dc1 D1 नकुलोपाख्यानं; T G1 अगस्त्ययज्ञविशेषः ( T2 °शेषकथनं ). — *Adhy. no.* ( figures, words or both ): Ś1 130; T1 M2.3 80; T2 G1.2 81; G3 92; M1.4 77; M4 ( *inf. lin.* ) 79.

## 96

☞ B2 is not collated for this adhy. D8 om. this adhy.

1 Dn1 missing up to 3 ( cf. v. l. 14. 93. 22 ). D1 om. 1. Dc1 संजय ( for जनमेजय ). — b) G3 ह ( *for* वै ). B3.4 शिरसा कांचनीकृतः. — c) G3 मानुषवाग् ( for °वद् ), K2.4 वाक्यम् ( for वाचम् ). — d) K2.4 तत्पृष्टस्त्वं ( for एतत्पृष्टो ). K6 ब्रवीहि ( for वदस्व ). D5.6 नः ( for मे ).

2 Dn1 missing ( cf. v. l. 1 ). — a) K3 च; D1

श्राद्धं संकल्पयामास जमदग्निः पुरा किल ।
होमधेनुस्तमागाच्च स्वयं चापि दुदोह ताम् ॥ ३
तत्क्षीरं स्थापयामास नवे भाण्डे दृढे शुचौ ।
तच्च क्रोधः स्वरूपेण पिठरं पर्यवर्तयत् ॥ ४
जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्याद्विप्रिये कृते ।
इति संचिन्त्य दुर्मेधा धर्षयामास तत्पयः ॥ ५
तमाज्ञाय मुनिः क्रोधं नैवास्य चुकुपे ततः ।
स तु क्रोधस्तमाहेदं प्राञ्जलिर्मूर्तिमान्स्थितः ॥ ६
जितोऽस्मीति भृगुश्रेष्ठ भृगवो ह्यतिरोषणाः ।
लोके मिथ्याप्रवादोऽयं यत्त्वयास्मि पराजितः ॥ ७
सोऽहं त्वयि स्थितो ह्यद्य क्षमावति महात्मनि ।
बिभेमि तपसः साधो प्रसादं कुरु मे विभो ॥ ८

जमदग्निरुवाच ।

साक्षाद्दृष्टोऽसि मे क्रोध गच्छ त्वं विगतज्वरः ।
न ममापकृतं तेऽद्य न मन्युर्विद्यते मम ॥ ९
यानुद्दिश्य तु संकल्पः पयसोऽस्य कृतो मया ।
पितरस्ते महाभागास्तेभ्यो बुध्यस्व गम्यताम् ॥ १०
इत्युक्तो जातसंत्रासः स तत्रान्तरधीयत ।

---

तु ( for न ). — b) K5 वा ( for च ). K5 सु- ( for प्र- ). — d) T G1 तथा. K1.3.5 B1.3–5 D2.4.5 वाक्त( K5 °क्चा )स्य; D6 वाक्कृय; G3 वाचास्य. D1 तादृशी ( for मानुषी ).

3 Dn1 missing ( cf. v. l. 1 ). — b) B4 ( marg. as in text ). 5 प्रतापवान् ( for पुरा किल ). — c) Ś1 corrupt. K5 तथागाद्वै; T G2.3 तमागच्छत्; G1 तदागाच्च ( for तमा° ). K3 होमधेनुं तथान्याश्च; Dc1 होमधेनुं समागाच्च. — d) K1.3–5 B1.3–5 D ( D3 om.; Dn1 missing ) एव ( for चापि ). Ś1 ताः; K3 गाः ( for ताम् ).

4 a) T G1 तं ( for तत् ). K1 B1.3–5 D2.4–6 पयः ( for क्षीरं ). — b) T G1 शुचौ तदा; G2 शुभे शुचौ ( for दृढे शुचौ ). K2.4 Dc1 D1 G3 नवभांडे दृढे शुभे ( D1 शुभे दृढे; G3 तथा शुचौ ). — c) K4 Dc1 तं च; B1.3–5 तस्य; D5.6 तत्र ( for तच्च ). Ś1 K1.4.5 B1.3–5 D ( D3 om. ) G3 क्रोधस्व- (sic) (Dc1 °स्य ); Cv क्रोधं स्व- ( for क्रोधः स्व- ). K2 तं क्रोधश्चररूपेण; T G1.2 M क्रोधो नकुलरूपेण. — d) Ś1 पिठिरं; K2 पिवरं; K3 निहितं; K4 D1 M4 पितरं ( for पिठरं ). K1 B1.3–5 D2.4–6 धर्मं आविशत्; K5 T G2 M पर्यधर्षयत् ( K5 °न् ); G1 °वर्षयत्; G3 °वेष्टयत् ( for °वर्तयत् ).

5 K2.4 Dc1 D1 transp. 5ab and 5cd. — a) K2 अपि; K3.5 T2 ऋषिं. — b) Ś1 K2–5 Dc1 D1 विषमे ( for विप्रिये ). — c) K2.4 Dc1 D1 इदं ( for इति ). K1 B1.3–5 Dn1 D2.4.5 धर्मः स; D6 धर्मान्स ( for दुर्मेधा ). — d) D1 तत्परः; T2 तत्वतः ( for तत्पयः ).

6 b) T G च ( for [ए]व ). G3 अस्मै ( for अस्य ). K3 यदा; D1 तपः ( for ततः ). K1 B1.3–5 Dn1 D2.4–6 नैवास्य स चुकोप ह; K5 न चास्य विदधे क्वचित्; M1 न चास्य प्रतिचुक्रुशे; M2–4 न चास्मै चुक्रुधे तदा ( M4 °तः ). — c) D1 क्रुद्धस् ( for क्रोधस् ). K1 B1.3–5 D ( except D1; D3 om. ) ततो राजन्; K4 समाज्ञाय; G3 समापेदे ( for तमाहेदं ). K3 स मुनिः क्रोधमाज्ञाय. — d) K1 B1.3–5 Dn1 D2.4–6 ब्राह्मणीं मूर्तिमास्थितः. — After 6, K1 B1.3–5 Dn1 D2.4–6 ins.:

196* जिते तस्मिन्भृगुश्रेष्ठमभ्यभाषदमर्षणः ।

7 a) D6 [ऽ]सि (sic) ( for ऽस्मि ). T1 ते ( for [इ]ति ). T2 G2 भृगुश्रेष्ठं. — b) K1 भवतो; K4 भृगतो ( for भृगवो ). K1 [ऽ]त्यति-; K4 ह्यनु- ( for ह्यति- ). Ś1 D6 -रोषिणाः; K2 -रोगिणः; K3 -रोषितः. — c) K5 [अ]पवादो; Dc1 ह्यवादो. B1 च ( for ऽयं ). — d) Ś1 K2–4 Dc1 D1 [अ]हं ( for [अ]स्मि ). K1 B1.4 Dn1 D2.4–6 विनिर्जितः; B5 विवर्जितः ( for पराजितः ).

8 a) G2.3 M1.4 स्थिते; M2.3 जिते ( for स्थितो ). K1.5 B1.3–5 Dn1 D2.4–6 वशे स्थितोहं त्वय्यद्य. — c) K2 G3 तपसा. — d) K1.5 B1.4.5 Dn1 D2.4–6 S ( except M2.3 ) प्रभो ( for विभो ).

9 a) G3 सम्यग् ( for साक्षाद् ). — c) K2.4 तत्त्वया; T G1.2 न माम् ( for न मम ). K2 -हृतं ( for -कृतं ). K1 D4–6 न त्वयापहृतं मेद्य; K3 न समाद्याकृतं तेद्य (sic); K5 B1.3–5 Dc1 Dn1 D1.2 न त्वयापकृतं मेद्य. — d) K2 M3 मया; G3 त्वयि ( for मम ). K1.5 B1.3–5 Dn1 D2.4–6 न च मे मन्युरस्ति वै.

10 a) Ś1 ते (sic); K3 G1 [इ]ति; K4 Dc1 D1 [अ]भि- ( for तु ). K1.5 B1.3–5 Dn1 D2.4–6 यान्समुद्दिश्य संकल्पः. — b) T G M2.3 [ऽ]द्य ( for ऽस्य ). — d) Ś1 ( before corr. ) K3 बिभ्यस्व ( for बुध्यस्व ).

पितॄणामभिषङ्गात्तु नकुलत्वमुपागतः ॥ ११
स तान्प्रसादयामास शापस्यान्तो भवेदिति ।
तैश्चाप्युक्तो यदा धर्मं क्षेप्स्यसे मोक्ष्यसे तदा ॥ १२
तैश्चोक्तो यज्ञियान्देशान्धर्मारण्यानि चैव ह ।
जुगुप्सन्परिधावन्स यज्ञं तं समुपासदत् ॥ १३

धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः ।
मुक्तः शापात्ततः क्रोधो धर्मो ह्यासीद्युधिष्ठिरः ॥ १४
एवमेतत्तदा वृत्तं तस्य यज्ञे महात्मनः ।
पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा ॥ १५

इति श्रीमहाभारते आश्वमेधिकपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

## आश्वमेधिकपर्व समाप्तम् ।

---

11 $^{a}$) $D_{5.6}$ तेन (for जात-). $K_2$ -मात्रः स (for -संत्रासः). — $^{b}$) $K_{1.3.5}$ $B_{1.3-5}$ $Dn_1$ $D_{2.4-6}$ तत्रैव (for स तत्र). — $^{c}$) $K_{2.4}$ स तस्याम् (for पितॄणाम्). $K_3$ $T_1$ अभिशापात् (for °षङ्गात्). $K_1$ $B_{1.5}$ $Dn_1$ $D_{2.4-6}$ च (for तु). — $^{d}$) $M_1$ उपागमः (sic).

12 $^{a}$) $G_3$ च (for तान्). $K_2$ $G_1$ स तान्प्रदा( $G_1$ °ता )पयामास. — After $12^{b}$, $K_{3.4}$ ins.:

197* तेनाप्युक्तो महाराज धर्मराजस्य वै तदा ।
अश्वमेधे तदागन्ता शापान्मुक्तो भविष्यति ।

— $K_{2.4}$ om. $12^{cd}$. — $^{c}$) $K_1$ $B_{1.5}$ $Dn_1$ $D_{2.4-6}$ क्षिपन्धर्मं ( $D_6$ °र्मे ); $Dc_1$ $D_1$ यदा धर्मस्; T $G_{2.3}$ यथा धर्मं. — $^{d}$) Ś$_1$ क्षेप्स्यसि; $G_1$ लप्स्यसे (for क्षे°). Ś$_1$ $K_3$ $G_3$ ततः (for तदा). $Dc_1$ $D_1$ त्वाक्षेपं प्राप्स्यते त्वया; $Dn_1$ $D_{2.4-6}$ शापस्यांतमवाप्स्यसि ( $D_{5.6}$ °ति ). — After 12, $Dc_1$ $D_1$ read $14^{cd}$ for the first time.

13 $^{a}$) $K_{3-5}$ $B_3$ इति (for तैश्च). $K_1$ $Dn_1$ $D_2$ [उ]क्तं; $K_3$ $D_{4-6}$ [उ]क्ते (for [उ]क्तो). $K_2$ S इत्युक्तो याज्ञियान्देशान्( $K_2$ °न्सर्वान् ). — $^{b}$) $K_{2.4}$ $G_3$ हि (for ह). Ś$_1$ $K_{1.3}$ $B_{1.3-5}$ $Dn_1$ $D_{2.4-6}$ धर्मारण्यं तथैव च. — $^{c}$) Ś$_1$ $K_1$ $B_{1.3-5}$ $Dn_1$ $D_{2.4-6}$ $G_3$ जुगुप्समानो धावन्स; $K_{2.4}$ धावमानो महाराज. — $^{d}$) $K_{1.5}$ $B_{1.3-5}$ $D_{2.4-6}$ तं यज्ञं (by transp.). $K_1$ समुपासयन्; $Dc_1$ $D_1$ $G_2$ °गमत्; $T_1$ °दयत्; $M_1$ °द्रवत् (for °सदत्). $K_{2.4}$ देशं तं ( $K_4$ तं देशं ) समुपागमत्.

14 $^{a}$) $K_{2.4}$ ततः प्राप्य (for अथाक्षिप्य). — $^{b}$) $K_1$ $B_{3.4}$ शक्तु- (for सक्तु-). $B_{1.5}$ ते समः; $D_{5.6}$ तेन ह (for तेन सः). $K_{2.4}$ सक्तुप्रस्थं निवेद्य सः. — $Dc_1$ $D_1$ read $14^{cd}$ for the first time after 12. — $^{c}$) $K_{2.4}$ $B_1$ $Dc_1$ $D_1$ (last two both times) S (except $G_3$) मुक्तशापस् (for मुक्तः शापात्). $Dc_1$ $D_1$ (both first time) तदा (for ततः). — $^{d}$) $K_{2.4}$ यथेष्टमगमत्तदा; $Dc_1$ $D_1$ (both first time) भविष्यति न संशयः.

15 $^{a}$) Ś$_1$ K (except $K_1$) $Dc_1$ $D_1$ T $G_{1.3}$ यथा (for तदा). $Dn_1$ वृत्ते. — $^{b}$) $K_1$ $B_{1.3-5}$ $D_{2.4-6}$ यज्ञे ( $D_{4.6}$ °ज्ञं ) तस्य (by transp.). — $K_{2.4}$ om. $15^{cd}$. — $^{c}$) Ś$_1$ $K_{3.5}$ एव (for चापि). — $^{d}$) $K_3$ [अं]तर्गतस्. $K_5$ [ऽ]भवत्; $T_1$ तथा (for तदा). — $Dc_1$ $D_{1.4}$ (marg.) ins. after 15: $K_{2.4}$ after $15^{b}$:

198* स चापि भगवान्कृष्णः शङ्खचक्रगदाधरः ।
यज्ञियो यज्ञनाथश्च पुण्डरीको जनार्दनः ।
वासुदेवो हरिर्विष्णुरनन्तो भक्तवत्सलः ।
आ समाप्तेर्जगन्नाथो यज्ञं रक्षितवान्हरिः ।
रक्षित्वा स महाबाहुर्जगाम द्वारकां पुरीम् । [5]

[ $K_{2.4}$ om. line 2. $D_4$ om. lines 2–3. ]

— $K_{2.4}$ cont.:

199* एतत्पुण्यं महाराज शृण्वतां भुक्तिमुक्तिदम् ।
श्रोता च श्रावको यश्च स याति परमां गतिम् ।

Colophon. — *Adhy. name :* Ś$_1$ $K_{2.3.5}$ $B_4$ $Dc_1$

D1.4 T G1 नकुलोपाख्यानं. —*Adhy. no.* (figures, words or both): Dn1 G3 93; T1 83; T2 G1 2 82; M1.4 78; M2.3 81; M4 (*inf. lin.*) 98. —After the above, T G ins. a passage given in App. I (No. 4).

—After the last colophon, Ś1 concludes with:

अस्यानु आश्रमवासिकं भविष्यति । तस्यायमाद्यः श्लोकः ।

जनमे ***** ।

** राज्यं **** पाण्डवा मे पितामहाः ।
कथमासन्महाभागे धृतराष्ट्रे महात्मनि ।

अस्मिन्प ... त्तान्ताः । व्यासवाक्यं । संवर्तमरुत्तीयं । अनुगीता । वासुदेवगमनं । उत्तङ्कोपाख्यानं । द्वारिकाप्रवेशः । युद्धवर्णनं । पाण्डवप्रयाणं । निध्युत्खननं । वासुदेवागमनं । परीक्षिज्जन्म । स्त्रीप्रलापः । रत्नानयनं । अश्वोत्सर्गः । तदनुसरणं । मयूरपुरगमनं । अर्जुनव्यामोहः । उलूपीवाक्यं । अश्वनिवर्तनं । यज्ञसमृद्धिः । यूपोच्छ्रायः । दक्षिणादानं । यज्ञसमाप्तिः । अगस्त्यवर्णनं । नकुलोपाख्यानं चेति ॥

पर्वाश्वमेधिकं प्रोक्तं व्यासेनामिततेजसा ।
चतुर्दशं तु पर्वैतद्व्याख्यातं ब्रह्मवादिना ।
अत्राध्यायशतं त्रिंशं त्रयोऽध्यायाश्च संमितम् ।
त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च ।
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥

शुभमस्तु ॥

—After the last colophon, K1 concludes with:
आश्वमेधिकपर्व समाप्तं । संख्या ३५००.

—After the last colophon, K2 concludes with:

आश्वमेधिकपर्व समाप्तं ।

अतः परं व्यासाश्रमवासिकं पर्व भविष्यति । यस्यायमाद्यः श्लोकः ।

जनमेजय उवाच ।

प्राप्य राज्यं नरव्याघ्राः पाण्डवा मे पितामहाः ।
कथमासन्महाभाग धृतराष्ट्रे महात्मनि ॥

अस्मिन्पर्वणि वृत्तान्तानि । व्यासवाक्यं । संवर्तमारुतीयं । अनुगीता । वासुदेवगमनं । ब्राह्मणगीता । गुरुशिष्यसंवादः । उत्तङ्कोपाख्यानं । सुवर्णनयनं । अश्वपरीक्षा । हयरक्षणं । बभ्रुवाहनविजयः । अश्वमेधयज्ञः । नकुलोपाख्यानं । आश्वमेधिकं पर्व चतुर्दशमं प्रोक्तं ॥

अत्राध्यायशतं त्रिंशं त्रयोऽध्यायाश्च शब्दिताः ।
त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च ॥
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिभिः ।
त्रीण्याहुरतिदानानि गावः पृथिवी सरस्वती ॥

संवत् १७३६ वर्षे शाके १६०१ प्रवर्तमाने उत्तरायणगते श्रीसूर्ये वसंतऋतौ मासोत्तमवैसाषमासे कृष्णपक्षे १३ त्रयोदशीतिथौ सोमवासरे लिखितमिदं ॥ शुभं भवतु ॥ प्रत्यानुसारेण लिखितं दोषो न देयः ॥ श्री ॥

—After the last colophon, K3 concludes with:

अस्यानु आश्रमवासिकं पर्व । यस्यायं प्रतिसंधिः ॥

जनमेजय उवाच ।

प्राप्य राज्यं नरव्याघ्राः पाण्डवा मे पितामहाः ।
कथमासन्महाभागे धृतराष्ट्रे महात्मनि ॥

अस्मिन्पर्वण्यमी वृत्तान्ताः । व्यासवाक्यं । संवर्तमरुत्तीयं । अनुगीता । वासुदेवागमनं । उत्तङ्कोपाख्यानं । द्वारकाप्रवेशः । युद्धवर्णनं । पाण्डवप्रयाणं । निध्युत्खननं । वासुदेवागमनं । परिक्षिज्जन्म । स्त्रीप्रलापः । रत्ननयनं । अश्वोत्सर्गः । मणिपूरगमनं । अर्जुनव्यामोहः । उलूपीवाक्यं । अश्वनिवर्तनं । यज्ञसमृद्धिः । यूपोच्छ्रायः । दक्षिणादानं । यज्ञसमाप्तिः । उंछवृत्त्युपाख्यानं । अगस्त्ययज्ञवर्णनं । नकुलोपाख्यानं ॥

इत्याश्वमेधिकं पर्व प्रोक्तमेतन्महाद्भुतम् ।
अत्राध्यायशतं त्रिंशं त्रयोऽध्यायाश्च संमताः ॥

—After the last colophon, K4 concludes with:

आश्वमेधिकपर्व समाप्तं ॥

अतः परं व्यासाश्रमवासिकं पर्व भविष्यति । तस्याद्यः श्लोकः ।

जनमेजय उवाच ।

प्राप्य राज्यं नरव्याघ्राः पाण्डवा मे पितामहाः ।
कथमासन्महाभाग धृतराष्ट्रे महात्मनि ॥

अस्मिन्पर्वणि वृत्तान्तानि । व्यासवाक्यं । संवर्तनरात्रीयं । अनुगीता । वासुदेवगमनं । ब्राह्मणगीता । गुरुशिष्यसंवादः । उत्तङ्कोपाख्यानं । द्वारकाप्रवेशः । पाण्डवप्रयाणं । निधिलाभः । परिक्षिज्जन्म । सुवर्णानयनं । अश्वपरीक्षा । हयरक्षणं । बभ्रुवाहनविजयः । अश्वमेधयज्ञः । नकुलोपाख्यानमिति । इति आश्वमेधिकं चतुर्दशमं प्रोक्तं ।

अत्राध्यायशतं त्रिंशत्त्रयोऽध्यायाश्च शब्दिताः ।
त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च ।
विंशतिश्च तथा प्रोक्ताः संख्यातास्तत्त्वदर्शिभिः ॥

रामाय नमः ॥

— After the last colophon, K5 concludes with :

संपूर्णमाश्वमेधिकं पर्व ॥

श्रीमद्रामचन्द्राय नमः । करकृतमपराधं क्षन्तु .... सन्तः । अतः परमाश्रमवासपर्व । तस्यायमाद्यः श्लोकः ।

जनमेजय उवाच ।

प्राप्य राज्यं महात्मानः पाण्डवा मे पितामहाः ।
कथमासन्महाराजे धृतराष्ट्रे महात्मनि ॥

— After the last colophon, B1 concludes with :

श्रीः ॥ श्रीकृष्णाय नमस्तुभ्यं महाकालस्वरूपिणे । श्रीहरिः ।

— After the last colophon, B3. 4 conclude with :

आश्वमेधिकं पर्व ( B4 om. पर्व ) समाप्तं ॥

— After the last colophon, B5 concludes with :

समाप्तं चेदमाश्वमेधिकं पर्व ॥

— After the last colophon, D1 concludes with :

समाप्तमाश्वमेधिकं पर्व ॥

संवत् १७९५ वर्षे कार्तिकशुक्लपक्षे १५ पूर्णमास्यां तिथौ बुधवासरे लिखितं पुस्तकं ।

— After the last colophon, D2 concludes with :

आश्वमेधिकपर्वं समाप्तं ।

— After 14. 95. 15, D3 concludes with :

आश्वमेधिकपर्वं समाप्तं ।

— After the last colophon, D4 concludes with :

श्रीमदाश्वमेधिकपर्वं समाप्तं ॥

रेणुका जयति । अस्यानु आश्रमवासिकं पर्व भविष्यति । तस्यायमाद्यः श्लोकः ।

जनमेजय उवाच ।

प्राप्य राज्यं महात्मानः पाण्डवा मे पितामहाः ।
कथमासन्महाराज धृतराष्ट्रे महात्मनि ॥
शाके ग्रहेष्टविशिखेन्दुचयेन युक्ते ( १५८९ )
संवत्सरेऽतिशुभदे प्लवगाभिधाख्ये ।
श्रीश्रावणे भृगुदिनेऽपि च शुक्लपक्षे
भूत्वा समाप्तमभवच्छुभमाश्वमेधम् ॥
इत्याश्वमेधिकं पर्व प्रोक्तमेतन्महाद्भुतम् ।
अत्राध्यायाशितिः प्रोक्ता अष्टौ चात्र प्रकीर्तिताः ॥
त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च ।
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥

भवानिर्जयति । रेणुका जयति । संवत् १७२६ शाके १५८९ प्लवंगसंवत्सरे श्रावणशु° १४ श्रीमत्कविकुलोत्पन्नेन कविना विश्वकेनाश्वमेधिकं पर्व लिखित्वा रेणुकाचरणेषु समर्पितं तेन श्रीभगवती प्रीयतां । संख्यावधी २००००० ।

— After the last colophon, D5 concludes with :

आश्वमेधिकं पर्व समाप्तं ॥

संवत् १८३३ चैत्रसुदि २ गुरौ अश्विनीनक्षत्रे ऐन्द्रयोगे तुलालग्ने रात्रिसमये दीपसमीपे अमृतसरसि देशे स्वगृहे श्रीपरमकृपालुपूज्यपादारविंदश्रीकृष्णकौरात्मजदेवीसहायद्विजेन पुस्तकमिदमाश्विनेऽधिके लिखितं ॥ शुभं ॥

संवद्वह्न्यग्निसिद्धौ ( १८३३ ) मधुशुधि गुरुवारे तिथौ धातुरश्वे
ऐन्द्रे योगे तुलायाममृतसरसि नक्तं गृहे चोपदीपम् ।
पुस्त(कं) स्वार्थं परार्थं मधुरिपुकृपया सर्वशक्तिप्रदाय्या
देवीसाहायकेन प्रलिखितमखिलं कृष्णकौरात्मजेन ॥

॥ श्रीरामायार्पितमस्तु ॥

— After the last colophon, D6 concludes with :

आश्वमेधिकं पर्व समाप्तं ।

शुभमस्तु । श्रीरामाय नमः । गोविन्दाय नमः । माधवाय नमः ।

— After the colophon of App. I ( No. 4 ), T1 concludes with :

श्रीलक्ष्मीनृसिंहार्पणमस्तु । हरिः ॐ ।

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।
अबद्धं वा सुबद्धं वा मम दोषो न विद्यते ॥

सौम्यनामसंवत्सर आश्विजशुद्धपंचमी बुधवारं नाटिकि ( day ) आश्वमेधपर्वं संपूर्ण ।

अभ्रश्यामः पिङ्गजटाबद्धकलापः
प्रांशुर्दण्डी कृष्णमृगत्वक्परिधानः ।
साक्षाल्लोकान्पावयमानः कविमुख्यः
पाराशर्यः पर्वसु रूपं विवृणोतु ॥

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । रामार्पणमस्तु ।

— After the colophon of App. I ( No. 4 ), T2 concludes with :

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । श्रीकृष्णाय नमः ।

— After the colophon of App. I ( No. 4 ), G1 concludes with :

श्रीवेदव्यासाय नमः । श्रीगोपालकृष्णाय नमः । आश्वमेधिकं पर्व समाप्तं । हरि ॐ ।

— After the colophon of App. I ( No. 4 ), G2 concludes with :

श्रीकृष्णाय नमः । आश्वमेधिकं समाप्तं । हरिः ॐ । श्री-

गुरुभ्यो नमः । ॐ शुभमस्तु ॐ ।

बिन्दुदुर्लिपिविहस्तवीथिका-
पङ्क्तिभेदपददूषणम् ।
हस्तवेगजमबुद्धिपूर्वकं
क्षन्तुमर्हथ समीक्ष्य सज्जनाः ।

— After the colophon of App. I ( No. 4 ), G3 concludes with :

श्रीअश्वमेधपर्वसमाप्तिर्जाता । श्रीवासुदेवपरब्रह्मणे नमः ।

— After the last colophon, M2 concludes with :

आश्वमेधिकं समाप्तं ।

तस्मान्न विस्मयः कार्यो धर्मेषु पुरुषैः शुभैः ।
एवं राजा महाबुद्धिरिष्ट्वा भूयोऽश्वमेधकैः ।
पञ्चभिः प्रददौ वित्तं धौम्याय बहुकोटिकम् ।
तदादाय मुनिर्दत्त्वा तपसे वनमाश्रितः ।
गतेष्वन्येषु मुनिषु वृष्णयो गन्तुमुद्यताः ।
एतान्संयुज्य पार्थास्ते वासुदेवमुपस्थिताः ।
तदनुग्रहसंभूतमादाय च परिक्षितम् ।
तानब्रवीद्वासुदेवः प्रीतात्मा धर्मतो हितम् ।
सत्त्वधर्मरता विप्रान्पालयध्वं दमान्विताः ।
तेषु तुष्टेषु तुष्टाः स्युः पितरो दैवतानि च ।
रतः प्रीतस्तेष्वहं च गोषु चैतान्नमस्कुरु ।
इत्युक्त्वा गन्तुमनसमब्रवीत्स युधिष्ठिरः ।
ये यजन्ति कृपार्थास्त्वा विप्रादिप्रतिमादिषु ।
स्मरन्ति मानवा नित्यं जपन्ति प्रणयन्ति च ।
त्वज्ज्ञानदेत्युः पापौघगिरिवज्रैरिवाचलः ।
दर्शनात्सूर्य ते पुण्यं कारणाह्लादकारकात् ।
ज्ञातिक्षयमहादुःखं दर्शनात्तव शाम्यति ।
शिशोरस्याभिमन्योश्च तद्गतिर्नो भवाच्युत ।
इत्युक्तः पूजितः पार्थैः परिष्वक्तोऽभिवादितैः ।
दीर्घं चानुगतः स्नेहादनुनीय ययौ हरिः ।
बालाः पित्रोर्वियोगे वा सदारसुतबान्धवाः ।
पार्थाः कथंचित्स्वपुरं वीक्षिता वीक्ष्य चाययुः ।
कृष्णोऽपि पूजिते मार्गे वीक्षितो भुवि यद्गतैः ।
स्वजनेनार्चितो वेश्म प्रविश्य प्रीतिमानभूत् ।
पार्थश्च कृष्णसंदेशं पालयानो विचिन्त्य तम् ।
पितरं मातृभिः सार्धं पूजयानोऽवसत्सुखम् ।
इत्याश्वमेधिके एकाशीतितमोऽध्यायः ।
हरिः । श्रीगणपतये नमः । अविघ्नमस्तु ।

— After the last colophon, M3 concludes with :

श्रीगुरुभ्यो नमः । श्रीगुरवे नमः । कोल्लं ९९५ मासं तेति ( date ) एलुतिय ( written ) पुस्तकमिदं समाप्तम् । श्रीगुरुभ्यो नमः । शुभमस्तु । हरिः । श्रीगणपतये नमः । अविघ्नमस्तु ।

— After the last colophon, M4 concludes with :

आश्वमेधिकं समाप्तं ।

कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ।

॥ शुभमस्तु ॥ हरिः ॐ

— After the above, M2-4 ins. a passage given in App. I ( No. 4 ).

# APPENDIX I

This Appendix comprises a series of additional passages found in different MSS., which were either too long to be included in the foregoing footnotes to the constituted text, or were not sufficiently connected with the main thread of the narration, or were otherwise deemed not important enough for being included in the main critical apparatus.

The variants cited below these Appendix passages are of the same order as those cited below the additional ( star ) passages in the footnotes to the constituted text, so that, in both of them, corrupt readings, discrepant readings of single MSS and minor variants are generally ignored, and obvious scribal errors silently corrected. Furthermore, the variants of the short prose formulaic references ( such as संजय उवाच ) have been uniformly ignored here

## 1

After 14. 14. 17, S ins.:

यथा मनुर्महाराज रामो दाशरथिर्यथा ।
तथा भरतसिंहोऽपि पालयामास मेदिनीम् ।
नाधर्म्यमभवत्तत्र सर्वो धर्मरुचिर्जनः ।
बभूव नरशार्दूल यथा कृतयुगं युगम् ।
कलिमासन्नमाविष्टं निवार्य नृपनन्दनः । [ 5 ]
भ्रातृभिः सहितो धीमान्बभौ धर्मबलोद्धृतः ।
ववर्ष भगवान्देवः काले देशे यथेप्सितम् ।
निरामयं जगद्भूत्क्षुत्पिपासे न किंचन ।
आधिर्नास्ति मनुष्याणां व्यसने नाभवन्मतिः ।
ब्राह्मणप्रमुखा वर्णास्ते स्वधर्मोत्तराः शिवाः । [ 10 ]
धर्मः सत्यप्रधानश्च सत्यं सद्विषयान्वितम् ।
धर्मासनस्थः सद्भिः स स्त्रीबालातुरवृद्धकान् ।
वर्णक्रमात्पूर्वकृताञ्शाकालो रक्षणोद्यतः ।
सुवृत्तिवृत्तिदानाद्यैर्यज्ञार्थैर्दापितैरपि ।
आमुष्मिकं भयं नास्ति ऐहिकं कृतमेव तु । [ 15 ]
स्वर्गलोकोपमो लोकस्तदा तस्मिन्प्रशासति ।
बभूव सुखमेवात्र तद्विशिष्टतरं परम् ।
नार्यः पतिव्रताः सर्वा रूपवत्यः स्वलंकृताः ।
यथोक्तवृत्ताः स्वगुणैर्बभूवुः प्रीतिहेतवः ।
पुमांसः पुण्यशीलाढ्याः स्वं स्वं धर्ममनुव्रताः । [ 20 ]
सुखिनः सूक्ष्ममप्येनो नाकुर्वन्त कदाचन ।
सर्वे नराश्च नार्यश्च सततं प्रियवादिनः ।
अजिह्ममनसः शुक्ला बभूवुः श्रमवर्जिताः ।
भूषिताः कुण्डलैर्हारैः कटकैः कटिसूत्रकैः ।
सुवाससः सुगन्धाढ्याः प्रायशः पृथिवीतले । [ 25 ]
सर्वे ब्रह्मविदः शान्ताः सर्वत्र परिनिष्ठिताः ।
वलीपलितहीनास्तु सुखिनो दीर्घदर्शिनः ।
इच्छा न जायतेऽन्यत्र वर्णेषु च न संकरः ।
मनुष्याणां महाराज मर्यादासु व्यवस्थिताः ।
तस्मिञ्शासति राजेन्द्र मृगव्यालसरीसृपाः । [ 30 ]
अन्योन्यमपि चान्येषु न बाधन्ते वयांसि च ।
गावश्च गुणभूयिष्ठाः सुवालधिमुखोदराः ।
अपीडिताः कर्षणाद्यैर्हृतव्याधितवत्सराः ।
अवध्यकाला मनुजाः पुरुषार्थेषु च क्रमात् ।
विषयेष्वनिषिद्धेषु वेदशास्त्रेषु चोद्यताः । [ 35 ]
सुवृत्ता वृषभाः पुष्टाः भारसाहाः सुखोदयाः ।
अतीव मधुरः शब्दः स्पर्शश्चातिसुखो रसः ।

---

1

(L. 1) $G_1$ महाराजो. — (L. 2) $G_2$ भारत- (for भ°). — (L. 3) $G_3$ [अ]धमश्च; M [अ]धर्मम्. $M_4$ अवहत् (for अभवत्). T $G_3$ धर्मपरो (for °रुचिर्). — (L 4) M नृप- (for नर-). $G_{1.3}$ यथा कृतयुगे तथा (for the post. half). — (L. 5) Madras ed. निवास्य (for °र्य). $G_1$ नृपनंदन; $G_3$ कुरुनंदनः. — (L. 6) M धर्माद् (for धीमान्). $T_2$ यथा (for बभौ). $M_{1-3}$ -बलोद्धतः (for °द्धृतः). — (L. 7) $M_{1-3}$ काले (for देशे). T $G_3$ यथाविधि (for यथेप्सितम्). — (L. 9) $G_1$ व्याधिर् (for आधिर्). $M_{1.2}$ मनः (for मतिः). — M om. lines 10–14. — (L. 10) $G_{1.3}$ शुभाः (for शिवाः). — (L. 11) $G_3$ सद्विनयान्वितं (for सद्विष°). — (L. 12) $G_3$ धर्मासनस्थैः सद्भिस्तु (for the prior half). $G_3$ -वृद्धकाः (for °कान्). — (L. 13) $G_1$ वर्णक्रमान्; Madras ed. वर्णाश्रमान्. $G_3$ वर्णाः क्रमात्पूर्वकृता (for the prior half). $G_1$ साकल्यान्; Madras ed. सकलान् (for नाकालो). $G_3$ आशास्या रक्षणोद्यताः (for the post. half). — (L. 14) G अवृत्ति- (for सु°). $G_1$ यज्ञाद्यैर् (for °थैर्). $T_2$ द्राविलैर्; $G_1$ व्याधि°; $G_3$ याचि° (for दापि°). — (L. 15) $T_2$ M आमुत्रिकं (for °ष्मिकं). $G_3$ M कृत (for कृतम्). — (L. 16) T स्वर्गोपमस्तदा लोकस् (for the prior half). $G_3$ $M_{1-3}$ तथा (for तदा). — (L. 17) $G_1$ एवाग्रं; $G_2$ एकाग्रं (for एवात्र). $G_2$ विशिष्टकरं (for °तरं). — (L. 19) $G_1$ -वित्ताः (for -वृत्ताः). $G_1$ पति- (for प्रीति-). — (L. 21) $G_3$ सुमुखाः (for सुखिनः). $G_1$ कुर्वंति; $G_3$ [अ]कुर्वंत (for °र्वन्त). $M_{1.2}$ कथंचन (for कदा°). — (L. 22) $M_{1.2}$ सततं प्रीतिहेतवः (for the post. half). — (L. 24) $T_1$ partly damaged. — (L. 26) $G_{1.2}$ विप्राः; M संतः (for शान्ताः). — (L. 27) $T_1$ $G_{1.3}$ -जीविनः (for -दर्शिनः). — (L. 28) $G_2$ तत्र (for ऽन्यत्र). $M_{1-3}$ न च (by transp.). — (L. 29) $M_1$ मानुषाणां. $T_2$ $M_3$ मर्यादा सुव्यवस्थिता; $M_{1.2}$ °दासु स्थितास्थिताः; $M_4$ °दा सुस्थितिस्थिता (for the post. half). — (L. 30) $G_1$ $M_{3.4}$ राजेंद्रे. $M_4$ मृगव्यालाः. $T_1$ -सृपा. — (L. 31) T नृमा($T_2$ न मा)नुषान्; $G_1$ कदाचन; $G_2$ स जंतवः; $G_3$ स मानवाः (for वयांसि च). — $G_2$ om. line 32. — (L. 32) $G_1$ गावः सक्षीरभूयिष्ठाः; M गावः पयः प्र° (for the prior half). $T_1$ सुवालाः सुसुखोदराः; $T_2$ °लाधीमुखादराः; $G_1$ °लाः सुमुखोदराः; $M_3$ °लधिपयोधराः (for the post. half). — M om. lines 33–35. — (L. 33) $G_{1.3}$ कर्षकाद्यैर् (for °णाद्यैर्). $T_2$ G -वत्सकाः (for -वत्सराः). — (L. 34) Madras अवंध्य- (for अवध्य-). — (L. 35) $G_2$ विविधेषु (for विषयेषु).

रूपं दृष्टिक्षमं रम्यं मनोज्ञं गन्धमुद्भमौ ।
धर्मार्थकामसंयुक्तं मोक्षाभ्युदयसाधनम् ।
प्रह्लादजननं पुण्यं संबभूवाथ मानसम् । [ 40 ]
स्थावरा बहुपुष्पाढ्याः फलच्छायावहास्तथा ।
सुस्पर्शा विषहीनाश्च सुपत्रास्त्वक्प्ररोहिणः ।
मनोनुकूलाः सर्वेषां चेष्टा भूत्वापवर्जिताः ।
तथाविधोऽपि राजर्षिस्तद्वृत्तमभवद्भुवि ।
सर्वलक्षणसंपन्नाः पाण्डवा धर्मचारिणः । [ 45 ]
ज्येष्ठानुवर्तिनः सर्वे बभूवुः प्रियदर्शनाः ।
सिंहोरस्का जितक्रोधास्तेजोबलसमन्विताः ।
आजानुबाहवः सर्वे दानशीला जितेन्द्रियाः ।
तेषु शासत्सु पृथिवीमृतवः स्वगुणैर्वसुः ।
सुखोदयाय वर्तन्ते ग्रहास्तारागणैः सह । [ 50 ]
मही सस्यप्रबहुला सर्वरत्नगुणोदया ।
कामधुग्धेनुवद्भोगान्फलति स्म सहस्रधा ।
मन्वादिभिः कृताः पूर्वं मर्यादा मानवेषु याः ।
अनतिक्रम्य ताः सर्वाः कुलेषु समयानि च ।
अन्वशासन्त ते नित्यं धर्मपुत्रप्रियंकराः । [ 55 ]
महाकुलानि धर्मिष्ठा वर्धयन्तो विशेषतः ।
मनुप्रणीतया वृत्त्या तेऽन्वशासन्वसुंधराम् ।
राजवृत्तिर्हि सा शश्वद्धर्मिष्ठाभून्महीतले ।
प्रायो लोकमतिस्तात राजवृत्तानुगामिनी ।
एवं भारतवर्षं स्वं राजा स्वर्गं सुरेन्द्रवत् । [ 60 ]
शशास विष्णुना सार्धं गुप्तो गाण्डीवधन्वना ।

Colophon.

## 2

After 14. 24. 20, $K_2$ ins. :

यावद्द्रव्यगुणस्तावत्प्रदीपः संप्रकाशयेत् ।
क्षीणे द्रव्यगुणे ज्योतिरन्तर्धानाय गच्छति ।
व्यक्तः सत्त्वगुणे ह्येष पुरुषो व्यक्तिरीशते ।
एतद्विप्र विजानीष्व हन्त भूयो ब्रवीमि ते ।
सहस्रेणापि दुर्मेधा बुद्धिमान्सुखमेधते । [ 5 ]
एवं धर्मस्य विज्ञेयं संसाधनमुपायतः ।
उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते ।
यथाध्वानमपाथेयः प्रपन्नो मानवः क्वचित् ।
क्लेशेन याति महता विनश्यत्यन्तरापि वा ।
तथा कर्मसु विज्ञेयं फलं भवति मानव । [ 10 ]
पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनः ।
यथा च दीर्घमध्वानं पद्भ्यामेव प्रपद्यते ।
अदृष्टपूर्वं सहसा तत्त्वदर्शनवर्जितः ।
प्राप्नुवन्तो यथाध्वानं रथेनेहाशुगामिना ।
यायादश्वप्रयुक्तेन तथा बुद्धिमतां गतिः । [ 15 ]
उच्चपर्वतमारुह्य नान्ववेक्षेत भूगतम् ।
रथेन रथिनं पश्येच्चैतन्येन च चेतनम् ।
यावद्रथपथस्तावद्रथे समुपगच्छति ।
क्षीणे रथपथे प्राज्ञो रथमुत्सृज्य गच्छति ।
एवं गच्छति मेधावी तत्त्वयोगविधानवित् । [ 20 ]
समाज्ञाय महाबुद्धेरुत्तरादुत्तरोत्तरम् ।
यथा महार्णवं घोरमुप्लवः संप्रगाहते ।
बाहुभ्यामेव संमोहाद्वधं गच्छत्यसंशयम् ।

— (L. 36) $T_1$ सुवालाः सु-; $T_2$ $G_3$ सुस्वभावाः; $G_1$ रसनाभाः; $G_2$ हरिभावाः (for भारसाहाः). — (L. 37) $T_1$ स्पर्शश्चा* सुखं रसं; $T_2$ °श्चापि सुखं रसः; $G_{1,3}$ °श्चातिसुखं समाः ($G_3$ रसः); $G_2$ °श्चातिसुखं सरं (for the post. half). — (L. 38) $G_2$ राज्यं (for रम्यं). $G_1$ गंधवद्भमौ (for °मुद्भमौ). — (L. 39) $G_1$ -दर्शनं (for -साधनम्). — (L. 40) $T_1$ च; $M_{1,2}$ [अ]ति- (for [अ]-थ). — (L. 41) $G_2$ च सु- (for बहु-). $T_1$ फलच्छायवहास्तथा; M °योपगास्तदा ($M_4$ °था) (for the post. half). — (L. 42) M दुस्पर्श- (for सुस्पर्शा). — (L. 43) $M_{1,2,4}$ मनोनुरूपाः (for °कूलाः). Madras ed. भूतापवर्जिताः. $G_3$ M चेष्टाभूत्पा($G_3$ °त्ता)पवर्जिताः (for the post. half). — (L. 44) $M_{1-3}$ हि (for ऽपि). $T_2$ तथैव सोपि राजर्षिस्; $G_1$ तथा बभूव रा° (for the prior half). $T_1$ सद्वृत्तम् (for त°). — (L. 46) M -वृत्तिनः (for -वर्तिनः). $T_1$ G प्रियदर्शिनः. — (L. 47) $G_3$ तपोबल- (for तेजो°). — (L. 48) M जितारयः (for जितेन्द्रियाः). — (L. 49) $T_1$ शस्तेषु (for शासत्सु). $G_2$ $M_{1-3}$ धरणीम् (for पृथिवीम्). $T_1$ $G_1$ $M_4$ बहु (for वसुः). — (L. 50) $T_1$ तारागुणैः (for °गणैः). — (L. 51) $T_1$ $G_2$ च सस्य-; $M_4$ (*inf. lin.* as above) तस्य प्र- (for सस्यप्र-). — (L. 53) $M_{1-3}$ मानुषेषु (for मानवेषु). $M_{1,2}$ ये (sic) (for याः). — $T_2$ $G_3$ om. lines 54–57. — (L. 54) $M_1$ तान्सर्वान् (sic) (for ताः सर्वाः). — (L. 55) $G_1$ $M_{1,3,4}$ राजानो (for ते नित्यं). — (L. 57) $G_2$ M दृष्ट्या (for वृत्त्या). — (L. 58) M महीपतेः (for °तले). — (L. 59) $G_3$ $M_{1-3}$ लोकगतिस् (for °मतिस्). $M_4$ लोक- (for राज-). — Colophon. — *Adhy. no.* : $T_1$ $G_3$ 15; $T_2$ $G_{1,2}$ M 14.

नावया च यथा प्राज्ञो विना प्रज्ञातरित्रया ।
अक्रान्तसलिलं गाहे क्लृप्तं संतरति स्वयम् । [ 25 ]
तीर्णो गच्छेत्परं पारं नावमुत्सृज्य निर्ममः ।
व्याख्यातं पूर्वकल्पेन यथा रथपदातिनाम् ।
मोहात्संमोहमापन्नो मा विनाशं यथा तथा ।
ममत्वेनाभिभूतस्य तत्रैव परिदेवने ।
नावं न शक्यमारुह्य स्थलेऽपि परिभावितुम् । [ 30 ]
तथैव स्थलमारुह्य नाप्सु यातुं विधीयते ।
एवं कर्म कृतं चित्तं विषमस्थं पृथक्पृथक् ।
यथा कर्म कृतं लोके तथा तदुपपद्यते ।
यत्रैव गन्धो न रसो न रूपस्पर्शशब्दवत् ।
मन्यतेऽथ मनो बुद्ध्या तत्प्रधानं प्रचक्षते । [ 35 ]
यत्तत्प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ।
महतः प्रधानभूतस्य गुणाः * * * * स्मृताः ।
बीजधर्मि यथा व्यक्तं तथैव प्रसवात्मकम् ।
बीजधर्मा महानात्मा प्रसवश्चेति नः श्रुतम् ।
बीजधर्मास्त्वहंकारः प्रसवत्वे पुनः पुनः । [ 40 ]
बीजप्रसवधर्माणि महाभूतानि पञ्च वै ।
बीजधर्मिणमित्याहुः प्रसवं नैव कुर्वते ।
विशेषाः सर्वभूतानां तेषां चित्तं विशेषणम् ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ।

## 3

After 14. 35. 12, K5 B D ( except D1 ) T2 ins. :

ज्ञानं त्वेव परं विद्मः संन्यासं तप उत्तमम् ।
यस्तु वेद निराबाधं ज्ञानतत्त्वं विनिश्चयात् ।
सर्वभूतस्थमात्मानं स सर्वगतिरिष्यते ।
यो विद्वान्सहवासं च विवासं चैव पश्यति ।
तथैवैकत्वनानात्वे स दुःखात्परिमुच्यते । [ 5 ]
यो न कामयते किंचिन्न किंचिदभिमन्यते ।
इहलोकस्थ एवैष ब्रह्मभूयाय कल्पते ।
प्रधानगुणतत्त्वज्ञः सर्वभूतविधानवित् ।
निर्ममो निरहंकारो मुच्यते नात्र संशयः ।
अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् । [ 10 ]
महाहंकारविटप इन्द्रियाङ्कुरकोटरः ।
महाभूतविशेषश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः सदाशुभफलोदयः ।
आजीवः सर्वभूतानां ब्रह्मबीजः सनातनः ।
एतज्ज्ञात्वा च तत्त्वेन ज्ञानेन परमासिना । [ 15 ]
छित्त्वा चामरतां प्राप्य जहाति मृत्युजन्मनी ।

## 4

T G ins. after 14. 96. 15 : M2–4 after 14. 96 :

जनमेजयः ।

अश्वमेधे पुरा वृत्ते केशवं केशिसूदनम् ।
धर्मसंशयमुद्दिश्य किमपृच्छत्पितामहः ।

वैशंपायनः ।

पश्चिमेनाश्वमेधेन यदा स्नातो युधिष्ठिरः ।
तदा राजन्नमस्कृत्य केशवं पुनरब्रवीत् ।
भगवन्वैष्णवा धर्माः किंफलाः किंपरायणाः । [ 5 ]

---

3

Cf. 14. 47. $5^c$–$9^d$ and 47. $12^a$–$14^d$. — ( L. 1 ) T2 नैव ( for त्वेव ). Dn1 D2. 8 विद्म ( for विद्मः ). Dc1 ज्ञानं ते परमं विद्म ( for the prior half ). B1–4 Dc1 संन्यासस्. — ( L. 2 ) B1. 2 वेदं ( for वेद ). B3 निराधारं; D8 °बंधं ( for °बाधं ). D4 ज्ञानं तत्त्व- ; D5. 6 ज्ञानतत्त्व- ( for °तत्त्वं ). — ( L. 3 ) Dn1 D2. 8 धर्मगतिर् ( for सर्वगतिर् ). B1. 2 स सर्वगतिरि( B2 °रु)च्यते ; D5. 6 स धर्मानतिरिच्यते ( for the post. half ). — ( L. 4 ) Dn1 D2. 5. 6 सहसंवासं ( for °वासं च ). T2 वै ( for च ). D4 स वासं ; D5. 6 पृथक्त्वं ( for विवासं ). T2 सद्भिः सह न पश्यति ( for the post. half ). — ( L. 6 ) T2 यः कामं मनुते किंचिन् ( for the prior half ). K5 अपि ( for अभि- ). D4 -गम्यते ( for -मन्यते ). — ( L. 7 ) T2 इहलोकांस्त्वनेनैव ( for the prior half ). — ( L. 9 ) Dc1 धर्मात्मा ( for निर्ममो ). — ( L. 10 ) Dc1 अत्यक्त- ( for अव्यक्त- ). D4 ( marg. *sec. m.* as above ) -द्रव्य- ( for -बीज- ). — ( L. 11 ) B2 मोहाहंकार- ( for महा° ). D5. 6 T2 इंद्रियांतर( T2 °याकुल )कोटरः ( for the post. half ). — ( L. 12 ) D3 -शाखवत् ( for °वान् ). — ( L. 13 ) K6 B5 Dc1 T1 शुभाशुभ- ; D4 सदापुण्य- ( for °शुभ- ). — ( L. 14 ) D8 आजीव- ; D5. 6 अजीव्यः. D5. 6 -वृक्षः ( for -बीजः ). — ( L. 15 ) T2 यत्तज् ( for एतज् ). B1. 4 T2 तत्त्वानि ; B2 तत्त्वं हि ( for तत्त्वेन ). — ( L. 16 ) D3 छित्त्वा ; T2 स्थित्वा ( for छित्त्वा ). B3 प्राप ( for प्राप्य ). K5 जहीमे ( for जहाति ).

4

— ( L. 3 ) T2 G2. 3 M2. 3 दंतमेन ( for पश्चि° ). — G3 om. line 4. — ( L. 4 ) M3 राजा ( for राजन् ). G1

किं धर्ममधिकृत्याथ भवतोत्पादिताः पुरा ।
यदि तेऽहमनुग्राह्यः प्रियोऽस्मि मधुसूदन ।
श्रोतव्या यदि मे कृष्ण तन्मे कथय सुव्रत ।
पवित्राः किल ते धर्माः सर्वपापप्रणाशनाः ।
सर्वधर्मोत्तमाः पुण्या भगवंस्त्वन्मुखोद्गताः । [10]
यान्श्रुत्वा ब्रह्महा गोघ्नो मातृहा गुरुतल्पगः ।
पाकभेदी कृतघ्नश्च सुरापो ब्रह्मविक्रयी ।
मित्रविश्वासघाती च वीरहा भ्रूणहा तथा ।
तपोविक्रयिणश्चैव दानविक्रयिणस्तथा ।
आत्मविक्रयिणो मूढा जीवेयश्च विकर्मभिः । [15]
पापाः शठा नैकृतिका डाम्भिका दूषकास्तथा ।
रसभेदकरा ये च ये च स्युर्ब्रह्मघातकाः ।
शूद्रप्रेष्यकराश्चोरा विप्रा ये च पुरोहिताः ।
निक्षेपहारिणः स्त्रीघ्नास्तथा ये पारदारिकाः ।
एते चान्ये च पापास्ते मुच्यन्ते तेऽपि किल्बिषात् । [20]
तानाचक्ष्व सुरश्रेष्ठ त्वद्भक्तस्य ममाच्युत ।
इत्येवं कथिते देवे धर्मपुत्रेण संसदि ।
वसिष्ठाद्यास्तपोयुक्ता मुनयस्तत्त्वदर्शिनः ।
श्रोतुकामाः परं गुह्यं वैष्णवं धर्ममुत्तमम् ।
तथा भागवताश्चैव ततस्तं पर्यवारयन् । [25]

युधिष्ठिरः ।

तत्त्वतस्तु भवानेव पादमूलमुपागतम् ।
यदि जानासि मां भक्तं स्निग्धं वा भक्तवत्सल ।
धर्मगुह्यानि सर्वाणि वेत्तुमिच्छामि तत्त्वतः ।
धर्मान्कथय देवेश यद्यनुग्रहभागहम् ।
श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा । [30]
गार्गीया गौतमीयाश्च तथा गोपालकस्य च ।
पराशरकृताः पूर्वं मैत्रेयस्य च धीमतः ।
औमा माहेश्वराश्चैव नन्दिधर्माश्च पावनाः ।
ब्रह्मणा कथिता ये च कौमाराश्च श्रुता मया ।
धूम्रायणकृता धर्माः काण्डवैश्वानरा अपि । [35]
भार्गव्या याज्ञवल्क्याश्च मार्कण्डेयकृतास्तथा ।
भारद्वाजकृता ये च बृहस्पतिकृताश्च ये ।
कुणेश्च कुणिवाहोश्च विश्वामित्रकृताश्च ये ।
सुमन्तुजैमिनिकृताः शाकुनेयास्तथैव च ।
पुलस्त्यपुलहोद्गीताः पावकीयास्तथैव च । [40]
अगस्त्यगीता मौद्गल्याः शाण्डिल्याश्चैव पावनाः ।
वालखिल्यकृता ये च ये च सप्तर्षिभिः कृताः ।
आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च ।

---

तदा राजा पुरस्कृत्य (for the prior half). T M2.4 वाक्यम् (for पुनर्). — Before line 5, T1 G1.2 M2-4 ins. युधिष्ठिरः. — (L. 6) G3 M4 कं (for किं). — (L. 7) G3 मे; M2.4 वा (for ऽसि). — (L. 8) G3 M4 तान् (for तन्). G3 वै (for मे). — (L. 9) M4 सर्वे (for सर्व-). — (L. 11) T G1.3 यच्छ्रुत्वा. — (L. 13) G3 M2.3 भ्रूणहा वीरहा (by transp.). — M4 om. (hapl.) lines 14-16. — (L. 14) M2 च ये (for तथा). — (L. 15) G3 आत्मविक्रयणश्चैव (for the prior half). — (L. 16) Madras ed. पापाचारा (for पापाः शठा). T1 M3 डांभीका. M2 च ये (for तथा). — (L. 17) G3 चैव (for the first ये च). T G3 M4 -दूपकाः (for -घातकाः). — (L. 18) M2 -प्रेषणकाश् (for -प्रेष्यकराश्). — (L. 19) T1 परदारिकाः. — (L. 20) G3 M4 बहवो (for पापास्ते). — Before line 22, T1 M2.4 ins. वैशंपायनः. — (L. 24) M2 om. गुह्यं and the post. half. G3 M4 भक्तिमंतो निरत्ययाः (for the post. half). — (L. 25) T2 G1.2 ततः सं-; G3 व्रतस्थाः (for ततस्तं). — G3 om. the ref. — (L. 26) G3 M2.4 तत्त्वतस्तव भावे(G3 बोधे)न (for the prior half). M2 उपागतः. — (L. 27) G3 M4 इति (for यदि). T2 शक्तं स्निग्धं; G3 M4 स्निग्धं भक्तं (by transp.). — (L. 28) G3 M4 -युक्तानि (for -गुह्यानि). — (L. 29) T1 G1.2 M3 मे देव (for देवेश). — (L. 31) G3 गार्गीय-. M4 धर्मा (for तथा). T1 कापालिकस्य; G3 M4 गोपालि°. — (L. 32) T2 पाराशरकृताः. G1 M4 पूर्वा (for पूर्वं). G3 M4 आत्रेयस्य (for मै°). M2 तथैवात्रिमुखोद्गताः (for the post. half). — (L. 33) T G1.2 M3 उमा; M2 तथा (for औमा). T1 महेश्वराच्; T2 G M3 महेश्वराश्. M2 नंदी- (for नन्दि-). — (L. 34) T1 G3 ब्राह्मणाः. — (L. 35) T1 धूमयान-; T2 G2 M3 धूम्रा(M3 °मा)यन- (for °यण-). G2.3 कांडा; M2.4 काण्वा (for काण्ड-). — (L. 36) G1 M3 भार्गवा. M3 याज्ञवल्काश्. M2 -कृतस्. G2 M4 मांडव्याः (M4 °डेयाः) काश्यपास्तथा (for the post. half). — (L. 37) G3 भरद्वाजकृताश्चैव (for the prior half). — (L. 38) T1 G1.2 कणेशतृणग्राहो- (T1 °हे)श्च; T2 कण्वोश्च कुणिबाह्योश्च; G3 M3 कुणेश्च कुणिबाह्यो(M3 °वह्वो)श्च (for the prior half). — G1 transp. lines 39 and 40. — (L. 39) G1 सुमंतुजैमिनीयाश्च (for the prior half). G2 शकुनेयास्; G3 श्रुतसेनास्. — M3 om. (hapl.) line 40. — (L. 40) T G2 पावनीयास्; M2 तावकीयास् (for पाव°). — (L. 41) M2 मोद्गरयाः. G3 transp. मौद्गल्याः and शांडिल्याः. G3 M4 सौक्षभावि(M4 °च)नः; M2 सौक्ष्यभावनः; Kumbh.

नावया च यथा प्राज्ञो विना प्रज्ञातरिक्रया ।
अक्रान्तसलिलं गाहे कृत्स्नं संतरति स्वयम् । [ 25 ]
तीर्णो गच्छेत्परं पारं नावमुत्सृज्य निर्ममः ।
व्याख्यातं पूर्वकल्पेन यथा रथपदातिनाम् ।
मोहात्संमोहमापन्नो मा विनाशं यथा तथा ।
ममत्वेनाभिभूतस्य तत्रैव परिदेवने ।
नावं न शक्यमारुह्य स्थलेऽपि परिभावितुम् । [ 30 ]
तथैव स्थलमारुह्य नाप्सु यातुं विधीयते ।
एवं कर्म कृतं चित्तं विषमस्थं पृथक्पृथक् ।
यथा कर्म कृतं लोके तथा तदुपपद्यते ।
यत्रैव गन्धो न रसो न रूपस्पर्शशब्दवत् ।
मन्यतेऽथ मनो बुद्ध्या तत्प्रधानं प्रचक्षते । [ 35 ]
यत्तत्प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ।
महतः प्रधानभूतस्य गुणाः * * * * स्मृताः ।
बीजधर्मि यथा व्यक्तं तथैव प्रसवात्मकम् ।
बीजधर्मा महानात्मा वसवश्चेति नः श्रुतम् ।
बीजधर्मास्त्वहंकारः प्रसवत्वे पुनः पुनः । [ 40 ]
बीजप्रसवधर्माणि महाभूतानि पञ्च वै ।
बीजधर्मिणमित्याहुः प्रसवं नैव कुर्वते ।
विशेषाः सर्वभूतानां तेषां चित्तं विशेषणम् ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ।

### 3

After 14. 35. 12, K5 B D ( *except* D1 ) T2 *ins.* :

ज्ञानं त्वेव परं विद्मः संन्यासं तप उत्तमम् ।
यस्तु वेद निराबाधं ज्ञानतत्त्वं विनिश्चयात् ।
सर्वभूतस्थमात्मानं स सर्वगतिरिष्यते ।
यो विद्वान्सहवासं च विवासं चैव पश्यति ।
तथैवैकत्वनानात्वे स दुःखात्परिमुच्यते । [ 5 ]
यो न कामयते किंचिन्न किंचिदभिमन्यते ।
इहलोकस्थ एवैष ब्रह्मभूयाय कल्पते ।
प्रधानगुणतत्त्वज्ञः सर्वभूतविधानवित् ।
निर्ममो निरहंकारो मुच्यते नात्र संशयः ।
अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् । [ 10 ]
महाहंकारविटप इन्द्रियाङ्कुरकोटरः ।
महाभूतविशेषश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः सदाशुभफलोदयः ।
आजीवः सर्वभूतानां ब्रह्मबीजः सनातनः ।
एतज्ज्ञात्वा च तत्त्वेन ज्ञानेन परमासिना । [ 15 ]
छित्त्वा चामरतां प्राप्य जहाति मृत्युजन्मनी ।

### 4

T G *ins.* after 14. 96. 15 : M2-4 after 14. 96 :

जनमेजयः ।

अश्वमेधे पुरा वृत्ते केशवं केशिसूदनम् ।
धर्मसंशयमुद्दिश्य किमपृच्छत्पितामहः ।

वैशंपायनः ।

पश्चिमेनाश्वमेधेन यदा स्नातो युधिष्ठिरः ।
तदा राजन्नमस्कृत्य केशवं पुनरब्रवीत् ।
भगवन्वैष्णवा धर्माः किंफलाः किंपरायणाः । [ 5 ]

---

3

Cf. 14. 47. 5ᶜ–9ᵈ and 47. 12ᵃ–14ᵈ. — ( L. 1 ) T2 चैव ( for त्वेव ). Dn1 D2. 8 विद्म ( for विद्मः ). Dc1 ज्ञानं ते परमं विद्म ( for the prior half ). B1–4 Dc1 संन्यासस्. — ( L. 2 ) B1. 2 वेदं ( for वेद ). B2 निराधारं; D3 °बंधं ( for °बाधं ). D4 ज्ञानं तत्त्व-; D5. 6 ज्ञानतत्त्व- ( for °तत्त्वं ). — ( L. 3 ) Dn1 D2. 8 धर्मगतिर् ( for सर्वगतिर् ). B1. 2 स सर्वगतिरि( B2 °रु )च्यते; D5. 6 स धर्मानतिरिच्यते ( for the post. half ). — ( L. 4 ) Dn1 D2. 5. 6 सहसंवासं ( for °वासं च ). T2 वै ( for च ). D4 स वासं; D5. 6 पृथक्त्वं ( for विवासं ). T2 सद्भिः सह न पश्यति ( for the post. half ). — ( L. 6 ) T2 यः कामं मनुते किंचिन् ( for the prior half ). K5 अपि ( for अभि- ). D4 -गम्यते ( for -मन्यते ). — ( L. 7 ) T2 इहलोकांस्त्वनेनैष ( for the prior half ). — ( L. 9 ) Dc1 धर्मात्मा ( for निर्ममो ). — ( L. 10 ) Dc1 अत्यक्त- ( for अव्यक्त- ). D4 ( marg. *sec. m.* as above ) -द्रव्य- ( for -बीज- ). — ( L. 11 ) B2 मोहाहंकार- ( for महा° ). D5. 6 T2 इंद्रियांतर( T2 °याकुल )कोटरः ( for the post. half ). — ( L. 12 ) D3 -शाखवत् ( for °वान् ). — ( L. 13 ) K5 B5 Dc1 T2 शुभाशुभ-; D4 सदापुण्य- ( *for* °शुभ- ). — ( L. 14 ) D3 आजीव-; D5. 6 आजीव्यः. D5. 6 -वृक्षः ( for -बीजः ). — ( L. 15 ) T2 यत्तज् ( for एतज् ). B1. 4 T2 तत्त्वानि; B2 तत्त्वं हि ( for तत्त्वेन ). — ( L. 16 ) D3 छित्वा; T2 स्थित्वा ( for छित्त्वा ). B3 प्राप ( for प्राप्य ). K5 जहीमे ( for जहाति ).

4

— ( L. 3 ) T2 G2. 3 M2. 3 पंचमेन ( for पश्चि° ). — G3 om. line 4. — ( L. 4 ) M3 राजा ( for राजन् ). G1

किं धर्ममधिकृत्याथ भवतोत्पादिताः पुरा ।
यदि तेऽहमनुग्राह्यः प्रियोऽस्मि मधुसूदन ।
श्रोतव्या यदि मे कृष्ण तन्मे कथय सुव्रत ।
पवित्राः किल ते धर्माः सर्वपापप्रणाशनाः ।
सर्वधर्मोत्तमाः पुण्या भगवंस्त्वन्मुखोद्गताः । [ 10 ]
यान्श्रुत्वा ब्रह्महा गोघ्नो मातृहा गुरुतल्पगः ।
पाकभेदी कृतघ्नश्च सुरापो ब्रह्मविक्रयी ।
मित्रविश्वासघाती च वीरहा भ्रूणहा तथा ।
तपोविक्रयिणश्चैव दानविक्रयिणस्तथा ।
आत्मविक्रयिणो मूढा जीवेयुश्च विकर्मभिः । [ 15 ]
पापाः शठा नैकृतिका डाम्भिका दूषकास्तथा ।
रसभेदकरा ये च ये च स्युर्ब्रह्मघातकाः ।
शूद्रप्रेष्यकराश्चोरा विप्रा ये च पुरोहिताः ।
निक्षेपहारिणः स्त्रीघ्नास्तथा ये पारदारिकाः ।
एते चान्ये च पापास्ते मुच्यन्ते तेऽपि किल्बिषात् । [ 20 ]
तानाचक्ष्व सुरश्रेष्ठ त्वद्भक्तस्य ममाच्युत ।
इत्येवं कथिते देवे धर्मपुत्रेण संसदि ।
वसिष्ठाद्यास्तपोयुक्ता मुनयस्तत्त्वदर्शिनः ।
श्रोतुकामाः परं गुह्यं वैष्णवं धर्ममुत्तमम् ।
तथा भागवताश्चैव ततस्तं पर्यवारयन् । [ 25 ]

युधिष्ठिरः ।

तत्त्वतस्तु भवानेव पादमूलमुपागतम् ।
यदि जानासि मां भक्तं स्निग्धं वा भक्तवत्सल ।
धर्मगुह्यानि सर्वाणि वेत्तुमिच्छामि तत्त्वतः ।
धर्मान्कथय देवेश यद्यनुग्रहभागहम् ।
श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा । [ 30 ]
गार्गीया गौतमीयाश्च तथा गोपालकस्य च ।
पराशरकृताः पूर्वं मैत्रेयस्य च धीमतः ।
औमा माहेश्वराश्चैव नन्दिधर्माश्च पावनाः ।
ब्रह्मणा कथिता ये च कौमाराश्च श्रुता मया ।
धूम्रायणकृता धर्माः काण्डवैश्वानरा अपि । [ 35 ]
भार्गव्या याज्ञवल्क्याश्च मार्कण्डेयकृतास्तथा ।
भारद्वाजकृता ये च बृहस्पतिकृताश्च ये ।
कुणेश्च कुणिवाहोश्च विश्वामित्रकृताश्च ये ।
सुमन्तुजैमिनिकृताः शाकुनेयास्तथैव च ।
पुलस्त्यपुलहोद्गीताः पावकीयास्तथैव च । [ 40 ]
अगस्त्यगीता मौद्गल्याः शाण्डिल्याश्चैव पावनाः ।
वालखिल्यकृता ये च ये च सप्तर्षिभिः कृताः ।
आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च ।

---

तदा राजा पुरस्कृत्य (for the prior half). T $M_{2.4}$ वाक्यम् (for पुनर्). — Before line 5, $T_1$ $G_{1.2}$ $M_{2-4}$ ins. युधिष्ठिरः. — (L. 6) $G_3$ $M_4$ कं (for किं). — (L. 7) $G_3$ मे; $M_{2.4}$ वा (for ऽस्मि). — (L. 8) $G_3$ $M_4$ तान् (for तन्). $G_3$ वै (for मे). — (L. 9) $M_4$ सर्वे (for सर्व-). — (L. 11) T $G_{1.3}$ यच्छ्रुत्वा. — (L. 13) $G_3$ $M_{2.3}$ भ्रूणहा वीरहा (by transp.). — $M_4$ om. (hapl.) lines 14–16. — (L. 14) $M_2$ च ये (for तथा). — (L. 15) $G_3$ आत्मविक्रयणश्चैव (for the prior half). — (L. 16) Madras ed. पापाचारा (for पापाः शठा). $T_1$ $M_3$ डांभीका. $M_2$ च ये (for तथा). — (L. 17) $G_3$ चैव (for the first ये च). T $G_3$ $M_4$ -दूपकाः (for -घातकाः). — (L. 18) $M_2$ -प्रेषणकाश् (for -प्रेष्यकराश्). — (L. 19) $T_1$ परदारिकाः. — (L. 20) $G_3$ $M_4$ बहवो (for पापास्ते). — Before line 22, $T_1$ $M_{2.4}$ ins. वैशंपायनः. — (L. 24) $M_2$ om. गुह्यं and the post. half. $G_3$ $M_4$ भक्तिमंतो निरत्ययाः (for the post. half). — (L. 25) $T_2$ $G_{1.2}$ ततः सं-; $G_3$ मतस्थाः (for ततस्तं). — $G_3$ om. the ref. — (L. 26) $G_3$ $M_{2.4}$ तत्त्वतस्तव भावे($G_3$ बोधे)न (for the prior half). $M_2$ उपागतः. — (L. 27) $G_3$ $M_4$ इति (for यदि). $T_2$ शक्तं स्निग्धं; $G_3$ $M_4$ स्निग्धं भक्तं (by transp.). — (L. 28) $G_3$ $M_4$ -युक्तानि (for -गुह्यानि). — (L. 29) $T_1$ $G_{1.2}$ $M_3$ मे देव (for देवेश). — (L. 31) $G_3$ गार्गीय-. $M_4$ धर्मा (for तथा). $T_1$ कापालिकस्य; $G_3$ $M_4$ गोपालि°. — (L. 32) $T_2$ पाराशरकृताः. $G_1$ $M_4$ पूर्वां (for पूर्वं). $G_3$ $M_4$ आत्रेयस्य (for मै°). $M_2$ तथैवात्रिमुखोद्गताः (for the post. half). — (L. 33) T $G_{1.2}$ $M_3$ उमा; $M_2$ तथा (for औमा). $T_1$ महेश्वराच्च; $T_2$ G $M_3$ महेश्वराश्. $M_2$ नंदी- (for नन्दि-). — (L. 34) $T_1$ $G_3$ ब्राह्मणाः. — (L. 35) $T_1$ धूमयान-; $T_2$ $G_2$ $M_3$ धूम्रा($M_3$ °मा)यन- (for °यण-). $G_{2.3}$ कांडा; $M_{2.4}$ काण्वा (for काण्ड-). — (L. 36) $G_1$ $M_3$ भार्गवा. $M_3$ याज्ञवल्काश्. $M_2$ -कृतस्. $G_2$ $M_4$ मांडव्याः ($M_4$ °डेयाः) काश्यपास्तथा (for the post. half). — (L. 37) $G_3$ भरद्वाजकृताश्चैव (for the prior half). — (L. 38) $T_1$ $G_{1.2}$ कणेशतृणवाहो- ($T_1$ °ह्ये)श्च; $T_2$ कण्वोश्च कुणिबाह्योश्च; $G_3$ $M_3$ कुणेश्च कुणिबाह्यो($M_3$ °वहो)श्च (for the prior half). — $G_1$ transp. lines 39 and 40. — (L. 39) $G_1$ सुमंतुजैमिनीयाश्च (for the prior half). $G_2$ शकुनेयास्; $G_3$ श्रुतसेनास्. — $M_3$ om. (hapl.) line 40. — (L. 40) T $G_2$ पावनीयास्; $M_2$ तावकीयास् (for पाव°). — (L. 41) $M_2$ मोद्गल्याः. $G_3$ transp. मौद्गल्याः and शाण्डिल्याः. $G_3$ $M_4$ सौक्ष्मायि($M_4$ °म)नः; $M_2$ सौम्यभावनः; Kumbh.

प्राजापत्यास्तथा याम्या माहेन्द्राश्च श्रुता मया ।
वैय्याघ्रा व्यासगीताश्च विभाण्डककृताश्च ये । [ 45 ]
नारदीयाः श्रुता धर्माः कापोताश्च श्रुता मया ।
तथा विदुरवाक्यानि भृगोरङ्गिरसस्तथा ।
क्रौञ्चा मृदङ्गगीताश्च सौर्या हारीतकाश्च ये ।
ये पिशङ्गकृताश्चापि कौतुपा हंसपालकाः ।
उद्दालककृता धर्मा औशनस्यास्तथैव च । [ 50 ]
वैशंपायनगीताश्च ये चान्येऽप्येवमादयः ।
एतेभ्यः सर्वधर्मेभ्यो देव त्वन्मुखनिःसृताः ।
पावनत्वात्पवित्रत्वाद्विशिष्टा इति मे मतिः ।
तस्माद्धि त्वां प्रपन्नस्य त्वद्भक्तस्य च भावतः ।
युष्मदीयान्वरान्धर्मान्पुण्यान्कथय मेऽच्युत । [ 55 ]

वैशंपायनः ।

एवं पृष्टस्तु धर्मज्ञो धर्मपुत्रेण केशवः ।
उवाच धर्मान्सूक्ष्मार्थान्धर्मपुत्रस्य हर्षितः ।
एवं ते यस्य कौन्तेय यत्नो धर्मेषु सुव्रत ।
त्वत्समो दुर्लभो लोके न कश्चिदिह विद्यते ।
धर्मः श्रुतो वा दृष्टो वा कथितो वा कृतोऽपि वा । [ 60 ]
अनुमोदितो वा राजेन्द्र पुनातीह नरं सदा ।
धर्मः पिता च माता च धर्मो नाथः सुहृत्तथा ।
धर्मो भ्राता सखा चैव धर्मः स्वामी परंतप ।
धर्मादर्थश्च कामश्च धर्माद्भोगाः सुखानि च ।
धर्मादैश्वर्यमेवाग्र्यं धर्मात्स्वर्गगतिः परा । [ 65 ]
धर्मो यः सेवितः शुद्धस्त्रायते महतो भयात् ।
धर्माद्द्विजत्वं देवत्वं धर्मः प्रापयते नरम् ।
यदा च क्षीयते पापं कालेन पुरुषस्य तु ।
तदा संजायते बुद्धिर्धर्मं कर्तुं युधिष्ठिर ।
जन्मान्तरसहस्रैस्तु मनुष्यत्वं हि दुर्लभम् । [ 70 ]
तद्गत्वापीह यो धर्मं न करोति स वञ्चितः ।
कुत्सिता ये दरिद्राश्च विरूपा व्याधितास्तथा ।
परप्रेष्याश्च मूर्खाश्च न तैर्धर्मः कृतः पुरा ।
ये च दीर्घायुषः शूराः पण्डिता भोगिनस्तथा ।
नीरोगा रूपसंपन्नास्तैर्धर्मः सुकृतः पुरा । [ 75 ]
एवं धर्मः कृतः शुद्धो नयते गतिमुत्तमाम् ।
अधर्मं सेवमानस्तु तिर्यग्योन्यां पतत्यसौ ।
इदं रहस्यं कौन्तेय शृणु धर्ममनुत्तमम् ।

---

and Madras eds. शलभायवाः (for चैव पावनाः). —(L. 42) M2 वालखिल्य-. G3 चैव (for the first ये च). T G1 M3 तथा (for कृताः). —(L. 43) M2 ये च (for धर्माः). —(L. 44) M4 यत् (for च). —(L. 45) G3 वैय्याघ्र-. T G1 वैय्याघ्रा व्या( T1 °घ्या व्या-; G1 °घ्रव्या )सकी-( T2 °गी )य्याश्च; G2 वैय्याघ्रया व्यासिकीयाश्च; M3 वैय्याघ्रा व्यासकीयाश्च. T G1.2 वैभीतक-; MSS. विभंडक-. —(L. 46) G3 तथा (for श्रुता). G2 कपोताश्च; G3 कापोतीयाः. —(L. 47) G3 -गीता च (for -वाक्यानि). T1 G2.3 अंगीरसस्. —(L. 48) G3 कौंच्यो; M4 क्रौंच्या. M2.3 सौरा (for सौर्या). G3 M4 तथा (for च ये). —(L. 49) G3 M4 पिंगवर्ण-; M2 पिशंगव- (for ये पिशङ्ग-). T2 कौतमाहं सबालिकाः; G1 काठतापसपालकाः; G2 कातपासास्तपालकाः; G3 कौंतेयाः पांसुपालिकाः; M2 कांता वा पासलालकाः; M3 कांतालापासलालकाः; M4 क्रादपावत्सबालिकाः; Kumbh. ed. कातपायाः सुवालकाः; Madras ed. कौतपाः पांसुवालकाः (for the post. half). —(L. 51) Kumbh. ed. आदितः (for आदयः). —(L. 52) G1 -मूलिकाः स्मृताः. —(L. 53) T2 G1.2 पवित्रा (for विशिष्टा). —(L. 54) M2.3 त्वां तु; M4 हि त्वं (for हि त्वां). M2 माधव; Kumbh. ed. केशव (for भावतः). —(L. 55) G3 M2.4 परान् (for वरान्). — G3 om. the ref. —(L. 56) G3 M2.4 उक्तस् (for पृष्टस्). G3 M4 माधवः (for केशवः). —(L. 57) T1 सूक्ष्मान् (for धर्मान्). G3 M4 धीमतः (for हर्षितः). — Before line 58, MSS. ins. श्रीभगवान्. —(L. 59) G1.2 M3 तस्य ते (M3 मे) (for त्वत्समो). M2 न किंचिदुपपद्यते (for the post. half). —(L. 61) G1 [इ]व (for [इ]ह). G3 M4 सदा नरं (by transp.). Kumbh. ed. नयतींद्रपदं नरं (for the post. half). —(L. 62) T G3 M4 धर्मोथ सुहृदस्तथा (for the post. half). —(L. 63) T M2 परंतपः. —(L. 64) T धर्माधर्मश्च कामश्च; G3 धर्मादर्थं च कामं च (for the prior half). —(L. 65) G3 M4 प्रभो (for परा). —(L. 66) G3 M4 [ऽ]यं (for यः). G3 तत्र (for शुद्धस्). —(L. 67) G3 M2.4 द्विजत्वं देवतात्वं च (for the prior half). Kumbh. ed. पावयते (for प्राप°). T1 परं; T2 G1 नरः (for नरम्). —(L. 68) G3 M4 यत् (for च). M4 तत् (for तु). —(L. 70) M2.4 मानुषत्वं. M2.3 (*inf. lin.*) लभ्यते (for दुर्लभम्). G3 मानुष्यं त्वतिदुर्लभं (for the post. half). —(L. 71) G3 M4 लब्ध्वा (for गत्वा). Kumbh. ed. स्व- (for स). —(L. 72) M4 कुपिता (for कुत्सिता). T1 च (for ये). G3 M4 च ये (for तथा). —(L. 73) Madras ed. -द्वेष्याश् (for -प्रेष्याश्). —(L. 75) T1 G1 निरोग-. G3 M4 तैर्धर्माः सुकृताः पुरा; M2 तैश्च धर्मः कृतः पुरा (for the post. half). —(L. 76) T2 G3 M4 सद्यो (for शुद्धो). —(L. 77) M2.4 अधर्मः. G3 M2.4 सेव्यमानस्. Kumbh. ed. अधर्मं सेवते यस्तु (for the prior half). G1 तिर्यग्योनौ. G3 M2.4 तिर्यग्योनिं नयत्यसौ (M4 °मुं) (for the post. half).

कथयिष्ये परं धर्मं मम भक्तस्य पाण्डव ।
इष्टस्त्वमसि मेऽत्यर्थं प्रपन्नश्चापि मां सदा । [ 80 ]
परमार्थमपि ब्रूमः किं पुनर्धर्मसंहिताम् ।
इदं मे मानुषं जन्म कृतमात्मनि मायया ।
धर्मसंस्थापनार्थाय दुष्टानां शासनाय च ।
मानुष्यं भावमापन्नं ये मां गृह्णन्त्यवज्ञया ।
संसरन्तीह ते मूढास्तिर्यग्योनिष्वनेकशः । [ 85 ]
ये च मां सर्वभूतस्थं पश्यन्ति ज्ञानचक्षुषा ।
मद्भक्तांस्तान्सदा युक्तान्मत्समीपं नयाम्यहम् ।
मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भक्तानां तु मानुष्ये सफलं जन्म पाण्डव ।
अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन । [ 90 ]
मुच्यन्ते पापकैः सर्वैः पद्मपत्रमिवाम्भसा ।
जन्मान्तरसहस्रेषु तपसा भावितात्मनाम् ।
भक्तिरुत्पद्यते तात मनुष्याणां न संशयः ।
यच्च रूपं परं गुह्यं कूटस्थमचलं ध्रुवम् ।
न दृश्यते तथा देवैर्मद्भक्तैर्दृश्यते यथा । [ 95 ]
अपरं यच्च मे रूपं प्रादुर्भावेषु दृश्यते ।
तदर्चयन्ति सर्वार्थैः सर्वभूतानि पाण्डव ।
कल्पकोटिसहस्रेषु व्यतीतेष्वागतेषु च ।
दर्शयामीह तद्रूपं तत्प्रपश्यन्ति मे सुराः ।
स्थित्युत्पत्तिव्ययकरं यो मां ज्ञात्वा प्रपद्यते । [ 100 ]
अनुगृह्णाम्यहं तं वै संसारान्मोचयामि च ।
अहमादिर्हि देवानां सृष्टा ब्रह्मादयो मया ।
प्रकृतिं स्वामवष्टभ्य जगत्सर्वं सृजाम्यहम् ।
तमोमूलोऽहमव्यक्तो रजो मध्ये प्रतिष्ठितः ।
ऊर्ध्वं सत्त्वविशालोऽहं ब्रह्मादिस्तम्बसंज्ञितः । [ 105 ]
मूर्धानं मे दिवं विद्धि चन्द्रादित्यौ च लोचने ।
देवाग्निर्ब्राह्मणा वक्त्रं मारुतः श्वसनश्च मे ।
दिशो मे बाहवश्चाष्टौ नक्षत्राणि च भूषणम् ।
अन्तरिक्षमुरो विद्धि सर्वभूतावकाशकम् ।
मार्गो मेघानिलाभ्यां तु यन्ममोदरमव्ययम् । [ 110 ]
पृथिवीमण्डलं यद्वै द्वीपार्णववनैर्युतम् ।
सर्वसंधारणोपेतं पादौ मम युधिष्ठिर ।
स्थितो ह्येकगुणः खेऽहं द्विगुणश्चास्मि मारुते ।
त्रिगुणोऽग्नौ स्थितोऽहं वै सलिले तु चतुर्गुणः ।
शब्दाद्या ये गुणाः पञ्च महाभूतेषु पञ्चसु । [ 115 ]
तन्मात्रसंस्थितः सोऽहं पृथिव्यां पञ्चधा स्थितः ।
अहं सहस्रशीर्षस्तु सहस्रवदनेक्षणः ।
सहस्रबाहूदरदृक् सहस्रोरुः सहस्रपात् ।
धृत्वोर्वीं सर्वतः सम्यगत्यतिष्ठद्दशाङ्गुलम् ।
सर्वभूतात्मभूतस्थः सर्वव्यापी ततो ह्यहम् । [ 120 ]

---

— ( L. 78 ) $G_3$ $M_{2,4}$ श्रूयतामिद( $M_2$ °तां धर्म )मुत्तमं ( for the post. half ). — ( L. 79 ) $G_3$ $M_{2,4}$ गुह्यं ( for धर्मं ). $G_2$ $M_{2,3}$ तव ( for मम ). — ( L. 80 ) T हृष्टस् ( for इष्टस् ). $M_3$ अपि ( for असि ). $M_2$ मेत्येवं ( for मेऽत्यर्थं ). $G_{1,3}$ $M_4$ चासि ( for चापि ). — ( L. 81 ) $M_{2,4}$ ब्रूयां. — ( L. 83 ) $M_{2,4}$ धर्मसंस्थापनायैव. — ( L. 84 ) $G_3$ न मां गृह्णति ये नराः ( for the post. half ). — ( L. 85 ) $T_2$ $G_2$ $M_2$ हि ( for [इ]ह ). Kumbh. ed. संसारान्तर्हि ते मूढास् ( for the prior half ). — ( L. 86 ) Madras ed. ज्ञानचक्षुषः. — ( L. 87 ) $M_4$ तु ( for तान् ). $G_3$ मुदा ; $M_2$ तदा ( for सदा ). — ( L. 91 ) Kumbh. and Madras eds. पातकैः ( for पापकैः ). $M_4$ मुच्यते सर्वपापेभ्यः. — ( L. 92 ) $M_4$ -सहस्रैस्तु ( for °स्रेषु ). $G_3$ भावितात्मनः. — ( L. 93 ) $G_3$ $M_4$ मद्भक्ति- र्विद्यते तात ( for the prior half ). $G_3$ $M_2$ मानुषाणां. — ( L. 97 ) $G_{1,2}$ सत्रार्थे. $G_3$ -भूताश्च ; $M_4$ -भूतैश्च- ( sic ) ( for -भूतानि ). — ( L. 98 ) $T_1$ $G_2$ [आ]गमेषु. — ( L. 99 ) $M_2$ [इ]ति ; $M_3$ च ; $M_4$ तु ( for [इ]ह ): T $G_{1,2}$ च ( for प्र- ). — ( L. 100 ) $G_3$ $M_4$ -प्लवकरं ( for -व्यय° ). $M_3$ सृष्टिस्थितिलये हेतुं ; Kumbh. ed. स्थित्युत्पत्त्यव्ययकरं ( for the prior half ). — ( L. 101 ) $T_1$ तद् ( sic ) ( for तं ). — ( L. 102 ) $T_1$ भूतानां ( for देवानां ). $T_2$ स्रष्टा. $G_1$ [ऽ]मराः ( for मया ). — ( L. 104 ) $G_1$ तमोमूर्खो ( sic ) ( for °मूलो ). $G_3$ अव्यक्तं. $G_3$ $M_4$ मध्यः ; $M_2$ मध्यात्. — ( L. 105 ) $M_4$ ऊर्ध्व-. Kumbh. ed. ऊर्ध्वं सत्त्वं विना लोभं ( for the prior half ). $T_1$ $G_1$ $M_4$ -संज्ञितं ; Kumbh. ed. -पर्यंतः. — ( L. 107 ) T $G_{1,2}$ गावोग्निर् ; $M_2$ वेदाग्निर् ( for देवाग्निर् ). Kumbh. ed. ब्राह्मणो. $G_3$ $M_4$ मरुतः. $T_1$ $G_3$ $M_2$ श्वसनं. — ( L. 108 ) $G_3$ $M_{3,4}$ वि- ( for च ). — ( L. 109 ) $G_3$ $M_4$ सर्व- भूतप्रकाशकं ( for the post. half ). — ( L. 111 ) $M_2$ न्वितं ( for युतम् ). — ( L. 112 ) $M_2$ सर्वसंधारणैर्युक्तं ( for the prior half ). — ( L. 114 ) $M_2$ ह ( for तु ). — ( L. 115 ) $M_2$ शब्दादयो ( for °द्या ये ). — ( L. 116 ) $M_2$ -संज्ञकः ( for -संस्थितः ). $G_1$ च ( for सो ). $T_1$ स्मृतः ( for स्थितः ). — ( L. 117 ) $G_3$ $M_4$ सहस्रचरणेक्षणः ( for the post. half ). — ( L. 118 ) $T_1$ -धृत् ; $M_2$ -वृत् ; $M_4$ -भृत् ; Kumbh. ed. -धृक् ( for -दृक् ). $G_3$ $M_4$ सहस्राक्षः ( for सहस्रोरुः ). — ( L. 119 ) $T_1$ $G_3$ धृतोर्वीं ; $G_1$ धृत्वाद्रिं ; $G_2$ धृत्वाद्रीन्. Kumbh. ed. अत्यतिष्ठं ( for अत्यतिष्ठद् ). — ( L. 120 ) $G_3$ नरो ( for ततो ). $T_1$ $G_{1,2}$ [ऽ]स्मि ( for हि ). — ( L. 121 ) $T_2$ संचिन्त्यो ; $G_3$

अचिन्त्योऽहमनन्तोऽहमजरोऽहमजो ह्यहम् ।
अनद्योऽहमवध्योऽहमप्रमेयोऽहमव्ययः ।
निर्गुणोऽहमगूढात्मा निर्द्वंद्वो निर्ममो नृप ।
निष्कलो निर्विकारोऽहं निदानममृतस्य तु ।
सुधा चाहं स्वधा चाहं स्वाहा चाहं नराधिप । [ 125 ]
तेजसा तपसा चाहं भूतग्रामं चतुर्विधम् ।
स्नेहपाशगुणैर्बद्ध्वा धारयाम्यात्ममायया ।
चतुराश्रमधर्मोऽहं चातुर्होत्रफलाशनः ।
चतुर्मूर्तिश्चतुर्व्यूहश्चतुराश्रमभावनः ।
संहृत्याहं जगत्सर्वं कृत्वा वै गर्भमात्मनः । [ 130 ]
शयामि दिव्ययोगेन प्रलयेषु युधिष्ठिर ।
सहस्रयुगपर्यन्तां ब्राह्मीं रात्रिं महार्णवे ।
स्थित्वा सृजामि भूतानि जङ्गमानि स्थिराणि च ।
कल्पे कल्पे च भूतानि संहरामि सृजामि च ।
न च मां तानि जानन्ति मायया मोहितानि मे । [ 135 ]
मम चैवान्धकारस्य मार्गितव्यस्य नित्यशः ।
प्रशान्तस्येव दीपस्य गतिर्नैवोपलभ्यते ।
न तदस्ति क्वचिद्राजन्यत्राहं न प्रतिष्ठितः ।
न च तद्विद्यते भूतं मयि यन्न प्रतिष्ठितम् ।
यावन्मात्रं भवेद्भूतं स्थूलं सूक्ष्ममिदं जगत् । [ 140 ]
जीवभूतो ह्यहं तस्मिंस्तावन्मात्रं प्रतिष्ठितम् ।
किं चात्र बहुनोक्तेन सत्यमेव ब्रवीमि ते ।
यद्भूतं यद्भविष्यच्च तत्सर्वमहमेव तु ।
मया सृष्टानि भूतानि मन्मयानि च भारत ।
मामेव न विजानन्ति मायया मोहितानि मे । [ 145 ]
एवं सर्वं जगदिदं सदेवासुरमानुषम् ।
मत्तः प्रभवते राजन्मय्येव प्रविलीयते ।

Colophon.

वैशंपायन उवाच ।

एवमात्मोद्भवं सर्वं जगदुद्दिश्य केशवः ।
धर्मान्धर्मात्मजस्याथ पुण्यानकथयत्प्रभुः ।

भगवानुवाच ।

शृणु पाण्डव तत्त्वेन पवित्रं पापनाशनम् । [ 150 ]
कथ्यमानं मया पुण्यं धर्मशास्त्रफलं महत् ।
यः शृणोति शुचिर्भूत्वा एकचित्तस्तपोयुतः ।
स्वर्ग्यं यशस्यमायुष्यं धर्म्यं ज्ञेयं युधिष्ठिर ।
श्रद्दधानस्य तस्येह यत्पापं पूर्वसंचितम् ।
विनश्यत्याशु तत्सर्वं मद्भक्तस्य विशेषतः । [ 155 ]

वैशंपायन उवाच ।

एवं श्रुत्वा वचः पुण्यं सत्यं केशवभाषितम् ।

---

अनंतो (for अचिन्त्यो). G3 अनाथो (for अनन्तो). T G3 अवलो (for अजरो). G2 [ऽ]सि (for हि). —(L. 122) Kumbh. and Madras eds. अनाद्यो (for अनद्यो). —(L. 123) G3 M2-4 निगूढात्मा (for अगू°). G3 नित्योहं (for निर्द्वंद्वो). G3 M4 [ऽ]पि च (for नृप). —(L. 124) G3 M2. 4 निर्द्वंद्वो (for निष्कलो). Some MSS. निधानम्. G3 M4 चामृतस्य च (for अमृतस्य तु). —(L. 125) G3 M2. 4 transp. सुधा and स्वधा. G3 गृहं (for the first चाहं). G3 M4 स्वाहाकारं (M4 °रो) (for स्वाहा चाहं). —(L. 127) T1 स्नेहपाशैर्; T2 G1 °पाशं. —(L. 128) Kumbh. and Madras eds. चातुराश्रम- (for च°). T1 G3 चतुर्होत्र-. G3 -फलाशकः. —(L. 129) M2. 3 चतुर्बाहुश्; Kumbh. ed. °र्यूहश् (for °र्व्यूहश्). M2. 3 चातुराश्रम- (for च°). T2 G3 M4 -भाजनं (M4 °नः) (for -भावनः). —(L. 130) G3 संस्कृत्याहं. M2. 3 (*inf. lin.*) गर्भस्थम् (for वै गर्भम्). —(L. 131) G1 प्रमेयेषु (for प्रल°). —(L. 132) G3 M2 -पर्यंतं. G1 रात्रीं; M2 रात्रिर्. G3 ब्राह्मी रात्रिर्महाह्वे (for the post. half). —(L. 133) G3 स्थितः (for स्थित्वा). —(L. 135) G3 हि; M4 ह (for मे). —(L. 136) G3 दैवांधकारस्य (for चैवान्ध°). —(L. 137) M2 (*inf. lin.*) निर्वाणस्य (for प्रशान्तस्य). M2 -लक्ष्यते (for -लभ्यते). —(L. 138) G3 नाहं (for राजन्). G3 यत्र राजन्; M4 यत्र नाहं (for यत्राहं न). —(L 139) G3 मया (for मयि). —(L. 140) Kumbh. ed. मित्रं (for मात्रं). G3 शरीरं हि (for भवेद्भूतं). G3 M4 स्थूल-. G3 कृतं; M4 क्वचित् (for जगत्). —(L. 141) G3 प्रतिष्ठितः. M4 तावन्मात्रः प्रतिष्ठितः (for the post. half). —(L. 142) G3 M2. 4 एतद् (for अत्र). —(L. 143) G3 M4 भविष्यं तु; M2 °ष्यं वा (for °ष्यच्च). —(L. 144) G3 M4 पांडव (for भारत). — Colophon. — *Sub-parvan* : M2 वैष्णवधर्म. — *Adhy. name* : T2 G1. 2 M3 भगवत्तत्त्वकथनं. — *Adhy. no.* : T1 G3 M4 84; T2 G1. 2 83; M2 1; M4 (*inf. lin.*) 99. —(L. 149) T2 G3 [ए]व; M2. 4 [इ]ह (for [अ]थ). G3 M2 स्वयं; M3 (*sup. lin.*) सह (for प्रभुः). —(L. 150) M2 सत्येन (for तत्त्वेन). M2 पवित्रं पावनं परं (for the post. half). —(L. 152) M2. 3 तपोमयः (for °युतः). —(L. 153) T धर्मज्ञेयं; G3 धर्म्यं ज्ञानं; M2. 3 धर्मज्ञानं; Madras ed. धर्मं ज्ञेयं (for धर्म्यं ज्ञेयं). —(L. 154) T1 सर्व- (for पूर्व-). — G3 M4 om. the ref. —(L. 156) M4 तस्य (for पुण्यं). M4 om. from the post. half up to the prior half

प्रहृष्टमनसो भूत्वा चिन्तयन्तोऽद्भुतं परम् ।
देवा ब्रह्मर्षयः सर्वे गन्धर्वाप्सरसस्तथा ।
भूता यक्षग्रहाश्चैव गुह्यका भुजगास्तथा ।
वालखिल्या महात्मानो योगिनस्तत्त्वदर्शिनः । [ 160 ]
तथा भागवताश्चापि पञ्चकालमुपासकाः ।
कौतूहलसमायुक्ताः प्रहृष्टेन्द्रियमानसाः ।
श्रोतुकामाः परं धर्मं वैष्णवं धर्मशासनात् ।
हृदि कर्तुं च तद्वाक्यं प्रणेमुः शिरसा नताः ।
ततस्ते वासुदेवेन दृष्टाः सौम्येन चक्षुषा । [ 165 ]
विमुक्तपापानालोक्य प्रणम्य शिरसा हरिम् ।
पप्रच्छ केशवं धर्मं धर्मपुत्रः प्रतापवान् ।
कीदृशी ब्राह्मणस्याथ क्षत्रियस्यापि कीदृशी ।
वैश्यस्य कीदृशी देव गतिः शूद्रस्य कीदृशी ।
कथं बध्येत पाशेन ब्राह्मणस्तु यमालये । [ 170 ]
क्षत्रियो वाथ वैश्यो वा शूद्रो वा बध्यते कथम् ।
एतत्कर्मफलं ब्रूहि लोकनाथ नमोऽस्तु ते ।

वैशंपायन उवाच ।

पृष्टोऽथ केशवो ह्येवं धर्मपुत्रेण धीमता ।
उवाच संसारगतिं चातुर्वर्ण्यस्य कर्मजाम् ।

भगवानुवाच ।

शृणु वर्णक्रमेणैव धर्मं धर्मभृतां वर । [ 175 ]
नास्ति किंचिन्नरश्रेष्ठ दुष्कृतं ब्राह्मणस्य तु ।
ये स्थिताः स्युः सदाध्यात्मे संध्यां ये चाप्युपासते ।
यैश्च पूर्णाहुतिः प्राप्ता विधिवज्जुह्वते च ये ।
वैश्वदेवं च ये कुर्युः पूजयन्त्यतिथींश्च ये ।
नित्यं स्वाध्यायशीलाश्च जपयज्ञपराश्च ये । [ 180 ]
सायंप्रातर्हुताशाश्च शूद्रभोजनवर्जिताः ।
दम्भानृतविमुक्ताश्च स्वदारनिरताश्च ये ।
पञ्चयज्ञरता ये च येऽग्निहोत्रमुपासते ।
दहन्ति दुष्कृतं येषां हूयमानास्त्रयस्त्रयः ।
नष्टदुष्कृतकर्माणो ब्रह्मलोकं व्रजन्ति ते । [ 185 ]
ब्रह्मलोके पुनः कामं गन्धर्वैर्ब्रह्मगायकैः ।
उद्गीयमानाः प्रयतैः पूज्यमानाः स्वयंभुवा ।
ब्रह्मलोके प्रमोदन्ते यावदाभूतसंप्लवम् ।
क्षत्रियोऽपि स्थितो राज्ये स्वधर्मपरिपालकः ।
सम्यक्प्रजाः पालयिता षड्भागनिरतः सदा । [ 190 ]
यज्ञदानरतो धीरः स्वदारनिरतः सदा ।
शास्त्रानुसारी तत्त्वज्ञः प्रजाकार्यपरायणः ।
विप्रेभ्यः कामदो नित्यं भृत्यानां भरणे रतः ।

of line 159. $M_2$ पुण्यं ( for सत्यं ). —( L. 158 ) $T_1$ देव- ( for देवा ). —( L. 159 ) $G_1$ $M_{2,3}$ यक्षा. $G_3$ भूतयक्षग्रहगणा ( for the prior half ). —( L. 160 ) $M_2$ बालखिल्या. —( L. 161 ) $G_2$ यथा ( for तथा ). —( L. 162 ) $G_3$ $M_4$ -समाविष्टाः. $G_3$ $M_4$ प्रहृष्टाः परमर्षयः ( for the post. half ). —( L. 164 ) $G_3$ $M_4$ तदा ( for नताः ). —( L. 165 ) $T_1$ $M_2$ तान् ( for ते ). T $M_2$ दृष्टान् ( for दृष्टाः ). Kumbh. ed. दिव्येन ( for सौम्येन ). —( L. 166 ) $M_4$ विनष्ट- ( for विमुक्त- ). $G_3$ -पापाश्च ( for -पापान् ). $G_3$ $M_4$ प्रणेमुः ( for प्रणम्य ). —( L. 167 ) $G_3$ $M_{2-4}$ धर्मान् ( for धर्मं ). —Before line 168, MSS. ins. युधिष्ठिर उवाच. —( L. 168 ) $M_4$ [अ]पि ( for [अ]थ ). $G_3$ $M_4$ कीदृशी क्षत्रियस्य वै ( for the post. half ). —( L. 169 ) $T_1$ सदृशी ( for the first कीदृशी ). —( L. 170 ) $M_4$ बद्धस्तु ( for बध्येत ). $G_3$ $M_4$ पापेन ( for पाशेन ). —( L. 171 ) $T_2$ $G_3$ विद्यते; $M_2$ बाध्यते ( for ब° ). —( L. 172 ) $G_3$ $M_{2,4}$ एतत्कथय देवेश ( for the prior half ). — $G_3$ om. the ref. —( L. 173 ) $G_3$ $M_4$ स पृष्टः केशवश्चैवं ( for the prior half ). —( L. 174 ) $G_2$ $M_3$ संस्कार- ( for संसार- ). T G $M_3$ चातुर्वर्णस्य. —( L. 175 ) $G_3$ सर्वाश्रमेण ( for वर्णक्र° ). $G_3$ $M_4$ [ए]वं. $M_{2,3}$ धर्मान् ( for धर्मं ). —( L. 176 ) $G_3$ $M_{2,4}$ ब्राह्मणस्य तु दुष्कृतं ( for the prior half ). — After line 176, $M_2$ ins.:

पञ्चयज्ञरतस्याथ नित्यं संध्योपसेविनः ।

—( L. 177 ) $M_2$ ध्याने ( for [अ]ध्यात्मे ). T $G_{1,2}$ $M_3$ नित्यय( $T_1$ नित्यं य-; $G_1$ शिखाय )ज्ञोपवीतः ( $T_2$ $G_1$ °ती ) स्यात् ( for the prior half ). —( L. 178 ) $G_2$ $M_4$ ये ( for यैश् ). T G पूर्णाहुतिं. $T_1$ $G_{1,3}$ प्राप्त-; $M_4$ प्राप्तं. $T_1$ वै ( for ये ). —( L. 179 ) $G_2$ चक्रुः ( for कुर्युः ). —( L 180 ) $G_3$ $M_4$ पंच- ( for जप- ). $G_3$ $M_4$ -परायणाः; $M_{2,3}$ -रताश्च ये ( for -पराश्च ये ). —( L. 182 ) $T_1$ -वियुक्ताश्च; $M_4$ -विनिर्मुक्ताः ( for -विमुक्ताश्च ). $G_3$ $M_{2,4}$ सदा ( for च ये ). —( L 183 ) $G_2$ $M_4$ -परा ( for -रता ). $G_3$ $M_{2,4}$ चैव ( for ये च ). $M_2$ om. the second ये. — $G_3$ om. line 184. —( L. 184 ) $M_2$ दहकं ( for दहन्ति ). $M_4$ तेषां ( for येषां ). $G_1$ हूयमानास्त्रयोऽग्नयः. —( L. 186 ) $G_3$ $M_4$ ततः; $M_3$ चिरं ( for पुनः ). $M_2$ कालं ( for कामं ). $M_4$ -गायनैः ( for °कैः ). —( L. 187 ) $G_3$ $M_{2,4}$ उपगीयमानाः ( hypermetric ) ( for उद्गीय° ). —( L. 189 ) T $G_1$ स्थिते. $G_3$ $M_4$ स्वधर्मं परिपालयन् ( for the post. half ). —( L. 190 ) $G_3$ पालयति; $M_4$ °यित्वा ( for °यिता ). $G_3$ $M_4$ स्वधर्म- ( for षड्भाग- ). —( L. 192 ) $M_4$ शास्त्रानुकारी.

सत्यसंधः शुचिर्नित्यं लोभडम्भविवर्जितः ।
क्षत्रियोऽप्युत्तमां याति गतिं देवनिषेविताम् । [ 195 ]
तत्र दिव्याप्सरोभिस्तु गन्धर्वैश्च विशेषतः ।
सेव्यमानो महातेजाः क्रीडते शक्रपूजितः ।
चतुर्युगानि वै त्रिंशत्क्रीडित्वा तत्र देववत् ।
इह मानुषलोके तु चतुर्वेदी द्विजो भवेत् ।
कृषिगोपालनिरतो धर्मान्वेषणतत्परः । [ 200 ]
दानधर्मेऽपि निरतो विप्रशुश्रूषकस्तथा ।
सत्यसंधः शुचिर्नित्यं लोभडम्भविवर्जितः ।
ऋजुः स्वदारनिरतो हिंसाद्रोहविवर्जितः ।
वणिग्धर्मान्नमुञ्चन्वै देवब्राह्मणपूजकः ।
वैश्यः स्वर्गतिमाप्नोति पूज्यमानोऽप्सरोगणैः । [ 205 ]
चतुर्युगानि वै त्रिंशत्क्रीडित्वा दश पञ्च च ।
इह मानुष्यलोके च राजा भवति वीर्यवान् ।
सुवर्णकोट्यः पञ्चाशद्रत्नानां च शतं तथा ।
हस्त्यश्वरथसंयुक्तान्महाभोगांश्च सेवते ।
त्रयाणामपि वर्णानां शुश्रूषानिरतः सदा । [ 210 ]
विशेषतस्तु विप्राणां दासवद्यस्तु तिष्ठति ।
अयाचितप्रदाता च सत्यशौचसमन्वितः ।
गुरुदेवार्चनरतः परदारविवर्जितः ।
परपीडामकृत्वैव भृत्यवर्गं बिभर्ति यः ।
शूद्रोऽपि स्वर्गमाप्नोति जीवानामभयप्रदः । [ 215 ]
स स्वर्गलोके क्रीडित्वा वर्षकोटिं महातपाः ।
इह मानुषलोके तु वैश्यो धनपतिर्भवेत् ।
एवं धर्मात्परं नास्ति महत्संसारमोक्षणम् ।
न च धर्मात्परं किंचित्पापकर्मव्यपोहनम् ।
तस्माद्धर्मः सदा कार्यो मानुष्यं प्राप्य दुर्लभम् । [ 220 ]
न हि धर्मानुरक्तानां लोके किंचिन्न दुर्लभम् ।
स्वयंभुविहितो धर्मो यो यस्येह नरेश्वर ।
स तेन क्षपयेत्पापं सम्यगाचरितेन च ।
सहजं यद्भवेत्कर्म न तत्त्याज्यं हि केनचित् ।
स एव तस्य धर्मो हि तेन सिद्धिं स गच्छति । [ 225 ]
विगुणोऽपि स्वधर्मस्तु पापकर्म व्यपोहति ।
एवमेव तु धर्मोऽपि क्षीयते पापवर्धनात् ।

युधिष्ठिर उवाच ।

भगवन्देवदेवेश श्रोतुं कौतूहलं हि मे ।
शुभस्याप्यशुभस्यापि क्षयवृद्धी यथाक्रमम् ।

भगवानुवाच ।

शृणु पार्थिव तत्सर्वं धर्मं सूक्ष्मं सनातनम् । [ 230 ]
दुर्विज्ञेयतमं नित्यमत्र भग्ना महाजनाः ।
यथैव शीतमुदकमुष्णेन बहुनावृतम् ।
भवेत्तु तत्क्षणादुष्णं शीतत्वं च विनश्यति ।
यथोष्णं वा भवेदल्पं शीतेन बहुनावृतम् ।
शीतलं तद्भवेत्सर्वमुष्णत्वं च विनश्यति । [ 235 ]
एवं तु यद्भवेद्भूरि सुकृतं वाथ दुष्कृतम् ।
तदल्पं क्षपयेच्छीघ्रं नात्र कार्या विचारणा ।

— ( L. 194 ) $T_1$ -दंभ- ( for -डम्भ- ). — After line 194, $M_2$ ins.:

क्षत्रधर्मरतः शूरो देवब्राह्मणपूजकः ।

— ( L. 195 ) $T_1$ गतिं देवर्षिसेवितां ( for the post. half ). — ( L 196 ) $M_2$ दिव्योप्सरोभिस्. $M_4$ च ( for तु ). — ( L. 198 ) $M_4$ दिवि ( for तत्र ). — ( L. 199 ) T $G_2$ $M_3$ मानुष्य- ( for °ष- ). $G_3$ इह मानुष्यके लोके ( for the prior half ). $G_3$ चतुर्वेदविदो भवेत् ( for the post. half ). — ( L. 200 ) $M_2$ कृषिर्वणिज्या गोपाल्यं ( for the prior half ) $G_3$ $M_{2.4}$ स्वधर्मान्वेषणे रतः ( for the post. half ). — ( L. 201 ) $G_3$ $M_{2.4}$ दानधर्मेष्वभिरतो ( for the prior half ). $G_2$ $M_2$ -शुश्रूषणस्; $G_3$ °णे. $G_3$ रतः ( for तथा ). — ( L 202 ) $G_3$ डंभलोभ-. — $G_3$ om. ( hapl. ) line 203. — ( L. 203 ) $M_4$ हिंसो (sic) ( for हिंसा- ). — ( L. 204 ) $G_3$ $M_2$ वणिग्धर्मम्. — ( L. 205 ) $G_3$ $M_3$ वणिक्स्व( $M_2$ वैश्यः स्व )र्गमवाप्नोति; $M_4$ वणिक्च स्वर्गमा° ( for the prior half ). — ( L. 207 ) $G_3$ $M_{2.4}$ इह मानुष्यके लोके ( $M_4$ राजन् ). — $G_3$ $M_4$ om. lines 208–209. — ( L. 208 ) $G_{1.2}$ $M_{2.3}$ सुवर्णकोट्याः. — ( L. 211 ) $G_3$ $M_{2.4}$ विशेषेण ( for °षतस् ). $M_4$ [इ]व ( for तु ). — ( L. 212 ) $G_3$ नित्यं ( for सत्य- ). — ( L. 213 ) $M_4$ -रतिः ( for -रतः ). — ( L. 216 ) $G_1$ $M_{2.4}$ वर्षकोटीर्. — ( L. 217 ) $G_3$ $M_{2.4}$ इह मानुष्यके लोके ( for the prior half ). — ( L. 218 ) $G_3$ कर्म ( for महत् ). — $G_3$ om. ( hapl. ) line 221. — ( L. 222 ) $G_3$ हि ( for [इ]ह ). — ( L. 223 ) $G_3$ हि; $M_3$ ह ( for च ). — ( L. 224 ) $M_2$ च ( for तत् ). — ( L. 226 ) T निर्गुणो ( for विगुणो ). — $G_3$ om. line 227. — ( L. 227 ) $T_1$ धर्मेण ( for धर्मोऽपि ). $T_1$ $G_2$ -कर्मणः; $T_2$ -सेवनात् ( for -वर्धनात् ). — ( L. 228 ) T परं ( for श्रोतुं ). — ( L. 229 ) $T_2$ G $M_2$ -वृद्धिर्. — ( L 230 ) $M_{2.4}$ पांडव ( for पार्थिव ). — ( L. 231 ) $T_2$ अप्रभग्ना; $G_3$ इति भग्ना; $M_4$ मतिभिन्ना ( for अत्र भग्ना ). $T_1$ मम भक्तैर्महात्मभिः ( for the post. half ). — ( L. 234 ) T $G_1$ यदोष्णं. — ( L. 235 ) $G_3$ $M_4$ शीतत्वं ( for °लं ). $G_3$ न; $M_2$ तु; $M_4$ च ( for तद् ). — ( L. 237 ) $G_3$

समत्वे सति राजेन्द्र तयोः सुकृतपापयोः ।
गूहितस्य भवेद्वृद्धिः कीर्तितस्य भवेत्क्षयः ।
ख्यापनेनानुतापेन प्रायः पापं विनश्यति । [ 240 ]
तथा कृतस्तु राजेन्द्र धर्मो नश्यति मानद ।
तावुभौ गूहितौ सम्यग्वृद्धिं यातौ न संशयः ।
तस्मात्सर्वप्रयत्नेन न पापं गूहयेद्बुधः ।
तस्मादेतत्प्रयत्नेन कीर्तयेत्क्षयकारणात् ।
तस्मात्संकीर्तयेत्पापं सत्यं धर्मं च गूहयेत् । [ 245 ]

Colophon.

वैशंपायन उवाच ।

एवं श्रुत्वा वचस्तस्य धर्मपुत्रोऽच्युतस्य तु ।
पप्रच्छ पुनरप्यन्यान्धर्मान्धर्मात्मजो हरिम् ।

युधिष्ठिर उवाच ।

वृथा च कति जन्मानि वृथा दानानि यानि च ।
वृथा च जीवितं केषां नराणां पुरुषोत्तम ।
कीदृशासु व्यवस्थासु दानं दत्तं जनार्दन । [ 250 ]
इह लोकेऽनुभवति पुरुषः पुरुषोत्तम ।
गर्भस्थे किं समश्नाति किं बाल्ये वापि केशव ।
यौवनस्थेऽपि किं कृष्ण वार्धके वापि किं भवेत् ।
सात्त्विकं कीदृशं दानं राजसं कीदृशं भवेत् ।
तामसं कीदृशं देव तर्पयिष्यति किं प्रभो । [ 255 ]
उत्तमं कीदृशं दानं मध्यमं कीदृशं भवेत् ।
अधमं कीदृशं दानं तेषां वा वद किं फलम् ।
किं दानं नयति ह्यूर्ध्वं किं गतिं मध्यमां भवेत् ।
गतिं जघन्यामथ वा देवदेव ब्रवीहि मे ।
एतदिच्छामि विज्ञातुं परं कौतूहलं हि मे । [ 260 ]
त्वदीयं वचनं सत्यं पुण्यं च मधुसूदन ।

वैशंपायन उवाच ।

एवं धर्मं प्रयत्नेन पृष्टः पाण्डुसुतेन वै ।
उवाच वासुदेवोऽथ धर्मान्धर्मात्मजस्य च ।
शृणु राजन्यथान्यायं वचनं तथ्यमुत्तमम् ।
कथ्यमानं मया पुण्यं सर्वपापव्यपोहनम् । [ 265 ]
वृथा च दश जन्मानि चत्वारि च नराधिप ।
वृथा दानानि पञ्चाशत्पञ्चैव च यथाक्रमम् ।
वृथा च जीवितं येषां ते च षट् परिकीर्तिताः ।
अनुक्रमेण सर्वाणि तानि वक्ष्यामि पार्थिव ।
धर्मघ्नानां वृथा जन्म लुब्धानां पापिनां तथा । [ 270 ]
वृथा पाकं च येऽश्नन्ति परदाररताश्च ये ।
पाकभेदकरा ये च ये च स्युः सत्यवर्जिताः ।
मृष्टमश्नाति यश्चैको दृश्यमानस्तु बान्धवैः ।
पितरं मातरं चैव उपाध्यायं गुरुं तथा ।
मातुलं मातुलानीं च यो निहन्याच्छपेत वा । [ 275 ]

क्षीयते ( for क्षपयेत् ). — ( L. 238 ) $G_3$ स च ( for सति ). — ( L. 239 ) $M_4$ गृहीतस्य ( for गूहि° ). — ( L. 241 ) $G_3$ $M_4$ भारत; $M_2$ मानव ( for °द ). — ( L. 244 ) $M_2$ यस्मादेते ( for तस्मादेतत् ). $G_3$ $M_4$ कीर्तनं क्षयकारकं; $M_2$ कीर्तिता क्षयकारिणः ( for the post. half ). — ( L. 245 ) $G_3$ $M_4$ नित्यं ( for सत्यं ). $T_1$ सम्यग्धर्मं निगूहयेत् ( for the post. half ). — Colophon. — *Sub-parvan :* T $G_1$ $M_{2-4}$ वैष्णवधर्म. — *Adhy. name* : T $G_1$ $M_{2.3}$ चातुर्वर्ण्य( $M_2$ °र्ण )विधिः. — *Adhy. no.:* $T_1$ 85; $T_2$ $G_{1.2}$ 84; $G_3$ 96; $M_2$ 2; $M_3$ 83; $M_4$ 95; $M_1$ ( *inf. lin.* ) 100. — ( L. 247 ) $M_2$ [अ]न्यं ( for [अ]न्यान् ). $G_3$ $M_4$ नृपः ( $M_4$ °प ) ( for हरिम् ). — ( L. 248 ) $G_3$ $M_{2-4}$ वा कति ( for यानि च ). — ( L. 249 ) $M_4$ जीवनं ( for जीवितं ). $G_3$ $M_4$ येषां ( for केषां ). — ( L. 250 ) $M_1$ ( *inf. lin.* ) [अ]प्यवस्थासु; Kumbh. ed. ह्यव°. $G_3$ corrupt for the prior half. — ( L. 251 ) $G_3$ $M_4$ च; $M_2$ न ( for ऽनु- ). $G_3$ पुरुषोत्तमः. — ( L. 252 ) $T_1$ गर्भस्थः. $G_3$ $M_4$ गर्भस्थे कर्म चायाति; $M_2$ °स्थे किमुपायाति ( for the prior half ). $G_{2.3}$ $M_{2.4}$ च ( for वा ). — ( L. 253 ) $G_3$ यद्वने च; $M_4$ यौवने च ( for °नस्थे ). $G_3$ $M_{2.4}$ वृद्धत्वे च ( $M_2$ °त्वेपि ) ( for वार्धके वा ). $M_2$ च ( for [अ]पि ). — $M_4$ om. ( hapl. ) line 254. — ( L. 255 ) $G_1$ अधमं ( for तामसं ). $T_1$ $G_1$ दानं; $M_2$ देवांस् ( for देव ). $M_{2.3}$ कं ( for किं ). $T_1$ $G_1$ तेषां वा किं फलं भवेत् ( for the post. half ). — $T_1$ $G_1$ om. lines 256–257. — ( L. 257 ) $T_2$ $G_2$ $M_2$ किं फलं भवेत्; $M_3$ किं भवेत्फलं ( for वद किं फलम् ). $M_4$ तेषां यादव किं फलं. — ( L. 258 ) $G_{2.3}$ $M_{2.3}$ ह्यूर्ध्वां. $G_3$ $M_{2.3}$ गतिं किं ( by transp. ). — ( L. 259 ) $T_1$ ते ( for मे ). — ( L. 262 ) $G_2$ $M_{2.4}$ धर्मः. — ( L. 263 ) $G_3$ $M_{2.4}$ सः ( for च ). — Before line 264, MSS. ins. भगवानुवाच. — ( L. 264 ) $M_3$ यथा न्याय्यं. — ( L. 268 ) $G_3$ चेज् ( for the first च ). — ( L. 269 ) $G_3$ $M_{2.4}$ पांडव ( for पार्थिव ). — ( L. 270 ) $G_3$ $M_4$ तथा ( for वृथा ). — ( L. 271 ) $T_1$ चान्नं ( for पाकं ). $G_2$ -पाक- ( for -दार- ). — $G_3$ reads line 273 after line 276. — ( L. 273 ) T $G_1$ क्लिश्यमान- ( $T_1$ °नै )स् ( for दृश्य° ). — ( L. 274 ) $M_2$ गुरुस्

ब्राह्मणश्चैव यो भूत्वा संध्योपासनवर्जितः ।
निर्ब्रह्मो निःस्वधश्चैव शूद्राणामन्नभुग्द्विजः ।
मम वा शंकरस्यापि ब्रह्मणो वा युधिष्ठिर ।
अथ वा ब्राह्मणानां तु ये न भक्ता नराधमाः ।
वृथा जन्मान्यथैतेषां पापिनां विद्धि पाण्डव । [ 280 ]
अश्रद्धया च यद्दत्तमवमानेन वापि यत् ।
डम्भार्थमपि यद्दत्तं यत्पाषण्डिहृतं नृप ।
शूद्राचाराय यद्दत्तं यद्दत्वा चानुकीर्तितम् ।
रोषयुक्तं तु यद्दत्तं यद्दत्तमनुशोचितम् ।
डम्भार्जितं च यद्दत्तं यच्च वाप्यनृतार्जितम् । [ 285 ]
ब्राह्मणस्वं च यद्दत्तं चौर्येणाप्यार्जितं च यत् ।
अभिशस्ताहृतं यत्तु यद्दत्तं पतिते द्विजे ।
निर्ब्रह्माभिहृतं यत्तु यद्धृतं सर्वयाचकैः ।
व्रात्यैस्तु यद्धृतं दानमारूढपतितैश्च यत् ।
यद्दत्तं स्वैरिणीभर्तुः श्वशुरानुवर्तिने । [ 290 ]
यद्ग्रामयाचकहृतं यत्कृतघ्नहृतं तथा ।
उपपातकिने दत्तं वेदविक्रयिणे च यत् ।
स्त्रीजिताय च यद्दत्तं व्यालग्राहिहृतं च यत् ।
पुरोहिताय यद्दत्तं चिकित्सकहृतं च यत् ।
यद्वणिक्कर्मिणे दत्तं क्षुद्रमन्त्रोपजीविने । [ 295
यच्छूद्रजीविने दत्तं यच्च देवलकाय च ।
देवद्रव्याशिने यच्च यद्दत्तं चित्रकर्मिणे ।
रङ्गोपजीविने दत्तं यच्च मांसोपजीविने ।
सेवकाय च यद्दत्तं यद्दत्तं ब्राह्मणब्रुवे ।
अग्निहीने च यद्दत्तं दत्तं वार्धुषिकाय च । [ 300
यदनाचारिणे दत्तं यत्तु दत्तमनग्नये ।
असंध्योपासिने दत्तं यच्छूद्रग्रामवासिने ।
यन्मिथ्यालिङ्गिने दत्तं दत्तं सर्वाशिने च यत् ।
नास्तिकाय च यद्दत्तं धर्मविक्रयिणे च यत् ।
चारकाय च यद्दत्तं यद्दत्तं कूटसाक्षिणे । [ 305 ]
ग्रामकूटाय यद्दत्तं दानं पार्थिवपुंगव ।
वृथा भवति तत्सर्वं नात्र कार्या विचारणा ।
विप्रनामधरा ह्येते लोलुपा ब्राह्मणाधमाः ।
नात्मानं तारयन्त्येते न दातारं युधिष्ठिर ।
एतेभ्यो दत्तमात्राणि दानानि च बहून्यपि । [ 310 ]
वृथा भवन्ति राजेन्द्र भस्मन्याज्याहुतिर्यथा ।
एतेषु यत्फलं किंचिद्भविष्यति कथंचन ।
राक्षसाश्च पिशाचाश्च तद्विलुम्पन्ति हर्षिताः ।

---

(sic). —(L. 275) M2 मातुलानींश्. M4 विहन्यात् (for नि°). —(L. 276) M2.4 ब्राह्मणाश्. M4 ये (for यो). G3 ब्राह्मणांश्चैव ये हित्वा (for the prior half). M2 संध्योपायन-. G3 M4 -वर्जिताः. —(L 277) T G3 निःस्वाहो (for निर्ब्रह्मो). G3 M2.4 यश्च शूद्रान्नभुग्द्विजः. —(L. 278) G1 [अ]थ (for [अ]पि). —(L. 279) M2 च (for तु). G3 यो न भक्तो (for ये न भक्ता). G3 M4 नराधिप (for °धमाः). —(L. 280) G3 M4 पापानां. — G3 M4 om. (hapl.) from the post. half of line 281 up to the prior half of line 286. —(L. 283) M2 शूद्राचारा तु यद्दत्ता (for the prior half). —(L. 284) T M2 दोषयुक्तं; M3 योषा° (for रोष°). T2 -शोचति (for -शोचितम्). —(L. 285) M2 [अ]नृतस्थितं (for °तार्जितम्). —(L 286) G3 शौर्येण (for चौ°). M4 [उ]पार्जितं (for [अ]प्या°). —(L. 287) T1 अशस्तापहृतं; G1 प्रदिशस्ताहृतं (sic); M4 अभिशस्तहृ(*inf. lin.* °हु)तं. T1 G1.2 om. (hapl) the post. half with the prior half of line 288. —(L. 288) M4 -वृतं (for -हृतं). G3 M4 दत्तं (for धृतं). —(L. 289) G3 M4 व्रात्ये तु यत्कृतं दानम् (for the prior half). — G3 M4 om. line 290. —(L. 291) G3 M4 -याजकहृ(M4 °हु)तं. M2 यथो मया वृकहृतं (for the prior half). M2 -गतस्; M4 -हुतं (for -हृतं). —(L. 293) T1 -जीविताय (for -जिताय च). — After the prior half, T1 G3 M4 ins.:

> यद्दत्तं राजसेविने ।
> गणकाय च यद्दत्तं यच्चाकारणिकाय च ।
> वृषलीपतये दत्तं यद्दत्तं शस्त्रजीविने ।
> भृतकाय च यद्दत्तं.

[(L. 2) G3 M4 गणिकाय. G3 M4 यच्च कारणिकाय च (for the post. half).]

— T1 G3 M4 om. from the post. half of line 293 up to the prior half of line 296. —(L. 297) G3 M4 दत्तं (for यच्च). T2 G3 M4 चित्रकर्मणे. —(L. 300) G2.3 M4 आदेशिने; Kumbh. and Madras ed. अदेशिने (for अग्निहीने). M2 corrupt for the prior half. M2 वार्धकिकाय (for वार्धुषि°). —(L. 301) M2 अनाप्रमिणे (sic) (for °चारिणे). G3 M4 च (for तु). T2 अतः परं (for अनग्नये). —(L. 302) T1 G1 असंध्योपासने. — T2 om. (hapl.) the post. half of line 304 and the prior half of line 305 —(L. 305) G1 M2.3 वराकाय (for चार°). G3 M4 दत्तं यत् (for the second यद्दत्तं). —(L. 307) G3 च (for [अ]त्र). —(L. 308) T2 G1.2 M3 विप्राणामथ वा ह्येते (for the prior half). —(L. 309) M2 corrupt. —(L. 310) M2.4 सु- (for च). G3 [अ]थ (for

वृथा ह्येतानि दत्तानि कथितानि समासतः ।
जीवितं तु वृथा येषां तच्छृणुष्व युधिष्ठिर । [ 315 ]
ये मां न प्रतिपद्यन्ते शंकरं वा नराधमाः ।
ब्राह्मणान्वा महीदेवान्वृथा जीवन्ति ते नराः ।
हेतुशास्त्रेषु ये सक्ताः कुदृष्टिपथमाश्रिताः ।
वेदान्निन्दन्त्यनाचारा वृथा जीवन्ति ते नराः ।
कुशलैः कृतशास्त्राणि पठित्वा ये नराधमाः । [ 320 ]
विप्रान्निन्दन्ति यज्ञांश्च वृथा जीवन्ति ते नराः ।
ये च दुर्गां कुमारं वा वायुमग्निं जलं रविम् ।
पितरं मातरं चैव गुरुमिन्द्रं निशाकरम् ।
मूढा निन्दन्त्यनाचारा वृथा जीवन्ति ते नराः ।
विद्यमाने धने यस्तु दानधर्मविवर्जितः । [ 325 ]
मृष्टमश्नाति यश्चैको वृथा जीवति सोऽपि च ।
वृथा जीवितमाख्यातं दानकालं ब्रवीमि ते ।
तमोनिविष्टचित्तेन दत्तं दानं तु यद्भवेत् ।
स तस्य फलमश्नाति नरो गर्भगतो नृप ।
ईर्ष्यामात्सर्यसंयुक्तो डम्भार्थं चार्थकारणात् । [ 330 ]
ददाति दानं यो मर्त्यो बालभावे तदश्नुते ।
भोक्तुं भोगं न शक्तस्तु व्याधिभिः पीडितो भृशम् ।
ददाति दानं यो मर्त्यो वृद्धभावे तदश्नुते ।
श्रद्धायुक्तः शुचिः स्नातः प्रसन्नेन्द्रियमानसः ।
ददाति दानं यो मर्त्यो यौवने स तदश्नुते । [ 335 ]
स्वयं नीत्वा तु यद्दानं भक्त्या पात्रे प्रदीयते ।
तत्सार्वकालिकं विद्धि दानमामरणान्तिकम् ।
सात्त्विकं राजसं चैव तामसं च युधिष्ठिर ।
दानं दानफलं चैव गतिं च त्रिविधां शृणु ।
दानं दातव्यमित्येव मतिं कृत्वा द्विजाय वै । [ 310 ]
उपकारवियुक्ताय यद्दत्तं तद्धि सात्त्विकम् ।
श्रोत्रियाय दरिद्राय बहुभृत्याय पाण्डव ।
दीयते यत्प्रहृष्टेन तत्सात्त्विकमुदाहृतम् ।
वेदाक्षरविहीनाय यत्तु पूर्वोपकारिणे ।
समृद्धाय च यद्दत्तं तद्दानं राजसं स्मृतम् । [ 345 ]
संबन्धिने च यद्दत्तं प्रमत्ताय च पाण्डव ।
फलार्थिभिरपात्राय तद्दानं राजसं स्मृतम् ।
वैश्वदेवविहीनाय दानमश्रोत्रियाय च ।
दीयते तस्करायापि तद्दानं तामसं स्मृतम् ।
सरोषमवधूतं च क्लेशयुक्तमवज्ञया । [ 350 ]
सेवकाय च यद्दत्तं तत्तामसमुदाहृतम् ।
देवाः पितृगणाश्चैव मुनयश्चाग्नयस्तथा ।
सात्त्विकं दानमश्नन्ति तुष्यन्ति च नरेश्वर ।
दानवा दैत्यसंघाश्च ग्रहा यक्षाः सराक्षसाः ।
राजसं दानमश्नन्ति वर्जितं पितृदैवतैः । [ 355 ]
पिशाचाः प्रेतसंघाश्च कश्मला ये मलीमसाः ।
तामसं दानमश्नन्ति गतिं च त्रिविधां शृणु ।

---

[अ]पि ). —( L. 313 ) M2 corrupt. —( L. 314 ) M2, 4 दानानि ( for दत्तानि ). —( L. 315 ) T1 G2 ताञ् ( for तत् ). —( L. 316 ) M2 corrupt. G3 M4 ये च मां न प्रपद्यंते ( for the prior half ). —( L. 317 ) T1 G1 ब्राह्मणं ; T2 G3 M4 ब्रह्माणं. T1 द्विजान् ( for मही- ). M2 ब्राह्मणा वा महीं देवान्. —After line 317, G3 M2-4 ins. :

ये च निन्दन्ति मां मूढाः शंकरं वा नराधमाः ।
ब्रह्माणं वा द्विजान्देवान्वृथा जीवन्ति ते नराः ।

[ ( L. 1 ) G3 repeats line 1 after line 319. —( L. 2 ) M3 ब्राह्मणं. M4 वेदान् ( for देवान् ). ]

—( L. 318 ) G3 M4 दुष्टाः ( for सक्ताः ). —( L. 320 ) T2 G1 M2, 3 कुशीलैः ( G1 °लः ) ( for कुशलैः ). —( L. 322 ) T1 G1, 2 M3 ये दुर्गी वा कुमारीं ( M3 °रं ) वा ( for the prior half ). G3 M4 रविं जलं ( by transp. ). —( L 323 ) M2, 3 [अ]पि ( for [ए]व ). T2 G3 गुरून्नि( G3 °रूं नि )दंति शंकरं ; M4 गुरून्नित्यं निशाकरं ( for the post. half ). —( L. 325 ) T2 G3 विद्यमानधनो. —( L. 326 ) M4 [उ]त ( for च ). —( L. 327 ) M2 वदामि ( for ब्रवीमि ). —( L. 330 ) Kumbh. ed. -मत्सर- ( for -मात्सर्य- ). G1 [अ]त्र ( for [अ]र्थं ). —After line 331, T reads lines 334–335. —( L. 332 ) M2, 3 भोगी. —( L. 335 ) T1 दानं ददाति ( by transp ). —( L. 336 ) M4 नित्यं ( for नीत्वा ). —G3 om. ( hapl. ) from च युधिष्ठिर in line 338 up to गतिं च in line 339. —( L. 341 ) G3 दत्तं यत् ( by transp. ). —( L. 342 ) G3 M4 -पुत्राय ( for -भृत्याय ). —( L. 344 ) T2 प्रत्युपकारिणे ( for पूर्वोप° ). —( L. 345 ) T2 G3 M2 दानं ( for दत्तं ). —( L. 346 ) T2 G3 M2 अव्रताय ; M4 अवृद्धाय ( for प्रमत्ताय ). —( L. 347 ) T2 M4 ला( M4 लो )भादिभिर् ; G3 डंभादि° ( for फलार्थि° ). —( L. 348 ) G3 M4 यत् ( for च ). —( L. 349 ) M4 तर्जनाय ( for तस्कराय ). —( L. 350 ) G2 अवधूमं. G3 क्रोध- ; M4 कोप- ( for क्लेश- ). —( L. 351 ) M2 दानं ( for दत्तं ). G3 M2, 4 तद्दानं तामसं स्मृतं ( for the post. half ). —( L. 352 ) M4 पितरश् ( for मुनयश् ). —( L. 354 ) G2 ग्रह- ( for ग्रहा ). G3 M2, 4 च ( for स- ). —( L. 355 ) G1 M3 पितृदेवतैः. —( L. 356 ) M2 कल्मषा ( for कश्मला ). —( L. 357 ) G1, 2 M3

सात्त्विकानां तु दानानामुत्तमं फलमुच्यते ।
मध्यमं राजसानां तु तामसानां तु पश्चिमम् ।
अभिगम्योपनीतानां दानानामुत्तमं फलम् । [ 360 ]
मध्यमं तु समाहूय जघन्यं याचते फलम् ।
अयाचितप्रदाता यः स याति गतिमुत्तमाम् ।
समाहूय तु यो दद्यान्मध्यमां स गतिं व्रजेत् ।
याचितो यश्च वै दद्याज्जघन्यां स गतिं व्रजेत् ।
उत्तमा दैविका ज्ञेया मध्यमा मानुषी गतिः । [ 365 ]
गतिं जघन्यां तिर्यक्षु गतिरेषा त्रिधा स्मृता ।
पात्रभूतेषु विप्रेषु सुस्थितेष्वाहिताग्निषु ।
यत्तु निक्षिप्यते दानमक्षय्यं संप्रकीर्तितम् ।
श्रोत्रियाणां दरिद्राणां भरणं कुरु पार्थिव ।
समृद्धानां द्विजातीनां कुर्यात्तेषां च रक्षणम् । [ 370 ]
दरिद्रान्वृत्तिहीनांश्च प्रदानैः सुष्ठु पूजय ।
आतुरस्यौषधैः कार्यं नीरुजस्य किमौषधैः ।
पापं प्रतिग्रहीतारं प्रदातुरुपगच्छति ।
प्रतिग्रहीतुर्यत्पुण्यं प्रदातारमुपैति तत् ।
तस्माद्दानं सदा कार्यं परत्र हितमिच्छता । [ 375 ]
वेदविद्यावदातेषु सदा शूद्रान्नवर्जिषु ।
प्रयत्नेन विधातव्यो महादानमयो निधिः ।
येषां दाराः प्रतीक्षन्ते सहस्रस्येव लम्भनम् ।
भुक्तशेषस्य भक्तस्य तान्निमन्त्र्य पाण्डव ।
आमन्त्र्य तु निराशानि न कर्तव्यानि भारत । [ 380 ]
कुलानि क्षुदरिद्राणां तेषामाशा हता भवेत् ।
मद्भक्ता ये नरश्रेष्ठ मद्गता मत्परायणाः ।
मद्याजिनो मन्नियमास्तान्प्रयत्नेन पूजयेत् ।
तेषां तु पावनायाहं नित्यमेव युधिष्ठिर ।
उभे संध्येऽपि तिष्ठामि ह्यस्कन्नं तद्व्रतं मम । [ 385 ]
तस्मादष्टाक्षरं मन्त्रं मद्भक्तैर्वीतकल्मषैः ।
संध्याकालेषु जप्तव्यं सततं चात्मशुद्धये ।
अन्येषामपि विप्राणां किल्बिषं हि प्रणश्यति ।
उभे संध्येऽप्युपासीत तस्माद्विप्रो विशुद्धये ।
दैवे श्राद्धे च विप्रः स नियोक्तव्योऽजुगुप्सया । [ 390 ]
जुगुप्सितस्तु यः श्राद्धं दहत्यग्निरिवेन्धनम् ।
भारतं मानवो धर्मो वेदाः साङ्गाश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ।
न ब्राह्मणान्परीक्षेत दैवे कर्मणि धर्मवित् ।
महान्भवेत्परीवादो ब्राह्मणानां परीक्षणे । [ 395 ]
ब्राह्मणानां परीवादं यः कुर्यात्पुरुषाधमः ।
रासभानां शुनां योनिं गच्छेत्पुरुषदूषकः ।
श्वत्वं प्राप्नोति निन्दित्वा परीवादात्खरो भवेत् ।
कृमिर्भवत्यभिभवात्कीटो भवति मत्सरी ।

---

विविधां ( for त्रि° ). —( L. 358 ) M4 च ( for तु ). G3 ईड्यते ; M2. 4 इष्यते ; Kumbh. ed. अश्नुते ( for उच्यते ). —( L. 360 ) G3 M4 फलमुत्तमं ( by transp. ). —( L. 361 ) G3 M4 समानीय ( for °हूय ). —( L. 362 ) M2 -प्रद्ांनो ( sic ). G3 M4 वै ; M2 [ऽ]यं ( for यः ). —( L. 363 ) G3 M4 वै ( for यो ). —( L. 365 ) G3 M4 दैविकी ; M2 दैवकी. M2 मध्यमां मानुषां गतिं. —( L. 366 ) G3 जघन्यां चैव तिर्यक्षु ; M2 गतिर्जघन्या ति° ; M4 जघन्यां तिर्यक्षु गतिर् ( for the prior half ). M2 सा त्रिविधा ( for एषा त्रिधा ). G3 M4 मता ( for स्मृता ). —( L. 367 ) M2 पात्रीभूतेषु. —( L. 368 ) G3 प्रकल्प्यते ; M3 विक्षिप्यते ; M4 प्रक्षि°. M2 अक्षयं. G3 M2 संप्रकीर्त्यते ; M4 सफलं भवेत् ( for संप्रकीर्तितम् ). —( L. 370 ) G1 कुर्यास्. G3 M2–4 कार्यं तत्प( M2. 4 ते प )रिरक्षणं ( for the post. half ). —( L. 371 ) G1 M3 वित्त- ( for वृत्ति- ). T तु सु- ; G3 M4 त्वं सु- ( for सुष्ठु ). —( L. 372 ) M4 [औ]षधं. —( L. 373 ) M2 पापः. —( L. 376 ) G3 वेदविद्याप्रदानेषु ( for the prior half ). T1 G3 तथा ; T2 G2 तदा ( for सदा ). —( L. 377 ) T1 हि दातव्यो ; M2. 3 निधातव्यो. —( L. 378 ) M4 तेषां दाता ( for येषां दाराः ). G3 M4 प्रतीक्षेत ( for °क्षन्ते ). G1 [उ]प- ; M2 [ए]व ( for [इ]व ). —( L. 379 ) G3 M4 भारत ( for पाण्डव ). —( L. 380 ) M2 आमंत्र्य ( for आमन्त्र्य तु ). G3 M2. 4 पांडव ( for भारत ). —( L. 381 ) M2 तु ( for क्षु- ). T G3 च मे ; M4 हरेत् ( for भवेत् ). —( L. 382 ) G3 -श्रेष्ठा. G1. 2 मद्भक्ता ( for मद्गता ). —( L. 385 ) G1. 2 M2. 3 वि- ; G3 [ऽ]भि- ( for ऽपि ). G3 corrupt ; M2 अस्कन्नं. T G2 M3 मतं ( for व्रतं ). —( L. 388 ) Kumbh. ed. विनश्यति ( for प्रण° ). —( L. 389 ) M2 हि ( for ऽपि ). G1 विप्रा. G3 विशुद्धया. —( L. 390 ) T1 G2 स न योक्तव्यो ; T2 तु नियो° ; G3 corrupt ; M4 सन्निधियुक्तो ( for स नियोक्तव्यो ). G3 M2. 4 [ऽ]जुगुप्सितः ( for °प्सया ). —( L. 391 ) M2. 4 तत् ( for यः ). G3 जुगुप्सितं न च श्राद्धं ( for the prior half ). —( L. 392 ) G3 पुराणं ( for भारतं ). G3 M4 सांगा वे( M4 °गवे )दाश्च ; M2 सांगो वेदश्च. G2 चिकित्सिताः. —( L. 397 ) G3 M4 सहसैव ( for रासभानां ). G2. 3 M2. 4 स गच्छेद्ब्रह्मदूषकः ( for the post. half ). —( L. 398 ) G3 शुद्धं ( sic ) ( for श्वत्वं ). M4 निंदरवात्. T G1 M3. 4 परिवादात्. —( L. 399 ) T G1. 2 क्रिमिर् ( G1 °भी ) ( for कृमिर् ). G3 M4 परिभूय क्रिमिर्भवति ( hypermetric ) ( for the prior half ). Kumbh. ed. मत्सरात् ( for

दुर्वृत्ता वा सुवृत्ता वा प्राकृता वा सुसंस्कृताः। [ 400 ]
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः।
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम्।
नावमन्येत मेधावी कृशानपि कदाचन।
एतत्त्रयं हि पुरुषं निर्दहेदवमानितम्।
तस्मादेतत्प्रयत्नेन नावमन्येत बुद्धिमान्। [ 405 ]
यथा सर्वास्ववस्थासु पावको दैवतं महत्।
तथा सर्वास्ववस्थासु ब्राह्मणो दैवतं महत्।
व्यङ्गाः काणाश्च कुब्जाश्च वामनाङ्गास्तथैव च।
सर्वे दैवे नियोक्तव्या व्यामिश्रा वेदपारगैः।
मन्युं नोत्पादयेत्तेषां न चारिष्टान्समाचरेत्। [ 410 ]
मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः।
मन्युना घ्नन्ति ते शत्रून्वज्रेणेन्द्र इवासुरान्।
ब्राह्मणो हि महद्दैवं जातिमात्रेण जायते।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये।
किं पुनर्ये च कौन्तेय संध्यां नित्यमुपासते। [ 415 ]
यस्यास्येन समश्नन्ति हव्यानि त्रिदिवौकसः।
कव्यानि चैव पितरः किं भूतमधिकं तथा।
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते।
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च। [ 420 ]
आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः।
तस्मात्ते नावमन्तव्या मद्भक्ता हि द्विजाः सदा।
आरण्यकोपनिषदि ये तु पश्यन्ति मां द्विजाः।
निगूढं निष्कलावस्थं तान्प्रयत्नेन पूजय।
स्वगृहे वा प्रवासे वा दिवारात्रमथापि वा। [ 425 ]
श्रद्धया ब्राह्मणाः पूज्या मद्भक्ता ये च पाण्डव।
नास्ति विप्रसमं दैवं नास्ति विप्रसमो गुरुः।
नास्ति विप्रात्परो बन्धुर्नास्ति विप्रात्परो निधिः।
नास्ति विप्रात्परं तीर्थं न पुण्यं ब्राह्मणात्परम्।
न पवित्रं परं विप्रान्न द्विजात्पावनं परम्। [ 430 ]
नास्ति विप्रात्परो धर्मो नास्ति विप्रात्परा गतिः।
पापकर्मसमाक्षिप्तं पतन्तं नरके नरम्।
त्रायते दानमप्येकं पात्रभूते कृतं द्विजे।
बाल्याहिताग्नयो ये च शान्ताः शूद्रान्नवर्जिताः।
मामर्चयन्ति मद्भक्तास्तेभ्यो दत्तमिहाक्षयम्। [ 435 ]
प्रदानैः पूजितो विप्रो वन्दितो वापि संस्तुतः।
संभाषितो वा दृष्टो वा मद्भक्तो दिवमुन्नयेत्।
ये पठन्ति नमस्यन्ति ध्यायन्ति पुरुषोत्तमम्।
तान्स्पृष्ट्वा वाथ वा दृष्ट्वा नरः पापैः प्रमुच्यते।
मद्भक्ता मद्गतप्राणा मद्गता मत्परायणाः। [ 440 ]
बीजयोनिविशुद्धा ये श्रोत्रियाः संयतेन्द्रियाः।
शूद्रान्नविरता नित्यं ते पुनन्तीह दर्शनात्।
स्वयं नीत्वा विशेषेण दानं तेषां गृहेष्वथ।

---

°री). —(L. 402) $T_1$ वैश्यं (for सर्पं). —(L. 404) $G_3$ पुरुषान् (for °षं). —(L. 408) $G_3$ $M_4$ व्यंगान्काणांश्च कुब्जांश्च (for the prior half). $G_3$ वामनांगांस्; $M_4$ °नानांश्च. —(L. 409) $T_1$ $G_2$ देवे. $G_3$ विभोक्तव्या (for नियो°). —(L. 410) T $G_1$ मन्युना (for मन्युं न). $G_3$ $M_4$ [अ]रिष्टं; $M_2$ [अ]निष्टं (for [अ]रिष्टान्). Kumbh. ed. सदाचरेत् (for समा°). —(L. 412) $M_2$ वै (for ते). —(L. 413) $G_3$ ब्राह्मणा. $G_3$ $M_2$ महा- (for महद्). $G_3$ $M_3$ जात- (for जाति-). —(L. 414) Kumbh. ed. ब्राह्मणः (for ईश्वरः). $G_1$ -कोशानां (for -भूतानां). $M_4$ -कामस्य (for -कोशस्य). —(L. 415) $G_3$ $M_{2-4}$ संध्ये. —(L. 416) $G_3$ $M_{2.4}$ सदाश्नंति (for सम°). $T_1$ हवींषि (for हव्यानि). —(L. 417) $G_{1.3}$ $M_{2.4}$ ततः (for तथा). —(L. 419) $M_4$ वहिर् (for स हि). — After line 419, $M_2$ ins.:

सर्वस्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम्।
श्रेष्ठे नाभिजने नेदं सर्वं वै ब्राह्मणोऽर्हति।

—(L. 420) $G_3$ दत्ते (for वस्ते). —(L. 421) $G_3$ $M_{2.4}$ तु (for हि). —(L. 422) $M_2$ ये (for हि). —(L. 423) $M_3$ [ऽ]ति- (for तु). —(L. 424) $M_3$ निरूढं (for निगूढं). $M_4$ निष्कलावस्थान्. $G_3$ तत्र; $M_4$ विप्रान् (for तान्प्र-). $G_3$ $M_4$ पूजयेत् (for °य). —(L. 425) $G_3$ $M_{2.4}$ दिवारात्रौ तथैव च ($M_2$ °थापि वा) (for the post. half). —(L. 426) $G_3$ श्रद्धया ब्राह्मणः पूज्यो (for the prior half). —(L. 427) $M_4$ (*sup. lin.*) द्रव्यं (for दैवं). —(L. 428) $M_4$ विप्रसमो (for the both विप्रात्परो). —(L. 429) $M_{2.4}$ विप्रसमं (for विप्रात्परं). —(L. 430) $G_3$ $M_4$ विप्रात् (for द्विजात्). —(L. 432) $G_1$ नरः. —(L. 433) $G_1$ त्रायतो. Kumbh. ed. पात्रम् (for दानम्). $M_2$ द्विजे कृतं (by transp.); Kumbh. ed. तु तद्द्विजे. $M_4$ (*sup. lin.*) पात्रभूतकृते द्विजे. —(L. 435) $M_2$ महत्फलं; $M_4$ तदक्षयं (for इहा°). —(L. 436) $G_1$ सत्कृतः; $G_3$ $M_4$ कृत्स्नशः; Kumbh. ed. संस्कृतः (for संस्तुतः). —(L. 437) $T_1$ lacuna; $G_3$ $M_4$ विप्रो वै (for दृष्टो वा). —(L. 438) $T_1$ पुरुषान्मम; $G_3$ $M_4$ °षास्तु मां; $M_2$ °षं तु मां (for °षोत्तमम्). —(L. 439) $T_2$ सं-; $G_2$ तं (for तान्). $M_3$ दृष्ट्वा (for स्पृष्ट्वा). $G_3$ $M_{2.4}$ दृष्ट्वा वा (by transp.). —(L. 440) $T_1$ $G_1$ $M_3$ मद्गीता; $T_2$ मद्भक्ता (for मद्गता). —(L. 441)

निवापयेत्तु यद्भक्त्या तद्दानं कोटिसंमितम् ।
जाग्रतः स्वपतो वापि प्रवासेषु गृहेष्वथ । [ 445 ]
हृदये न प्रणश्यामि यस्य विप्रस्य भावतः ।
संपूजितो वा दृष्टो वा स्पृष्टो वापि द्विजोत्तमः ।
संभाषितो वा राजेन्द्र पुनात्येव नरं सदा ।
एवं सर्वास्ववस्थासु सर्वदानानि पाण्डव ।
मद्भक्तेभ्यः प्रदत्तानि स्वर्गमार्गप्रदानि वै । [ 450 ]

Colophon.

वैशंपायन उवाच ।

श्रुत्वैव सात्त्विकं दानं राजसं तामसं तथा ।
पृथक्पृथक्त्वेव गतिं फलं चापि पृथक्पृथक् ।
अवितृप्तः प्रहृष्टात्मा पुण्यं धर्मामृतं पुनः ।
युधिष्ठिरो धर्मरतः केशवं पुनरब्रवीत् ।
बीजयोनिविशुद्धानां लक्षणानि वदस्व मे । [ 455 ]
बीजदोषेण लोकेश जायन्ते च कथं नराः ।
आचारदोषं देवेश वक्तुमर्हस्यशेषतः ।
ब्राह्मणानां विशेषं च गुणदोषौ च केशव ।
चातुर्वर्ण्यस्य कृत्स्नस्य वर्तमानाः प्रतिग्रहे ।
केन विप्रा विशेषेण तरन्ते तारयन्ति च । [ 460 ]
एतान्कथय देवेश त्वद्भक्तस्य नमोऽस्तु ते ।

भगवानुवाच ।

शृणु राजन्यथावृत्तं बीजयोनिशुभाशुभम् ।
येन तिष्ठति लोकोऽयं विनश्यति च पाण्डव ।
अविप्लुतब्रह्मचर्यो यस्तु विप्रो यथाविधि ।
सुबीजं नाम विज्ञेयं तस्य बीजं शुभं भवेत् । [ 465 ]
कन्या चाक्षतयोनिः स्यात्कुलीना पितृमातृतः ।
ब्राह्मादिषु विवाहेषु परिणीता यथाविधि ।
सा प्रशस्ता वरारोहा तस्या योनिः प्रशस्यते ।
मनसा कर्मणा वाचा या भवेत्स्वैरचारिणी ।
सा कुलघ्नीति विज्ञेया तस्यां जातः श्वपाचकः । [ 470 ]
दैवे पित्र्ये तथा दाने भोजने सहभाषणे ।
शयने सहसंबन्धे न योग्या दुष्टयोनिजाः ।
न तस्माद्दुष्टयोन्यां तु गर्भमुत्पादयेद्बुधः ।
मोहेन कुरुते यस्तु कुलं हन्ति त्रिपूरुषम् ।

---

G1 द्विजा; *M2* बिज- (for बीज-). —(L. 442) T2 G3 शूद्रान्नं हिता; M2 °न्नाद्विरता. —(L. 444) G3 M2-4 निधापयेत् (for निवा°). T2 G3 M2-4 मद्भक्त्या (M4 °क्तस्) (for यद्भक्त्या). —(L. 445) G3 विवासे स्वगृहेपि वा; M2 विप्रवासे गृहेपि वा; M4 प्रवासे स्वगृहेथ वा (for the post. half). —(L. 446) G3 M4 भारत; M3 भावितः (for भावतः). —(L. 447) G3 M2.4 स (for सं-). G3 M4 स्पृष्टो (for दृष्टो). M4 दृष्टो (for स्पृष्टो). —(L. 448) T हि (for वा). G3 M4 [इ]ह (for [ए]व). —(L. 450) G3 M4 तानि स्वर्ग- (for स्वर्गमार्ग-). —Colophon. —*Sub-parvan:* T G3 M2.4 वैष्णवधर्म. —*Adhy name:* T G1.2 M2.3 ब्राह्मणप्रशंसा (M2 °शंसनं). — *Adhy. no.:* T1 86; T2 G1.2 85; G3 97; M2 3; M3 84; M4 96. —(L. 451) T1 M3 [इ]व; M2 तु (for [ए]व). M2 तामसं राजसं (by transp.). —(L. 452) G1 पृथक्त्वे च. (for °क्त्वेव). G3 M2.4 पृथक्पृथक्फलं चैव (for the prior half). G3 M2.4 गतिं (for फलं). G3 [ए]व (for [अ]पि). —(L 453) M2 प्रसन्नात्मा (for प्रहृष्टा°). M4 धर्मभृतं (for धर्मामृतं). —(L 454) G3 M4 -नित्यः (for -रतः). — Before line 455, MSS. ins. युधिष्ठिर उवाच. —(L. 456) M4 लोके च (for लोकेश). —(L. 457) T2 G3 M2.4 -दोषान् (for -दोषं). —(L. 458) M2 विशेषेण (for °षं च). —(L. 459) M2-4 चातुर्वर्ण्यस्य. M4 लोकस्य (for कृत्स्नस्य). T G2 वर्तमानान्; G1 °नात् (for °नाः). T परि- (for प्रति-). —(L. 461) T G3 M2.4 एतत् (for एतान्). —(L. 462) G1.3 M2.3 (*inf. lin.*). 4 यथातथ्यं; Madras ed. °तत्त्वं (for °वृत्त). — G2 reads line 463 twice. —(L. 463) G1 यो नि-; M3 यो न (for येन). T2 G1.2 (second time) योगाय (for लोकोऽयं). —(L. 464) M4 -ब्रह्मचर्ये. —(L. 465) G1 सुबीजा; G3 M4 स-बीज-; M2.3 सुबीजो; Kumbh. ed. स बीजं; Madras ed. स बीजी (for सुबीजं). G3 M2-4 विज्ञेयस्. —(L. 466) M2 या (for स्यात्). —(L. 467) T2 ब्राह्म्यादिषु. M2.3 परिणीय. —(L. 468) G3 प्रशांता (for प्रशस्ता). G3 M4 शुद्ध- (for तस्या). — After line 468, T G2 *ins.*:

मनसा कर्मणा वाचा या गच्छेत्परपूरुषम् ।
योनिरस्या नरश्रेष्ठ गर्भाधानं न चार्हति ।
स्वैरिण्यां यस्तु पापात्मा सन्तानार्थमिहेच्छति ।
स कुलान्पातयत्याशु दश पूर्वान्दशापरान् ।
दुष्टयोनौ तु यो मोहाद्रेतः सिञ्चति मूढधीः । [5]
तद्रेतसा समुत्पन्नः षडङ्गविदपि द्विजः ।
साधुभिः स बहिष्कार्यः श्वपाक इव पार्थिव ।

[(L. 1) T2 कर्मणा मनसा वाचा. —(L. 2) T2 G2 योनिस्तस्या. —(L. 7) G2 इति (for इव).]

— G3 M4 om. lines 469-474. —(L. 470) T1 G2 तस्या. —(L. 472) *M2 corrupt.* —(L. 475) G3

कानीनश्च सहोढश्च तथोभौ कुण्डगोलकौ । [ 475 ]
आरूढपतिताज्जातः पतितस्यापि यः सुतः ।
षडेते विश्वचण्डाला निकृष्टाः श्वपचादपि ।
यो यत्र तत्र वा रेतः सिक्त्वा शूद्रासु वा चरेत् ।
कामचारी स पापात्मा बीजं तस्याशुभं भवेत् ।
अशुभं तच्चवेद्बीजं शुद्धां योनिं न चार्हति । [ 480 ]
दूषयत्यपि तां योनिं शुना लीढं हविर्यथा ।
शूद्रयोनौ पतेद्बीजं हाहाशब्दं द्विजन्मनः ।
कुर्यात्पुरीषगर्तेषु पतितोऽस्मीति दुःखितः ।
मामधः पातयत्येष पापात्मा काममोहितः ।
अधोगतिं व्रजेत्क्षिप्रमिति शङ्क्या पतेत्तु तत् । [ 485 ]
आत्मा हि शुक्रमुद्दिष्टं दैवतं परमं महत् ।
तस्मात्सर्वप्रयत्नेन निरुन्ध्याच्छुक्रमात्मनः ।
आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महद्यशः ।
पुण्यं च मत्प्रियत्वं च लभते ब्रह्मचर्यया ।
अविलुप्तब्रह्मचर्यैर्गृहस्थाश्रममाश्रितैः । [ 490 ]
पञ्चयज्ञपरैर्धर्मः स्थाप्यते पृथिवीतले ।
सायं प्रातस्तु ये संध्यां सम्यङ्नित्यमुपासते ।
नावं वेदमयीं कृत्वा तरन्ते तारयन्ति च ।
यो जपेत्पावनीं देवीं गायत्रीं वेदमातरम् ।
न सीदेत्प्रतिगृह्णानः पृथिवीं च ससागराम् । [ 495 ]
ये चास्य दुःस्थिताः केचिद्ग्रहाः सूर्यादयो दिवि ।
ते चास्य सौम्या जायन्ते शिवाः शुभकरास्तथा ।
यत्र यत्र स्थिताश्चैव दारुणाः पिशिताशनाः ।
घोररूपा महाकाया धर्षयन्ति न तं द्विजम् ।
पुनन्तीह पृथिव्यां च चीर्णवेदव्रता नराः । [ 500 ]
चतुर्णामपि वेदानां सा च राजन्गरीयसी ।
अचीर्णव्रतवेदा ये विकर्मपथमाश्रिताः ।
ब्राह्मणा नाममात्रेण तेऽपि पूज्या युधिष्ठिर ।
किं पुनर्यस्तु संध्ये द्वे नित्यमेवोपतिष्ठति ।
शीलमध्ययनं दानं शौचं मार्दवमार्जवम् । [ 505 ]
तस्माद्वेदाद्विशिष्टानि मनुराह प्रजापतिः ।
भूर्भुवः स्वरिति ब्रह्म यो वेदपरमं द्विजः ।
स्वदारनिरतो दान्तः स विद्वान्स च भूसुरः ।
संध्यामुपासते विप्रा नित्यमेव द्विजोत्तमाः ।
ते यान्ति नरशार्दूल ब्रह्मलोकं न संशयः । [ 510 ]
सावित्रीमात्रसारोऽपि वरो विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ।
सावित्रीं चैव वेदांश्च तुलयातोलयन्पुरा ।
सदेवर्षिगणाश्चैव सर्वे ब्रह्मपुरःसराः ।
चतुर्णामपि वेदानां सा हि राजन्गरीयसी । [ 515 ]
यथा विकसिते पुष्पे मधु गृह्णन्ति षट्पदाः ।
समुत्सृज्य रसं सर्वं निरर्थकमसारवत् ।
एवं गृहीता सावित्री सर्ववेदे च पाण्डव ।

कामुकश्च ( for कानीनश्च ). G3 M4 तावुभौ ( for तथोभौ ). —( L. 476 ) M4 आरूढपतितो ज्ञातः. — ( L. 477 ) G3 M4 निषिद्धाः ( for निकृष्टाः ). G1 श्वापदाद् ( for श्वपचाद् ). — ( L. 478 ) M2 सिक्त्वा शूद्रामुपाचरेत्. — ( L. 480 ) G3 M4 शुद्ध- ( for शुद्धां ). — ( L. 481 ) M2 [ए]व तद् ( for [अ]पि तां ). G3 M4 दूषयत्येव तं वहिः; Madras ed. शुद्धां हविर्भुजो ज्वालां ( for the prior half ). — ( L. 482 ) G3 तु तद्; M2 च तद्; M3.4 पतद् ( for पतेद् ). —(L. 484) G2 माधत्र: (sic) ( for मामधः ). G2 पातयेन्नैष ( for °यत्येष ). —( L. 485 ) M4 व्रजेः ( for व्रजेत् ). G3 पतेत ( for °तेत्तु ). — ( L. 486 ) M2 अमृतं दैवतं परं ( for the post. half ). -- ( L. 488 ) M4 महायशः. — ( L. 489 ) M2 पुण्यत्वं ( for पुण्यं च ). G2 M2 लभ्यते. M4 ब्रह्मचर्यवान् ( for °र्यया ). —( L. 491 ) T2 -धरैर्; M2 -रतैर् ( for -परैर् ). T2 M4 पृथिवीपते ( for °तले ). —( L. 492 ) G3 एवं ( for सायं ). — ( L. 493 ) M2 स्नानं ( for नावं ). G3 वेदमयां. G3 M4 तारयंति तरंति च. — ( L. 495 ) G2 नासीदेत्. — ( L. 496 ) G3 M3.4 च स्युर् ( for चास्य ). T G2 सूर्योदयो. G3 ग्रहाः सूर्योदयादिव. —( L. 497 ) G3 ग्रहाः; M3 शिल्पाः ( for शिवाः ). G3 स्मृताः ( for तथा ). — ( L. 498 ) G3 ये च ( for चैव ). — ( L. 499 ) G3 दर्पयंति ( for धर्ष° ). — ( L. 500 ) G3 M2 हि ( for [इ]ह ). G3 M4 हि; M2 वै ( for च ). G1 -देव- ( for -वेद- ). G2 M3 द्विजाः ( for नराः ). — G3 M2-4 om. line 501. — ( L. 501 ) G1.2 हि ( for च ). — ( L. 502 ) M2 अचीर्णवेदमता ये. T G1 -फलम् ( for -पथम् ). — ( L. 503 ) M4 नराधिप ( for युधिष्ठिर ). — ( L. 504 ) G3 M4 च ( for तु ). T M3 [अ]वतिष्ठति ( T1 °ते ); M4 [उ]पतिष्ठते. — ( L. 506 ) T वेदान्; G3 वेद-; M4 एतान् ( for वेदाद् ). T G3 M4 विशिष्टान्वै ( for °ष्टानि ). — ( L. 507 ) T G1 -निरतं ( T1 °तो ) ( for -परमं ). — ( L. 509 ) G1 उपासिता. G2 ये वै; M2 चैव ( for विप्रा ). M4 नियमेन ( for नित्यमेव ). — ( L. 511 ) G3 स- ( for सु- ). — ( L. 513 ) G3 M2-4 [अ]तुलयन्. — ( L. 514 ) M2.4 देवा ऋषि- ( for स देवर्षि- ). — ( L. 515 ) M2 जाता ( for राजन् ). — T1 G1.2 om. line 517. — ( L. 518 ) M2 देवैर्वेदेषु पांडव ( for the post. half ). — ( L. 519 ) G3 M4 एवं हि ( for तस्मात्तु ). G2 सार ( for प्राण ). —( L. 520 ) T2 G2 M2 निर्जिता.

तस्मात्तु सर्ववेदानां सावित्री प्राण उच्यते ।
निर्जीवा हीतरे वेदा विना सावित्रिया नृप । [ 520 ]
नायन्त्रितश्चतुर्वेदी शीलभ्रष्टः स कुत्सितः ।
शीलवृत्तसमायुक्तः सावित्रीपाठको वरः ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
सावित्रीं जप कौन्तेय सर्वपापप्रणाशिनीम् ।

युधिष्ठिर उवाच ।

त्रैलोक्यनाथ हे कृष्ण सर्वभूतात्मको ह्यसि । [ 525 ]
नानायोगपर श्रेष्ठ तुष्यसे केन कर्मणा ।

भगवानुवाच ।

यदि भारसहस्रं तु गुग्गुल्वादि प्रधूपयेत् ।
करोति चेन्नमस्कारमुपहारं च कारयेत् ।
स्तौति यः स्तुतिभिर्मां च ऋग्यजुःसामभिः सदा ।
न तोषयति चेद्विप्रान्नाहं तुष्यामि भारत । [ 530 ]
ब्राह्मणे पूजिते नित्यं पूजितोऽस्मि न संशयः ।
आक्रुष्टे चाहमाक्रुष्टो भवामि भरतर्षभ ।
परा मयि गतिस्तेषां पूजयन्ति च मां हि ते ।
यदहं द्विजरूपेण वसामि वसुधातले ।
यस्तान्पूजयति प्राज्ञो मद्गतेनान्तरात्मना । [ 535 ]
तमहं स्वेन रूपेण पश्यामि नरपुंगव ।
कुब्जाः काणा वामनाश्च दरिद्रा व्याधितास्तथा ।
नावमान्या द्विजाः प्राज्ञैर्मम रूपा हि ते द्विजाः ।
ये केचित्सागरान्तायां पृथिव्यां द्विजसत्तमाः ।
मम रूपं हि तेष्वेवमर्चितेष्वर्चितोऽस्म्यहम् । [ 540 ]
बहवस्तु न जानन्ति नरा ज्ञानबहिष्कृताः ।
यथाहं द्विजरूपेण वसामि वसुधातले ।
अवमन्यन्ति ये विप्रान्स्वधर्मात्पातयन्ति ते ।
प्रेषणैः प्रेषयन्ते च शुश्रूषां कारयन्ति च ।
मृताश्चात्र परत्रेमान्यमदूता महाबलाः । [ 545 ]
निकृन्तन्ति यथाकामं सूत्रमार्गेण शिल्पिनः ।
आक्रोशपरिवादाभ्यां ये रमन्ते द्विजातिषु ।
तान्मृतान्यमलोकस्थान्निपात्य पृथिवीतले ।
आक्रम्योरसि पादेन क्रूरः संरक्तलोचनः ।
अग्निवर्णैस्तु संदंशैर्यमो जिह्वां समुद्धरेत् । [ 550 ]
ये च विप्रान्निरीक्षन्ते पापाः पापेन चक्षुषा ।
अब्रह्मण्याः श्रुतेर्बाह्या नित्यं ब्रह्मद्विषो नराः ।
तेषां घोरा महाकाया वक्रतुण्डा महाबलाः ।
उद्धरन्ति मुहूर्तेन खगाश्चक्षुर्यमाज्ञया ।
यः प्रहारं द्विजेन्द्राय दद्यात्कुर्याच्च शोणितम् । [ 555 ]
अस्थिभङ्गं च यः कुर्यात्प्राणैर्वा विप्रयोजयेत् ।
सोऽनुपूर्व्येण यातीमान्नरकानेकविंशतिम् ।

---

$M_2$ वा ( for हि ). $G_3$ $M_4$ साविज्य( $M_4$ °त्र्या )या. —( L. 521 ) $G_2$ यो ( for न ). $G_3$ $M_{2.4}$ एवं हि यश्चतुर्वेदी ( $G_3$ °द्वैः ) ( for the prior half ). $M_2$ कुंडितः ( for कुत्सितः ). —( L. 522 ) $G_3$ -पारगो ( for -पाठको ). $T_1$ नरः ( for वरः ). —( L. 523 ) $G_3$ शतांबरां ( for दशावराम् ). —( L. 524 ) $M_4$ -प्रणाशनीं. —( L. 525 ) $T_1$ वार्ष्णेय; $G_3$ $M_{2.4}$ भो कृष्ण. —( L. 526 ) $G_3$ $M_{2.4}$ -योगधर ( for °पर ). $G_3$ श्रेष्ठस्. $G_3$ $M_4$ येन ( for केन ). —( L. 527 ) $G_2$ गुग्गुलादि; $G_3$ °ल्वापि; $M_{2.3}$ °ल्यापि. $G_1$ प्रदीपयेत् ( for प्रधू° ). —( L. 528 ) $G_3$ $M_{2.4}$ च ( for चेन् ). $G_3$ $M_4$ उपकारांश्; $M_2$ °हारांश्. —( L. 529 ) $G_3$ पूजयन्; $M_{2.4}$ पूजयेत् ( for स्तौति यः ). $M_3$ चैव ( for मां च ). $G_3$ $M_{2.4}$ तथा ( for सदा ). —( L. 532 ) $M_4$ आक्रुष्टे चाहमाक्रुष्टो. —( L. 533 ) $G_{1.2}$ परा गतिर्मयि तेषां; $M_3$ परा मयि कृता पूजा. $G_3$ $M_4$ हि ( for च ). $G_3$ च ( for हि ). $M_2$ च तान्सकृत्; Kumbh. ed. द्विजं हि ये ( for च मां हि ते ). —( L. 534 ) T यदा; $M_2$ यथा ( for यद् ). $G_1$ $M_3$ चरामि ( for वसामि ). —( L. 535 ) $G_3$ यस्मात् ( for यस्तान् ). $G_3$ भक्तेन ( for गतेन ). —( L. 537 ) $G_3$ $M_{3.4}$ काणाः कुब्जा ( by transp. ). T $G_{1.3}$ दरिद्र-. —( L. 538 ) T $G_{1.3}$ नावमन्या. $T_1$ $M_{2.4}$ रूपं. —( L. 540 ) $G_3$ $M_4$ रूपेषु ( for रूपं हि ). $G_3$ $M_4$ [ऽ]भवं ( for ऽस्म्यहम् ). —( L. 541 ) $M_4$ नराज्ञानतिमिरेण ( for न जानन्ति नरा ज्ञान- ). —( L. 542 ) $G_3$ $M_4$ यथा हि; Kumbh. ed. यदहं ( for यथाहं ). —( L. 543 ) $G_3$ $M_4$ विकर्मा पादयंति च; $M_{2.3}$ ( *inf. lin.* ) विकर्मोत्पादयंति च ( for the post. half ). —( L. 544 ) $G_3$ $M_4$ प्रेषयंते च सततं ( for the prior half ). $T_2$ $G_1$ $M_3$ शुश्रूषाः. —( L. 545 ) $T_2$ $G_3$ $M_4$ मृतास्तान्करपत्रेण ( for the prior half ). —( L. 546 ) $M_{2.3}$ ( *inf. lin.* ) यथाकाष्ठं ( for °कामं ). $G_2$ $M_{2-4}$ सूत्रमात्रेण. —( L. 548 ) T दूतान् ( for मृतान् ). $G_3$ $M_4$ धरणीतले ( for पृथिवी° ). —( L. 549 ) $T_2$ क्रूराः; $G_3$ $M_{2.4}$ क्रुद्धाः ( for क्रूरः ). $T_2$ $M_{2.4}$ -लोचनाः. — $M_4$ om. lines 550–553. —( L. 550 ) T $G_{1.2}$ संदश्यैर्; $M_3$ संदंशैर्. $G_2$ समुच्चरेत्. —( L. 552 ) $G_3$ च ते ( for श्रुतेर् ). —( L. 553 ) $G_3$ $M_{2.3}$ ( *inf. lin.* ) वज्रतुंडा ( for वक्र° ). —( L. 554 ) $M_2$ काकाश् ( for खगाश् ). —( L. 556 ) $G_3$ अस्थिभंगं. T $G_1$ [अ]पि ( for वि- ). —( L. 557 ) $T_1$ -पूर्वेण ( for -पूर्व्येण ). $M_3$ यात्येव; $M_3$ यात्येव ( for यातीमान् ). —( L. 558 ) T $G_3$ शूलमारोप्यते पश्चाच्; $G_1$ शूला

शूलमारोपितो गत्वा ज्वलने परिपच्यते ।
बहुवर्षसहस्राणि पच्यमानस्त्ववाक्शिराः ।
नावमुच्येत दुर्मेधा न तस्य क्षीयते गतिः । [ 560 ]
ब्राह्मणायाविचार्यैवं व्रजन्वै वधकाङ्क्षया ।
शतवर्षसहस्राणि तामिस्रे परिपच्यते ।
उत्पाद्य शोणितं गात्रात्संरम्भान्मतिपूर्वकम् ।
स पर्यायेण यातीमान्नरकानेकविंशतिम् ।
तस्मान्नाकुशलं ब्रूयान्न शुष्कां गिरमीरयेत् । [ 565 ]
न ब्रूयात्परुषां वाणीं न चैवैतानतिक्रमेत् ।
ये विप्राञ्श्रद्धया वाचा पूजयन्ति नरोत्तमाः ।
अर्चितश्च ततश्चैव तैर्भवामि न संशयः ।
तर्जयन्ति च ये विप्रान्क्रोशयन्ति च भारत ।
आक्रुष्टस्तर्जितश्चाहं तैर्भवामि न संशयः । [ 570 ]
यश्चन्दनैश्चागरुधूपदीपै-
रभ्यर्चयेत्काष्ठमयीं ममार्चाम् ।
तेनार्चितो नैव भवामि सम्य-
ग्विप्रार्चनादस्मि समर्चितोऽहम् ।
विप्रप्रसादाद्धरणीधरोऽहं [ 575 ]
विप्रप्रसादादसुराञ्जयामि ।
विप्रप्रसादाच्च सदक्षिणोऽहं
विप्रप्रसादादजितोऽहमस्मि ।

Colophon.

युधिष्ठिर उवाच ।

देवदेवेश दैत्यघ्न परं कौतूहलं हि मे ।
एतत्कथय सर्वज्ञ त्वद्भक्तस्य च केशव । [ 580 ]
मानुषस्य च लोकस्य धर्मलोकस्य चान्तरम् ।
कीदृशं किंप्रमाणं वा किमधिष्ठानमेव च ।
तरन्ति मानुषा देव केनोपायेन माधव ।
त्वगस्थिमांसनिर्मुक्ते पञ्चभूतविवर्जिते ।
कथयस्व महादेव सुखदुःखमशेषतः । [ 585 ]
जीवस्य कर्मलोकेषु कर्मभिस्तु शुभाशुभैः ।
अनुबद्धस्य तैः पाशैर्नीयमानस्य दारुणैः ।
मृत्युदूतैर्दुराधर्षैर्घोरैर्घोरपराक्रमैः ।
वध्यस्याक्षिप्यमाणस्य विद्रुतस्य यमाज्ञया ।
पुण्यपापकृतं तिष्ठेत्सुखदुःखमशेषतः । [ 590 ]
यमदूतैर्दुराधर्षैर्नीयते वा कथं पुनः ।
किं वा तत्र गता देव कर्म कुर्वन्ति मानवाः ।
कथं धर्मपरा यान्ति देवताद्विजपूजकाः ।
कथं वा पापकर्माणो यान्ति प्रेतपुरं नराः ।

---

दानेपि ये पश्चात् ( for the prior half ). G3 M4 ज्वलनेनापि दह्यते; M2. 3 ज्वा( M3 [ *inf. lin.* ] जा )लेन तु निचर्च्यते. — ( L. 559 ) M1 पश्यमानस् ( for पच्य° ). M2 चर्च्यमानं त्ववाक्शिरः. — ( L. 560 ) G1 च मुच्यंति; G3 M4 [अ]वमुंचति; M2. 3 [अ]वमुच्यति ( for °च्येत ). T1 क्रियते; G2 [आ]क्षीयते ( for क्षी° ). T1 G2 M2 मतिः ( for गतिः ). — ( L. 561 ) G1 विचार्यैव; G3 [अ]कुरुते; M2 पशुवैव; M3 [अ]वगूर्यैव; M4 [अ]पकार्यैव ( for [अ]विचार्यैवं ). G3 पुरुषो; M2. 3 संरंभाद्; M4 व्रजति ( for व्रजन्वै ). — ( L. 562 ) M2. 3 शतं ( for शत- ). G1 -तप्यते ( for -पच्यते ). — ( L. 564 ) M2. 3 यात्येव ( for यातीमान् ). — ( L. 565 ) T1 ईरयेद्गिरं ( by transp. ); G1 ईरयेत्क्वचित्. — ( L 566 ) T G2 M3 [ए]नान् ( for [ए]तान् ). — ( L. 567 ) G2 M4 शुद्धया; Kumbh. ed. श्लक्ष्णया ( for श्रद्धया ). M2 पूरयंति ( for पूज° ). G3 नरोत्तम. — ( L. 568 ) M2. 4 स्तुतश्च ( for ततश्च ). G3 M2 4 युधिष्ठिर ( for न संशयः ). — ( L. 569 ) G2 न पूजयंति ये विप्रान्. T1 G1 क्रोधयंति ( for क्रोश° ). — ( L. 571 ) M1 सागरु- ( for चागरु- ). — ( L. 572 ) G1 काष्ठमयां; M2 लोहमयीं. T2 महार्चां. — ( L. 573 ) G3 सत्यं ( for सम्यग् ). — ( L. 574 ) M2 corrupt. G3 M1 विप्रार्चनादर्चितोहं भवामि. — ( L. 577 ) G1 सु- ( for स- ). — ( L. 578 ) G3 दयितो ( for अजितो ). — Colophon. — *Sub-parvan :* T G1. 2 M2-4 वैष्णवधर्मं. — *Adhy. name :* M2 कृत्याकृत्यविधिः. — *Adhy. no. :* T1 87; T2 G1. 2 86; G3 98; M2 4; M3 85; M4 97. — ( L. 579 ) T G2 कौतुहलं. — ( L. 580 ) G3 M2. 4 जनार्दन ( for च केशव ). — M4 om. lines 581-583. — ( L. 581 ) G3 M2 मनुष्यस्य. — ( L. 582 ) T वै; M2 च ( for वा ). G3 वा ( for च ). — ( L. 583 ) G3 केन वा ( for मानुषा ). — ( L. 584 ) M2 -निर्मुक्तः. M4 मानुष्ये च विनिर्मुक्ते ( for the prior half ). — ( L 586 ) T2 G3 M2. 3 जीवस्य स( G3 य )मलोके तु ( M3 °केषु ) ( for the prior half ). G3 च ( for तु ). — M4 om. lines 587-590. — ( L. 587 ) G2 -बद्धस्तु; G3 -रूपस्य ( for -बद्धस्य ). G2 नीयमानस्तु. — G1 om. ( hapl. ) from the post. half of line 588 up to the prior half of line 591. — ( L. 589 ) T1 G2 वद्धस्याप्यप्रमाणस्य ( for the prior half ). T2 M2 विधूतस्य ( for विद्रु° ). — ( L. 590 ) G2 -कृता; G3 -कृतस् ( for -कृतं ). M2 पुण्यपापैः कथं तिष्ठेत्; Kumbh. ed. °पापकृदातिष्ठेत् ( for the prior half ). — ( L. 592 ) M2 गता देवाः; M4 महादेव. — ( L. 593 ) G3 M2. 4 धर्मरता

किं रूपं किं प्रमाणं वा वर्णः को वास्य केशव । [ 595 ]
जीवस्य गच्छतो नित्यं यमलोकं ब्रवीहि मे ।

भगवानुवाच ।

शृणु राजन्यथावृत्तं यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं कथयिष्यामि मद्भक्तस्य नरेश्वर ।
षडशीतिसहस्राणि योजनानां युधिष्ठिर ।
मानुष्यस्य च लोकस्य यमलोकस्य चान्तरम् । [ 600 ]
न तत्र वृक्षच्छाया वा न तटाकं सरोऽपि वा ।
न वाप्यो दीर्घिका वापि न कूपो वा युधिष्ठिर ।
न मण्टपं सभा वापि न प्रपा न निकेतनम् ।
न पर्वतो नदी वापि न भूमेर्विवरं क्वचित् ।
न ग्रामो वाश्रमो वापि नोद्यानं वा वनानि च । [ 605 ]
न किंचिदाश्रयस्थानं पथि तस्मिन्युधिष्ठिर ।
जन्तोर्हि प्राप्तकालस्य वेदनार्तस्य वै भृशम् ।
करणैस्त्यक्तदेहस्य प्राणैः कण्ठगतैः पुनः ।
शरीराच्चाल्यते जीवो ह्यवशो मातरिश्वना ।
निर्गतो वायुभूतस्तु षट्कोशात्तु कलेवरात् । [ 610 ]
शरीरमन्यत्तद्रूपं तद्वर्णं तत्प्रमाणकम् ।
अदृश्यं तत्प्रविष्टस्तु सोऽप्यदृष्टेन केनचित् ।
सोऽन्तरात्मा देहवतामष्टाङ्गो यस्तु संचरेत् ।
छेदनाद्भेदनाद्दाहात्ताडनाद्वा न नश्यति ।
नानारूपधरैर्घोरैः प्रचण्डैश्चण्डसाधनैः । [ 615 ]
नीयमानो दुराधर्षैर्यमदूतैर्यमाज्ञया ।
पुत्रदारमयैः पाशैः संनिरुद्धोऽवशो बलात् ।
स्वकर्मभिश्चानुगतः कृतैः सुकृतदुष्कृतैः ।
आक्रन्दमानः करुणं बन्धुभिर्दुःखपीडितैः ।
त्यक्त्वा बन्धुजनं सर्वं निरपेक्षस्तु गच्छति । [ 620 ]
मातृभिः पितृभिश्चापि भ्रातृभिर्मातुलैस्तथा ।
दारैः पुत्रैर्वयस्यैश्च रुदद्भिस्त्यज्यते पुनः ।
अदृश्यमानस्तैर्दीनैरश्रुपूर्णमुखेक्षणैः ।
स्वशरीरं परित्यज्य वायुभूतस्तु गच्छति ।
अन्धकारमपारं तं महाघोरं तमोवृतम् । [ 625 ]
दुःखान्तं दुष्प्रतारं च दुर्गमं पापकर्मणाम् ।
दुःसहार्यं दुरन्तं च दुर्निरीक्ष्यं दुरासदम् ।
दुरापमतिदुःखं च पापिष्ठानां नरोत्तम ।
ऋषिभिः कथ्यमानं तत्पारंपर्येण पार्थिव ।

---

( for °परा ). G3 M2.4 दैवत- ( for देवता- ). — ( L. 594 ) G3 M4 प्रेत- ( for पाप- ). — ( L. 595 ) G2 वै ( for the first वा ). — ( L. 596 ) M2 यमलोके. — After line 596, M4 ins. :

वैशंपायन उवाच ।
एवमुक्तः सुरश्रेष्ठः पाण्डवेन महात्मना ।
प्रत्युवाच नरश्रेष्ठं धर्मराजं जनार्दनः ।

— ( L. 597 ) G3 M2-4 -तत्त्वं ( for -वृत्तं ). M2.4 मा ( for मां ). — ( L. 598 ) G3 न संशयः ( for नरेश्वर ). — ( L. 599 ) G3 M2 -सहस्राणां. M2 योजनानि. G3 M4 शतानि च ( for युधिष्ठिर ). — ( L. 600 ) T M2 मानुषस्य. — ( L. 601 ) G3 तस्य ( for तत्र ). M4 न ( for the first वा ). — ( L. 602 ) G1 च कूपो; G3 कूपं वा; M4 कूपा वा ( for कूपो वा ). — ( L. 603 ) G1.2 वा ( for the second न ). G3 M4 निवेशनं ( for निकेतनम् ). — ( L. 605 ) T2 चाश्रितो; M2-4 नाश्रमो. G3 नोद्यानानि वनानि च; M2.4 नोद्यानं काननानि वा ( for the post. half ). — ( L. 606 ) T1 G3 विश्रम-; M2 विक्रम-; M4 आश्रम- ( for °य- ). M4 किंचिद् ( for तस्मिन् ). — ( L. 607 ) G3 M2.4 सं- ( for हि ). — ( L. 608 ) M4 कारणैस्. G1 M3 तस्य ( for त्यक्त- ). — ( L. 609 ) T1 चोद्यते; G2 याप्यते; M2.4 च्याव्यते ( for चाल्यते ). — ( L. 610 ) G3 M4 षट्कोशिक- ( for षट्कोशात्तु ). — After line 610, G3 ins. :

त्वगस्थिस्नायुमज्जानि स्वमांसरुधिराणि च ।

— ( L. 611 ) T तत्प्रमाणवत्; G1.2 °णतः. — ( L. 612 ) G2 अदृश्यस्. T G1 तं; G3 M2-4 सं- ( for तत् ). T G M4 [अ]दृष्टो न ( for °ष्टेन ). — ( L. 614 ) G3 M3 छेदनाद्दहनाद्भेदात्; M2 स देहच्छेदनाद्दाहात् ( for the prior half ). G3 M4 वि- ( for न ). — ( L. 615 ) G3 दुष्टशासनैः; M4 चंडविक्रमैः ( for °साधनैः ). — ( L. 616 ) G3 M2.4 ह्री( M4 हि )यमाणो ( for नीयमानो ). — ( L. 617 ) M3.4 स ( for सं- ). G3 M4 [ऽ]वशाद् ( for ऽवशो ). — ( L. 618 ) T2 [अ]प्यगुणः; M4 [अ]नुगतैः. G3 M2 कर्मभिश्चाप्यनुगतः ( for the prior half ). M2 स्वकैः ( for कृतैः ). — ( L. 619 ) G2.3 आक्रंदमानः. — ( L. 620 ) M4 निरपेक्षं. — ( L. 621 ) G3 M2.4 [ए]व ( for [अ]पि ). — ( L. 622 ) G3 पुत्रैर्वयस्यैर्दारैश्च. T G1 त्यजते. — ( L. 623 ) T दारैर् ( for दीनैर् ). — ( L. 625 ) G2 M3 महाघोर-. — ( L. 626 ) G3 M3 दुःखार्तं. M4 दुष्प्रकारं. M2.3 -कर्मिणः. Madras ed. दुष्प्रकारं च दुर्गमं ( for the post. half ). — ( L. 627 ) G3 M4 दुःसहं यद् ( for दुःसहार्यं ). — ( L. 628 ) G1 अपि ( for अति- ). G2.3 M2.4 -दुर्गं ( for -दुःखं ). — ( L. 629 ) T2 G1.2 M3 तं ( for तत् ). — ( L. 630 ) G1 M3 श्रूयमानं; G2 M4

त्रासं जनयति प्रायः श्रूयमाणं कथास्वपि । [ 630 ]
अवश्यं चैव गन्तव्यं तदध्वानं युधिष्ठिर ।
प्राप्तकालेन संत्यज्य बन्धून्भोगान्धनानि च ।
जरायुजैरण्डजैश्च स्वेदजैरुद्भिजैस्तथा ।
जङ्गमैः स्थिरजैश्चैव गन्तव्यं यमसादनम् ।
देवासुरैर्मनुष्यैश्चैव वैवस्वतवशानुगैः । [ 635 ]
स्त्रीपुंनपुंसकैश्चापि पृथिव्यां जीवसंज्ञितैः ।
मध्यमैर्युवभिर्वापि बालैर्वृद्धैस्तथैव च ।
जातमात्रैश्च गर्भस्थैर्गन्तव्यः स महापथः ।
पूर्वाह्णे वापराह्णे वा संध्याकालेऽथ वा पुनः ।
प्रदोषे वार्धरात्रे वा प्रत्यूषे वाप्युपस्थिते । [ 640 ]
प्रवासस्थैर्वनस्थैर्वा पर्वतस्थैर्जलस्थितैः ।
क्षेत्रस्थैर्वा नभःस्थैर्वा गृहमध्यगतैरपि ।
भुञ्जद्भिर्वा पिबद्भिर्वा खादद्भिर्वा नरोत्तम ।
आसीनैर्वा स्थितैर्वापि शयनीयगतैरपि ।
जाग्रद्भिर्वा प्रसुप्तैर्वा गन्तव्यस्तु महापथः । [ 645 ]
मृत्युदूतैर्दुराधर्षैः प्रचण्डैश्चण्डशासनैः ।
आक्षिप्यमाणा ह्यवशाः प्रयान्ति यमसादनम् ।
क्वचिद्भीतैः क्वचित्त्रस्तैः प्रस्खलद्भिः क्वचित्क्वचित् ।
क्रन्दद्भिर्वेदनार्तैस्तु गन्तव्यं यमसादनम् ।
निर्भर्त्स्यमानैरुद्विग्नैर्विधूतैर्भयविह्वलैः । [ 650 ]
तुद्यमानशरीरैश्च गन्तव्यं तर्जनैः सदा ।
कण्टकाकीर्णमार्गेण तप्तवालुकपांसुना ।
दह्यमानैस्तु गन्तव्यं नरैर्दानविवर्जितैः ।
काष्ठोपलशिलाघातैर्दण्डोल्मुककशाङ्कुशैः ।
हन्यमानैर्यमपुरं गन्तव्यं धर्मवर्जितैः । [ 655 ]
मेदःशोणितपूयार्द्रैर्वक्त्रैर्गात्रैश्च सव्रणैः ।
दग्धक्षतजकीर्णैश्च गन्तव्यं जीवघातकैः ।
क्रन्दद्भिश्च रुदद्भिश्च क्रोशद्भिश्चापि विस्वनम् ।
वेदनार्तैश्च कूजद्भिर्विक्रोशद्भिश्च विस्वरम् ।
वेदनार्तैः पतद्भिश्च गन्तव्यं जीवघातकैः । [ 660 ]
भग्नपादोरुहस्ताङ्गैर्भग्नदन्तशिरोधरैः ।
छिन्नकण्ठोष्ठनासैश्च गन्तव्यं जीवघातकैः ।
शक्तिभिर्भिण्डिपालैश्च शङ्कुतोमरसायकैः ।
तुद्यमानैस्तु शूलाग्रैर्गन्तव्यं जीवघातकैः ।
श्वभिर्व्याघ्रैर्वृकैः काकैर्भक्ष्यमाणाः समन्ततः । [ 665 ]
तुद्यमानाश्च गच्छन्ति राक्षसैर्मांसखादिभिः ।
महिषैश्च मृगैश्चापि सूकरैः पृषतैस्तथा ।

---

°माणः. —( L. 631 ) $M_4$ गंतव्यस्. $T_1$ $G_2$ तथाध्वानं; $G_3$ $M_4$ तदध्वा तु. —( L. 632 ) $T_2$ भोगं. —( L. 633 ) $G_1$ अंडजैश्चैव ( hypermetric ); $G_3$ $M_2$ चांडजैश्च. $G_2$ $M_3$ उद्भिदैस्. $G_3$ अपि ( for तथा ). —( L. 634 ) $G_1$ $M_3$ जंगम-. $G_3$ $M_4$ -संज्ञैश्च ( for -जैश्चैव ). $G_3$ $M_{2.3}$ गंतव्यं हि यमालयं. —$G_1$ repeats line 635 after line 649. —( L. 635 ) $M_2$ देवासुर-. —( L. 636 ) $T_2$ $G_{1.2}$ -संस्थितैः ( for -संज्ञितैः ). —( L. 637 ) $G_1$ $M_{2.3}$ यौवनैर्; $G_2$ याचनैर् ( for युवभिर् ). $G_3$ $M_4$ बालै( $G_3$ °ल्यै )र्वृद्धैर्वापि ( by transp. ). $M_2$ [अ]पि ( for [ए]व ). —( L. 638 ) $T_1$ सु- ( for स ). $M_2$ -पथं ( for -पथः ). —( L. 639 ) $M_2$ च ( for the first वा ). $G_3$ संधिकाले. $G_1$ यथा ( for ऽथ वा ). —( L. 640 ) $M_2$ च ( for the first वा ). —( L. 641 ) $G_3$ वन- ( for जल- ). —( L. 642 ) $T_2$ $G_1$ $M_2$ स्थलस्थैर्; $G_3$ ग्रह°; $M_4$ कुल° ( for नभः° ). Some MSS. ग्रहमध्य-. —( L. 643 ) $G_3$ $M_4$ लिखद्भिर् ( for पिब° ). $M_2$ नराधिप ( for नरोत्तम ). —( L. 644 ) $G_3$ गतैर् ( for स्थितैर् ). —( L. 645 ) $G_3$ सु-; $M_{2.4}$ स ( for तु ). —( L. 646 ) $G_3$ प्रसिद्धैश् ( for प्रचण्डैश् ). $G_3$ $M_4$ -विक्रमैः ( for -शासनैः ). —( L. 647 ) $M_4$ विवशा; Madras ed. विवशं ( for ह्यवशाः ). $G_3$ आक्षिप्यमाणो ह्यवशः ( for the prior half ). $M_{2.4}$ यांति शीघ्रं यमालयं. —( L. 648 ) T $G_{1.2}$ स्थितैः ( for भीतैः ). —( L. 650 ) $G_3$ $M_{2.4}$ विद्रुतैर्; Madras ed. विधृतैर् ( for विधूतैर् ). —( L. 651 ) $G_3$ $M_4$ कल्प्यमान- ( for तुद्य° ). $G_3$ $M_{2.4}$ तु ( for च ). $G_3$ $M_{2-4}$ स्त्रीजितैः; Kumbh. ed. तर्जितैस् ( for तर्जनैः ). T $G_{1.2}$ तथा ( for सदा ). —( L. 653 ) $G_3$ $M_4$ मंतव्यो ( for गन्तव्यं ). —( L. 654 ) T G दग्धोल्मुक- ( for दण्डो° ). —( L. 655 ) T $G_1$ $M_{2.3}$ दह्यमानैर् ( $T_1$ °नं ) ( for हन्य° ). —( L. 656 ) $M_2$ वक्त्र- ( for वक्त्रैर् ). $G_3$ $M_4$ भूषणैः ( for सव्रणैः ). —( L. 657 ) $T_2$ दंत- ( for दग्ध- ). $G_{2.3}$ $M_{2.4}$ दग्ध( $G_3$ दंड )क्षतव्रणा( $M_2$ °जा )कीर्णैर् ( for the prior half ). —$G_{1.2}$ om. line 658. —( L. 658 ) $T_1$ निक्रुद्भिश् ( for क्रन्द° ). $M_2$ आक्रंदनैश्च कूजद्भिर् ( for the prior half ). $T_1$ $M_{3.4}$ विस्वरं. $M_2$ विक्रोशद्भिश्च विस्वनं. —After line 658, $T_2$ reads line 660, repeating it in its proper place. $G_3$ $M_{2.4}$ om. ( hapl. ) line 659. —( L. 659 ) $M_3$ वेदनार्थैश्. $G_1$ क्रोशद्भिश्चैव विस्वरं ( for the post. half ). —$G_3$ om. ( hapl. ) lines 661–664. —( L. 661 ) $M_{2.3}$ -हस्ताग्रैर्. Kumbh. ed. -जंघा- ( for -दन्त- ). —( L. 662 ) $G_1$ -कंठोरु- ( for -कण्ठोष्ठ- ). $G_2$ $M_2$ छि( $M_2$ भि )न्नकर्णोष्ठनासैश्च. —( L. 663 ) $G_2$ शक्ति- ( for शङ्कु- ). —( L. 664 ) $T_1$ $G_1$ $M_4$ तुद्यमानस्तु. —( L. 665 ) $G_3$ कंकैर् ( for काकैर् ). —( L. 666 ) $M_2$ तु

भक्ष्यमाणैस्तदध्वानं गन्तव्यं मांसखादिभिः ।
सूचीसुतीक्ष्णतुण्डाभिर्मक्षिकाभिः समन्ततः ।
तुद्यमानैस्तु गन्तव्यं पापिष्ठैर्बालघातकैः । [ 670 ]
विस्रब्धं स्वामिनं मित्रं स्त्रियं वा घ्नन्ति ये नराः ।
शस्त्रैर्निर्भिद्यमानैस्तैर्गन्तव्यं यमसादनम् ।
घातयन्ति च ये जीवान्दुःखमापादयन्ति च ।
राक्षसैश्च श्वभिश्चैव भक्ष्यमाणा व्रजन्ति ते ।
ये हरन्ति च वस्त्राणि शय्याः प्रावरणानि च । [ 675 ]
ते यान्ति विद्रुता नग्नाः पिशाचा इव तत्पथम् ।
गाश्च धान्यं हिरण्यं च बलात्क्षेत्रगृहं तथा ।
ये हरन्ति दुरात्मानः परस्वं पापकारिणः ।
पाषाणैरुल्मुकैर्दण्डैः काष्ठघातैश्च झर्झरैः ।
हन्यमानैः क्षताकीर्णैर्गन्तव्यं तैर्यमालयम् । [ 680 ]
ब्रह्मस्वं ये हरन्तीह नरा नरकनिर्भयाः ।
आक्रोशन्तीह वा नित्यं प्रहरन्ति च ये द्विजान् ।
शुष्ककण्ठा निबद्धास्ते छिन्नजिह्वाक्षिनासिकाः ।
पूयशोणितदुर्गन्धा भक्ष्यन्ते काकजम्बुकैः ।
चण्डालैर्भीषणैश्चण्डैस्तुद्यमानाः समन्ततः । [ 685 ]
क्रोशन्तः करुणं घोरं गच्छन्ति यमसादनम् ।
तत्र चापि गताः पापा विष्ठाकूपेष्वनेकशः ।
जीवन्तो वर्षकोटीस्तु क्लिश्यन्ते वेदनार्दिताः ।
ततश्च मुक्ताः कालेन लोके चास्मिन्नराधमाः ।
विष्ठाक्रिमित्वं गच्छन्ति जन्मकोटिशतं नृप । [ 690 ]
विद्यमानधनैर्यैस्तु लोभडम्भानृतान्वितैः ।
श्रोत्रियेभ्यो न दत्तानि दानानि कुरुपुंगव ।
ग्रीवापाशनिबद्धास्ते हन्यमानाश्च राक्षसैः ।
क्षुत्पिपासाश्रमार्तास्तु यान्ति प्रेतपुरं नराः ।
अदत्तदाना गच्छन्ति शुष्ककण्ठास्यतालुकाः । [ 695 ]
अन्नं पानीयसहितं प्रार्थयन्तः पुनः पुनः ।
स्वामिन्बुभुक्षातृष्णार्ता गन्तुं नैवाद्य शक्नुमः ।
ममान्नं दीयतां स्वामिन्पानीयं दीयतां मम ।
इति ब्रुवन्तस्तैर्दूतैर्यापयन्ति यमालयम् ।

वैशंपायन उवाच ।

तच्छ्रुत्वा वचनं विष्णोः पपात भुवि पाण्डवः । [ 700 ]
निःसंज्ञोऽपि भयत्रस्तो मूर्छया समभिप्लुतः ।

---

( for च ) and -घातिभिः ( for -खादिभिः ). — G1 om. ( hapl. ) lines 667–668. — ( L. 667 ) T G2 M3 माहिषैश्च; G3 व्याघ्रैश्चापि ( for महिषैश्च ). G3 महिषैस्; M2 वृषभैस्; M4 नवधैस्; Madras ed. जंबुकैस् ( for पृषतैस् ). M4 तदा ( for तथा ). — ( L. 668 ) M2 तदाध्वानं ( for तदध्वानं ). T1 G2 M3 भक्ष्यमाणास्तथा( G2 °द-; M3 °दा )ध्वानं ( for the prior half ). M2 -घातिभिः ( for -खादिभिः ). — ( L 669 ) G3 सूचिभिस् ( for सूचीसु- ). T -तुंडाग्रैर् ( for °भिर् ). — ( L. 670 ) M3. 4 मधु- ( for बाल- ). G2 M2 पापिष्ठै( M2 °भि )र्मधुघातिभिः ( for the post. half ). — ( L. 671 ) G3 M4 विश्वस्तं ( for विस्रब्धं ). — ( L. 672 ) M3. 4 तु ( for तैर् ). G3 M4 तैर्यमक्षयं; M2 तैर्यमालयं ( for यमसादनम् ). — ( L. 673 ) G3 वाता ( for जीवान् ). T1 G1 पापा दुःखान्भ्रमंति च ( for the post. half ). — ( L. 674 ) Madras ed. पिशाचैश्च ( for श्वभिश्चैव ). T M2 च ( for ते ). — ( L. 675 ) G3 M3. 4 [इ]ह ( for च ). T2 G2 M3 शय्यां. — ( L. 676 ) T1 पदं; G2 M3 पुरं ( for पथम् ). — ( L. 677 ) M2 गां. M2 वा ( for the second च ). G1 पालात्; G3 तिलं; M2 वाल-; M3 खलं ( for बलात् ). G3 M2–4 क्षेत्रं ( for क्षेत्र- ). — ( L. 678 ) G3 -कर्मणः; M2 -कर्मिणः ( for -कारिणः ). — ( L. 679 ) G3 कशाघातैश्; M2 काष्ठपातैश्; M3 काष्ठाघातैश्. G1. 3 जर्झरैः; M4 जर्जरैः. — ( L. 681 ) G3 M4 -पातिनः ( for -निर्भयाः ). — ( L. 682 ) M2 आक्रोशयंति ये नित्यं ( for the prior half ). G3 जनान् ( for द्विजान् ). — ( L. 683 ) M4 कृष्णवर्णा ( for शुष्ककण्ठा ). — ( L. 684 ) T2 G3 M2. 3 -दिग्धांगा ( for -दुर्गन्धा ). G3 M2. 4 भक्ष्यमाणाश्च जंबुकैः ( for the post. half ). — ( L. 685 ) G3 M4 निर्घृणैश् ( for भीषणैश् ). M2 शुद्धमानाः ( sic ) ( for तुद्य° ). — ( L 686 ) M2 क्रोशंति. — ( L. 687 ) G3 M4 अत्रैव पतिताः पापा ( for the prior half ). — ( L. 688 ) T2 G3 M4 मज्जंतो ( G3 °ति; M4 °ते ); G2 पाल्यंते; M2 कूजंत ( for जीवन्तो ). G3 च ( for तु ). M2. 4 क्लिश्यंतो; M3 क्लेश्यंते. G1 वेदनान्ततः; G2 देवतार्दिताः. — ( L. 689 ) G3 M4 नराधिप ( for °धमाः ). — ( L. 690 ) G3 -शतान्यपि ( for -शतं नृप ). — ( L. 691 ) M3. 4 यैस् ( for यस् ). T1 G2 विद्यमाने धने यैस्तु ( for the prior half ). G3 लोभडंभानृतैरपि ( for the post. half ). — ( L. 692 ) G3 M2 दानानि बहुधा नृप ( for the post. half ). — M4 om. lines 693–695. — ( L. 693 ) G3 ग्रीवापाशैर्. M2 -निबंधास्. — ( L. 695 ) G2 -कर्णास्य-; G3 -कंठास्थि- ( for -कण्ठास्य- ). — ( L. 696 ) M4 प्रार्थयंति. — ( L. 697 ) G3 M4 भ्रातर् ( for स्वामिन् ). — ( L. 698 ) M4 स्वादु ( for स्वामिन् ). G3 M4 इति ( for मम ). — ( L. 699 ) M4 ब्रुवाणांस्. G1 M2. 3 ते; G3 M4 तान् ( for तैर् ). T2 G3 M4 दूताः; M2 दूतान्. T2 G3 M4 प्रापयंति; G1 M3 याप°; M2 पापा यांति ( for यापयन्ति ). — ( L. 701 ) M3 भयात् ( for भय- ).

ततो लब्ध्वा शनैः संज्ञां समाश्वस्तोऽच्युतेन सः ।
नेत्रे प्रक्षाल्य तोयेन भूयः केशवमब्रवीत् ।
भीतोऽस्म्यहं महादेव श्रुत्वा मार्गस्य विस्तरम् ।
केनोपायेन तन्मार्गं तरन्ति पुरुषाः सुखम् । [ 705 ]

भगवानुवाच ।

इह ये धार्मिका लोके जीवघातविवर्जिताः ।
गुरुशुश्रूषणे युक्ता देवब्राह्मणपूजकाः ।
अस्मान्मानुष्यकाल्लोकात्सभार्याः सहबान्धवाः ।
यमध्वानं तु गच्छन्ति यथावत्तं निबोध मे ।
ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पार्थिव । [ 710 ]
ये प्रयच्छन्ति विद्वद्भ्यस्ते सुखं यान्ति तत्पथम् ।
अन्नं ये च प्रयच्छन्ति ब्राह्मणेभ्यः सुसंस्कृतम् ।
श्रोत्रियेभ्यो विशेषेण प्रीत्या परमया युताः ।
ते विमानैर्महात्मानो यान्ति चित्रैर्यमालयम् ।
सेव्यमाना वरस्त्रीभिरप्सरोभिर्महापथम् । [ 715 ]
ये च नित्यं प्रभाषन्ते सत्यं निष्कल्मषं वचः ।
तेऽपि यान्त्यमलाभ्राभैर्विमानैस्तं यमालयम् ।
कपिलाद्यानि पुण्यानि गोप्रदानानि ये नराः ।
ब्राह्मणेभ्यः प्रयच्छन्ति श्रोत्रियेभ्यो विशेषतः ।
ते यान्त्यमलवर्णाभैर्विमानैर्वृषयोजितैः । [ 720 ]
वैवस्वतपुरं प्राप्य अप्सरोभिर्निषेविताः ।
उपानहौ च छत्रं च शयनान्यासनानि च ।
विप्रेभ्यो ये प्रयच्छन्ति वस्त्राण्याभरणानि च ।
ते यान्त्यश्वैर्वृषैर्वापि कुञ्जरैरप्यलंकृताः ।
धर्मराजपुरं रम्यं सौवर्णच्छत्रशोभिताः । [ 725 ]
ये च भक्ष्याणि दास्यन्ति भोज्यं पेयं तथैव च ।
स्निग्धान्नान्यपि विप्रेभ्यः श्रद्धया परया युताः ।
ते यान्ति काञ्चनैर्यानैः सुखं वैवस्वतालयम् ।
वरस्त्रीभिर्यथाकामं सेव्यमानाः सहस्रशः ।
ये च क्षीरं प्रयच्छन्ति घृतं दधि गुडं मधु । [ 730 ]
ब्राह्मणेभ्यः प्रयत्नेन श्रद्दधानाः सुसंस्कृताः ।
चक्रवाकप्रयुक्तैस्तु यानै रुक्ममयैः शुभैः ।
यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम् ।
ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च ।
हंसयुक्तैर्विमानैस्तु यान्ति धर्मपुरं नराः । [ 735 ]

---

$G_2$ $M_{2.4}$ भयसं- ( for ऽपि भय- ). $G_3$ $M_4$ निश्चेष्टो भयविह्वलः ( for the post. half ). — ( L. 702 ) $M_2$ पुनः संज्ञाः ( for शनैः संज्ञां ). $T_1$ $G_1$ समाश्वास्तो. — Before line 701, MSS. ins. युधिष्ठिर उवाच. — ( L. 704 ) $G_3$ वाक्यं सु- ; $M_4$ वाक्यस्य ( for मार्गस्य ). — ( L. 705 ) $G_3$ $M_4$ दानेन ( for [उ]पायेन ). $M_4$ यं मार्गं ( for तन्मार्गं ). — ( L. 706 ) $M_4$ य इमे ( for इह ये ). G $M_3$ -घातक- ( for -घातवि- ). — ( L. 707 ) $G_3$ $M_2$ -शुश्रूषया. — ( L. 708 ) $G_{2.3}$ $M_4$ अस्मान्मनुष्यलोकात्ते ( for the prior half ). $G_3$ च स- ( for सह- ). $M_4$ ससहायाः सबांधवाः ( for the post. half ). — ( L 709 ) $G_1$ तदध्वानं ; $G_2$ तम° ; $M_4$ यमा° ( for यम° ). $G_3$ $M_4$ ते यांति ( for गच्छन्ति ). — ( L. 710 ) T $G_1$ प्रदत्तानि ( for प्रदानानि ). $G_{1.2}$ पांडव ( for पार्थिव ). — ( L. 711 ) T G $M_2$ विप्रेभ्यस् ( for विद्वद्भ्यस् ). $G_3$ मुख्यं ( for सुखं ). $T_1$ $G_3$ $M_4$ पदं ( for पथम् ). — ( L. 712 ) $G_3$ $M_4$ च ये ( by transp. ). $M_2$ तु ( for सु- ). — ( L. 713 ) $G_3$ $M_{2.4}$ भक्त्या ( for प्रीत्या ). — ( L. 715 ) $T_1$ [अ]प्सरस्त्रीभिर् ; $M_3$ पर° ( for वर° ). $G_3$ $M_4$ अङ्कशाभिर् ( for अप्सरो° ). $G_3$ $M_4$ महापथि ; $M_2$ समंततः ( for महापथम् ). — ( L. 716 ) $G_3$ $M_4$ प्रियं ( for सत्यं ). — ( L. 717 ) $M_2$ च ( for ऽपि ). $G_3$ $M_4$ ते च यांत्यमलाभ्रां( $M_4$ °भ्रं )गैर् ; Kumbh. ed. ते यांत्यमलवर्णाभैर् ( for the prior half ). $M_{2.3}$ तु ( for तं ). $T_1$ $G_1$ $M_2$ ( *inf. lin.* ) विमानैर्वृषयोजितैः ( for the post. half ). — ( L. 718 ) $G_3$ $M_4$ कपिलादीनि दानानि श्रद्धायुक्ताश्च ये नराः. — ( L. 720 ) $G_3$ $M_{2.4}$ [आ]दित्य- ( for [अ]मल- ). $T_2$ $G_3$ $M_4$ हेमभूषितैः ; Madras ed. हेमभूषणैः ( for वृषयोजितैः ). — ( L. 721 ) $M_2$ वैवस्वतः. $G_3$ $M_{2.4}$ रम्यम् ( for प्राप्य ). Madras ed. निषेवितं. — ( L. 724 ) $G_3$ चैव ( for वापि ). $M_4$ ते यांत्यादित्यवर्णाभैः ( for the prior half ). $G_3$ $M_4$ चापि ; $M_2$ वापि ( for अपि ). $G_3$ $M_{2-4}$ अलंकृतैः. — ( L. 725 ) $G_3$ $M_4$ धनदस्य ( for धर्मराज- ). $G_2$ सुवर्ण- ; $G_3$ सौवर्णं. $G_3$ $M_4$ -भूषिताः. — ( L. 726 ) $M_2$ च पार्थिव ( for तथैव च ). — ( L. 727 ) $G_3$ स्निग्धतां च ; $M_{2.4}$ स्निग्धान्नं च ( for °न्नानि ). $T_1$ $G_1$ शुद्धया ( for श्र° ). — ( L. 728 ) $G_3$ $M_4$ वैवस्वतक्षयं. — ( L. 729 ) $T_2$ $G_3$ वार- ( for वर- ). $G_3$ $M_4$ युवतिभिः ( for यथाकामं ). $G_3$ $M_4$ समंततः ( for सहस्रशः ). — ( L. 730 ) $M_{2.3}$ गुळं ; $M_2$ ( *inf. lin.* ) क्षीरं ( for घृतं ). $G_{1.2}$ $M_2$ ( *inf. lin.* ).$_4$ गुळं ; $M_{2.3}$ घृतं ( for गुडं ). — ( L. 731 ) $G_3$ $M_4$ प्रयच्छंति ( for °त्नेन ). $G_3$ $M_{2.4}$ सुसंस्कृतं. — $T_2$ repeats line 734 after line 775. — ( L. 734 ) $G_1$ विविधानि ( for सुरभीणि ). — ( L. 735 ) $G_3$ हंसयुक्तविमानैस्ते. $G_3$ om. from the post. half up to the prior half of line 740. — ( L. 736 ) $M_4$ विविधान्नं. — Lines

ये प्रयच्छन्ति विप्रेभ्यो विचित्रान्नं घृताप्लुतम् ।
ते व्रजन्त्यमलाभ्राभैर्विमानैर्वायुवेगिभिः ।
पुरं तत्प्रेतनाथस्य नानाजनसमाकुलम् ।
पानीयं ये प्रयच्छन्ति सर्वभूतप्रजीवनम् ।
ते सुतृप्ताः सुखं यान्ति विमानैर्हंसचोदितैः । [ 740 ]
ये तिलांस्तिलधेनुं वा घृतधेनुमथापि वा ।
श्रोत्रियेभ्यः प्रयच्छन्ति सौम्यभावसमन्विताः ।
सोममण्डलसंकाशैर्यानैस्ते यान्ति निर्मलैः ।
गीयमानैस्तु गन्धर्वैर्वैवस्वतपुरं नृप ।
येषां वाप्यश्च कूपाश्च तटाकानि सरांसि च । [ 745 ]
दीर्घिकाः पुष्करिण्यश्च सजलाश्च जलाशयाः ।
यानैस्ते यान्ति चन्द्राभैर्दिव्यघण्टानिनादितैः ।
चामरैस्तालवृन्तैश्च वीज्यमाना महाप्रभाः ।
नित्यतृप्ता महात्मानो गच्छन्ति यमसादनम् ।
येषां देवगृहाणीह चित्राण्यायतनानि च । [ 750 ]
मनोहराणि कान्तानि दर्शनीयानि भान्ति च ।
ते व्रजन्त्यमलाभ्राभैर्विमानैर्वायुवेगिभिः ।
पुरं तत्प्रेतनाथस्य नानाजनसमाकुलम् ।
वैवस्वतं च पश्यन्ति सुखचित्तं सुखस्थितम् ।
यमेन पूजिता यान्ति देवसालोक्यतां ततः । [ 755 ]
देवानुद्दिश्य लोकेषु प्रपासु करकोद्धृतम् ।
शीतलं सलिलं रम्यं तृषितेभ्यो दिशन्ति ये ।
ते तु तृप्तिं परां प्राप्य सुखं यान्ति महापथम् ।
काष्ठपादुकदा यान्ति तदध्वानं सुखं नराः ।
सौवर्णमणिपीठेषु पादौ कृत्वा रथोत्तमे । [ 760 ]
आरामान्वृक्षषण्डांश्च रोपयन्ति च ये नराः ।
संवर्धयन्ति चाप्यग्राः फलपुष्पोपशोभितान् ।
वृक्षच्छायासु रम्यासु शीतलासु स्वलंकृताः ।
यान्ति ते वाहनैर्दिव्यैः पूज्यमाना मुहुर्मुहुः ।
सेव्यमानाः सुरूपाभिरुत्तमाभिः प्रयत्नतः । [ 765 ]
स्त्रीभिः कनकवर्णाभिर्यथाकामं यथासुखम् ।
अश्वयानं तु गोयानं हस्तियानमथापि वा ।
ये प्रयच्छन्ति विप्रेभ्यो विमानैः कनकोपमैः ।
सुवर्णं रजतं वापि विद्रुमं मौक्तिकं तथा ।
ये प्रयच्छन्ति ते यान्ति विमानैः काञ्चनोज्ज्वलैः । [ 770 ]
ते व्रजन्ति वरस्त्रीभिः सेव्यमाना यथासुखम् ।
भूमिदा यान्ति तं लोकं सर्वकामैः सुतर्पिताः ।
उदितादित्यसंकाशैर्विमानैर्वृषयोजितैः ।
कन्यां ये च प्रयच्छन्ति विप्राय श्रोत्रियाय च ।
दिव्यकन्यावृता यान्ति विमानैस्ते यमालयम् । [ 775 ]
सुगन्धान्गन्धसंयोगान्पुष्पाणि सुरभीणि च ।
प्रयच्छन्ति द्विजाग्रेभ्यो भक्त्या परमया युताः ।

737–738 = lines 752–753. —(L. 738) $T_1$ -जीव- (for -जन-). —(L. 739) $M_2$ has lacuna from पानीयं ते up to सर्वकामैः in line 772. $G_1$ om. (hapl.) from the post. half of line 739 up to the prior half of line 742. —(L. 740) $M_8$ -तृप्तमुखा (for -तृप्ताः सुखं). —(L. 742) $M_3$ (*sup. lin.*) शुद्ध- (for सौम्य-). —(L. 743) Kumbh. ed. सूर्य- (for सोम-). $G_1$ -संकाशा (for °शैर्). $T_1$ निर्मलाः. —(L. 744) $T_1$ $G_2$ नीयमानास् (for गीयमानैस्). $G_3$ $M_4$ नराः (for नृप). —$G_1$ om. line 746 and lines 748–749. $M_3$ om. line 749. —(L. 750) $G_2$ [इ]व (for [इ]ह). $G_3$ $M_4$ छत्राण्याभरणानि च (for the post. half). —(L. 751) $T_2$ $G_3$ भारत; $M_4$ भांत्युत (for भान्ति च). —(L. 753) $T_1$ -पदाकुलं (for -समा°). —(L. 755) $M_4$ यम- (for देव-). $G_3$ $M_4$ गताः (for ततः). —(L. 756) $G_3$ $M_4$ मृतान् (for देवान्). T सरकोद्धृतं. $G_3$ $M_3$ प्रपाशालाः समुद्धृतं (sic) (for the post. half). —(L. 758) $G_3$ च (for तु). $G_3$ $M_4$ प्राप्ताः (for प्राप्य). $T_1$ महारथं; $M_4$ यमालयं (for महापथम्). —(L. 759) $G_3$ $M_4$ तमध्वानं (for तद°). —(L. 760) $M_4$ सुवर्ण-. $G_{1,2}$ $M_3$ -पीठे तु (for -पीठेषु). $M_4$ कृत्वा पादौ (by transp.); Madras ed. पादं कृत्वा. —(L. 762) $G_3$ ये (for च). $T_1$ $G_1$ $M_3$ [अ]व्यग्रं. $M_4$ -पुष्पैश्च (for -पुष्पोप-). Madras ed. -शोभिताः. $G_1$ फलं पुष्पोपशोभितं. —(L. 763) $G_2$ स्वयंकृताः (for स्वलंकृताः). —(L. 764) $G_1$ $M_3$ यांति तैर्; $G_3$ $M_4$ यानैस्तु (for यान्ति ते). —$G_3$ om. lines 765–766. $M_4$ om. 765–768. —(L. 765) Madras ed. अकृशाभिः (for उत्तमाभिः). —$G_3$ *reads lines 767–768 after line 770.* —(L. 767) $T_2$ $G_3$ अश्वदानं तु गोदानं हस्ति(*$G_3$* मणि)-दानमथापि वा. —(L. 768) Madras ed. ते यांति (for विप्रेभ्यो). $T_1$ $G_3$ कनको($G_3$ कांचनो)ज्ज्वलैः. —(L. 769) $G_2$ विद्रुतं. $G_1$ तदा (for तथा). —(L. 770) $G_3$ $M_4$ कनकोज्ज्वलैः. —(L. 771) $G_3$ सुरस्त्रीभिः (for वर°). —(L. 772) $G_3$ $M_4$ तल्लोकं (for तं लोकं). $M_2$ *मन्वितं (for सुतर्पिताः). —(L. 773) $G_3$ विमानैर्विविधैः शुभैः; Madras ed. °नैस्ते यमालयं (for the post. half). —(L. 774) $G_3$ $M_4$ च ये (by transp.). $T_2$ $G_1$ विप्राय श्रोत्रियात्मजां; $G_3$ $M_{2,4}$ श्रोत्रियाय महात्मने (for the post. half). —(L. 775) $T_2$ $G_3$ सुरस्त्रीसेविता यांति (for the prior half). —(L. 776) $M_2$ सुगंध-. $G_3$ ये फलानि प्रयच्छंति (for the prior half). —(L. 777) $G_3$ $M_4$ द्विजाग्र्येभ्यो. $G_3$ $M_4$ ये भक्त्या परमा युताः ($M_4$ नराः); $M_3$ भक्त्या ये

सुगन्धाः सुष्ठुवेषाश्च सुप्रभाः स्रग्विभूषणाः ।
यान्ति धर्मपुरं यानैर्विचित्रैरप्यलंकृताः ।
दीपदा यान्ति यानैश्च द्योतयन्तो दिशो दश । [ 780 ]
आदित्यसदृशाकारैर्दीप्यमाना इवाग्नयः ।
गृहावसथदातारो ग्रहैः काञ्चनवेदिकैः ।
व्रजन्ति बालसूर्याभैर्धर्मराजपुरं नराः ।
जलभाजनदातारः कुण्डिकाकरकप्रदाः ।
पूज्यमाना वरस्त्रीभिर्यान्ति तृप्ता महागजैः । [ 785 ]
पादाभ्यङ्गं शिरोभ्यङ्गं पानं पादोदकं तथा ।
ये प्रयच्छन्ति विप्रेभ्यस्ते यान्त्यश्वैर्यमालयम् ।
विश्रामयन्ति ये विप्राञ्श्रान्तानध्वनि कर्शितान् ।
चक्रवाकप्रयुक्तेन यान्ति यानेन तेऽपि च ।
स्वागतेन च यो विप्रान्पूजयेदासनेन च । [ 790 ]
स गच्छति तदध्वानं सुखं परमनिर्वृतः ।
नमो ब्रह्मण्यदेवेति यो मां दृष्ट्वाभिवादयेत् ।
व्रतवच्चप्रयतो नित्यं स सुखं याति तत्पथम् ।
नमः सर्वसभाभ्यश्चेत्यभिख्याय दिने दिने ।
नमस्करोति गोभ्यो यः स सुखं याति तत्पथम् । [ 795 ]
नमोऽस्तु प्रियदत्तायेत्येवंवादी दिने दिने ।
भूमिमाक्रमते प्रातः शयनादुत्थितश्च यः ।
सर्वकामैः स तृप्तात्मा सर्वभूषणभूषितः ।
याति यानेन दिव्येन सुखं वैवस्वतालयम् ।
अनन्तराशिनो ये तु दम्भाहंकारवर्जिताः । [ 800 ]
तेऽपि सारसयुक्तेन यान्ति यानेन वै सुखम् ।
ये चाप्येकेन भुक्तेन वर्तन्ते दम्भवर्जिताः ।
हंसयुक्तैर्विमानैस्तु सुखं यान्ति यमालयम् ।
चतुर्थेन च भुक्तेन वर्तन्ते ये जितेन्द्रियाः ।
यान्ति ते धर्मनगरं यानैर्बर्हिणयोजितैः । [ 805 ]
तृतीयदिवसेनेह भुञ्जते ये जितेन्द्रियाः ।
तेऽपि हस्तिरथं यान्ति तत्पथं कनकोज्ज्वलैः ।
षष्ठाह्नकालिको यस्तु वर्षमेकं तु वर्तते ।
कामक्रोधविनिर्मुक्तः शुचिर्नित्यं जितेन्द्रियः ।
स याति कुञ्जरस्थस्तु जयशब्दरवैर्युतः । [ 810 ]
पक्षोपवासिनो यान्ति यानैः शार्दूलयोजितैः ।
धर्मराजपुरं रम्यं दिव्यस्त्रीगणसेवितम् ।
ये च मासोपवासं वै कुर्वते संयतेन्द्रियाः ।
तेऽपि सूर्योदयप्रख्यैर्यान्ति यानैर्यमालयम् ।
अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना । [ 815 ]
स यात्यग्निप्रकाशेन विमानेन यमालयम् ।
प्राणांस्त्यजति यो विप्रो मां प्रपन्नो ह्यनाशकः ।

---

परमा सुताः. —(L. 778) G3 M2–4 ते सुगंधाः सुवेषा- (M2 °लेपा )श्च ( for the prior half ). M4 -व्रताः (for -प्रभाः ). M2 सु- (for स्रग्- ). G3 M4 -भूषिताः (for -भूषणाः ). —(L. 779) G3 चापि (for यानैर्). G3 M2 अभ्यलंकृताः (M2 °तं ). —(L. 780) G3 M4 दीपयंतो (for द्योत° ). —(L. 781) M4 बालार्क- (for आदित्य- ). G3 दीपयंत (for दीप्यमाना ). Madras ed. यथा (for इव ). —(L. 782) M2–4 गृहैः (for ग्रहैः ). —(L. 784) G1 lacuna; G3 -करज- (for -करक- ). —(L 786) G3 पादासंगं (for °भ्यङ्गं ). M2 शिरोभ्यंगस्नानं (for °भ्यङ्गं पानं ). G3 M4 ततः (for तथा ). —(L. 787) T1 यथाक्रमं; T2 यथाविधि (for यमालयम् ). —(L. 788) G3 M2.4 विश्रामयति. G3 यो मर्त्ये; M2.4 यो विप्रं (for ये विप्रा॰ ). T G1 M3 अध्वान- (for अध्वनि ). G3 M2.4 श्रांतमध्वनि कर्शितं (for the post. half ). —(L. 789) G3 M4 याति. G3 M2.4 सो (for ते ). —(L. 790) M1 [ए]व (for the first च ). G3 M2.4 विप्रं (for विप्रान् ). —(L. 791) T1 तथाध्वानं; G1 तदा°; G3 M4 तम° (for तद° ). —(L. 792) G3 M2.4 -देवाय (for -देवेति ). M2 [इ]त्यात्मानं यो (for यो मां दृष्ट्वा ). G3 मा (for मां ). —(L. 793) T1 व्रतीव; G3 M4 प्रयतः; M2 प्रणमत् (for व्रतवत् ). G3 M3 सु- (for स ). T1 तत्पदं; M2 निर्वृतः (for तत्पथम् ). —(L. 794) T1 M2.3 (*sup. lin.*) -सहाभ्यश् (for -सभा° ). G3 M2 [अ]भिधाय; M4 °याय (for °ख्याय ). —G1 om. (hapl.) lines 795–796. —(L. 795) T2 M3 नित्यं गां सु- (for गोभ्यो यः स ). —G3 om. line 796. —(L. 796) M2 नमस्तुभ्यं; M4 तुभ्यं चेति (for [इ]त्येवंवादी ). —(L. 797) M4 आक्रम्यते. M2 नरः; M4 तु यः (for च यः ). —(L. 798) G3 M2–4 स सर्वकामतृप्तात्मा (for the prior half ). G1 -भूषितैः (for °तः ). —(L. 799) T G1 M3 यांति. M2 दिव्येन यानेन (by transp.). G3 सुखं वैवस्वतक्षयं (for the post. half ). —T1 om. lines 800–803. —(L. 800) G1 दंभानृतविवर्जिताः (for the post. half ). —(L. 802) G3 M4 भक्तेन (sic). —(L. 803) M2 ते चापि हंसयुक्तेन; M4 हंसयुक्तेन यानेन (for the prior half ). —(L. 804) G3 [इ]व भक्तेन; M4 [ए]व भक्तेन (for च भु° ). —(L. 805) G3 -वाजिनैः (for -यो° ). —G3 om. (hapl.) lines 806–811. —(L. 807) M2 ते च हस्तिपथैर्यांति. —(L. 808) T G2 M3 षष्ठाह्नाकालिको; G1 षष्ठान्ना°; M4 षष्ठान्न° (for षष्ठाह्न° ). —(L. 810) T2 G1 M3 कुंजरस्थैस्; M2 °रस्थं. —(L. 812) T1 G1.2 M3 दिव्यं (for रम्यं ). M4 दिव्यं स्त्रीगणसेविताः. —(L. 813) M4 तु (for च ). T2 नियतेंद्रियाः. —(L. 815) T1 अग्निप्रवेशनं यश्च (for the prior half ). G3 कुर्वते. —T1 G1 om. (hapl.) lines

स बालार्कप्रकाशेन व्रजेद्यानेन तत्पथम् ।
प्रविष्टोऽन्तर्जले यस्तु प्राणांस्त्यजति मानवः ।
सोममण्डलकल्पेन याति यानेन तत्पथम् । [ 820 ]
स्वशरीरं हि गृध्राणां मन्मना यः प्रयच्छति ।
स याति रथमुख्येन काञ्चनेन यमालयम् ।
गोकृते स्त्रीकृते चैव हता विप्रकृतेऽपि च ।
ते यान्त्यमरकन्याभिः सेव्यमाना रविप्रभाः ।
ये च कुर्वन्ति मद्भक्तास्तीर्थयात्रां जितेन्द्रियाः । [ 825 ]
ते पन्थानं महात्मानो यानैर्यान्ति सुनिर्वृताः ।
ये यजन्ति द्विजश्रेष्ठाः क्रतुभिर्भूरिदक्षिणैः ।
हंससारससंयुक्तैर्यानैस्ते यान्ति तत्पथम् ।
परपीडामकृत्वैव भृत्यान्बिभ्रति ये नराः ।
तत्पथं ते सुखं यान्ति विमानैः काञ्चनोज्ज्वलैः । [830]
ये समाः सर्वभूतेषु जीवानामभयप्रदाः ।
क्रोधलोभविनिर्मुक्ता निगृहीतेन्द्रियास्तथा ।
पूर्णचन्द्रप्रतीकाशैर्विमानैस्ते महाप्रभाः ।
यान्ति वैवस्वतपुरं देवगन्धर्वसेविताः ।
ये मामेकान्तभावेन देवं त्र्यम्बकमेव च । [ 835 ]
पूजयन्ति नमस्यन्ति स्तुवन्ति च दिने दिने ।
धर्मराजपुरं यान्ति यानैस्तेऽर्कसमप्रभैः ।
पूजितास्तत्र धर्मेण स्वयं माल्यादिभिः शुभैः ।
यान्त्येव मम लोकं वा रुद्रलोकमथापि वा ।

Colophon.

वैशंपायन उवाच ।

श्रुत्वा यमपुराध्वानं जीवानां गमनं तथा । [ 840 ]
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ।
देवदेवेश दैत्यघ्न ऋषिसंघैरभिष्टुत ।
भवान्भवकरः श्रीमान्सहस्रादित्यसप्रभ ।
सर्वसंभव सर्वज्ञ सर्वधर्मप्रवर्तक ।
सर्वदानफलं सौम्य कथयस्व ममाच्युत । [ 845 ]
दानं देयं कथं कृष्ण कीदृशाय द्विजाय वै ।
कीदृशं वा तपः कृत्वा तत्फलं कुत्र भुज्यते ।
एवमुक्तो हृषीकेशो धर्मपुत्रेण धीमता ।
उवाच धर्मपुत्राय पुण्यान्धर्मान्महोदयान् ।
शृणुष्वावहितो राजन्पूतं पापघ्नमुत्तमम् । [ 850 ]
सर्वदानफलं सौम्य न श्राव्यं पापकर्मणाम् ।
यच्छ्रुत्वा पुरुषः स्त्री वा नष्टपापः समाहितः ।
तत्क्षणात्पूततां याति पापकर्मरतोऽपि वा ।
एकाहमपि कौन्तेय भूमावुत्पादितं जलम् ।
सप्त तारयते पूर्वान्वितृष्णा यत्र गौर्भवेत् । [ 855 ]
पानीयं परमं लोके जीवानां जीवनं स्मृतम् ।

---

817–822. — ( L. 817 ) G2 M2.3 मर्त्यो ( for विप्रो ). M2.3 [ऽ]पि ( for हि ). — ( L. 819 ) G2 मन्मनाः ( for मानवः ). — ( L. 820 ) M2.3 ( *sup. lin.* ) -तल्पेन; Madras ed. -यानेन ( for -कल्पेन ). — ( L. 821 ) G3 -शरीराणि ( for °रं हि ). — ( L. 823 ) M2 वापि ( for चैव ). G1 गोग्रहे स्त्रीग्रहे चैव ( for the prior half ). G3 M4 तथा; Kumbh. ed. हत्वा ( for हता ). G1 -ग्रहेषु ( for कृतेऽपि ). T1 G2 ये; M2.3 वा ( for च ). — ( L. 824 ) T2 ये ( for ते ). — ( L. 825 ) G3 [ऽ]पि ( for च ). M4 मद्भक्त्या. — ( L 826 ) G3 M4 सुखं नराः ( for सुनिर्वृताः ). — ( L. 828 ) G3 M4 -युक्तेन ( for -संयुक्तैर् ). G3 M4 यांति यानेन तत्पथं. — ( L. 829 ) T2 G2 यो. T2 G1.2 नरः ( for नराः ). — ( L. 830 ) T2 M3 सु-; G1.2 स- ( for ते ). T2 G3 याति. — ( L. 834 ) M2 ते च ( for देव- ). G3 -पूजिताः ( for -सेविताः ). — ( L. 835 ) G3 M2.4 भक्त्या ( for देवं ). M4 वा ( for च ). — ( L. 838 ) G3 M2.4 गुणैः ( for शुभैः ). — ( L. 839 ) G1.3 [ए]वं ( for [ए]व ). Kumbh. ed. धर्म- ( for मम ). — Colophon — *Sub-parvan :* G2.3 M2–4 वैष्णवधर्म. — *Adhy. name :* T G1 यमपुराध्वानवर्णनं; M2 यमलोकवर्णनं. — *Adhy. no. :* T1 88; T2 G1.2 87; G3 99; M2 5; M3 86; M4 98. — ( L. 840 ) G3 जीवितागमनं तथा. — Before line 842, MSS. ins. युधिष्ठिर उवाच. — ( L. 842 ) G3 M4 सदा दैवैर् ( for ऋषिसंघैर् ). — After line 842, M4 reads line 846, repeating it in its proper place. — ( L. 843 ) T G1 भगवन्भगह- ( G1 °व )ञ्श्रीमन्; G2 भगवन्भवकर श्रीमन् ( hypermetric ) ( for the prior half ). M2 -संनिभ ( for -सप्रभ ). — ( L. 844 ) G3 M4 -संहार ( for -संभव ). G3 धर्मज्ञ ( for सर्वज्ञ ). — ( L. 846 ) G3 M2.4 ( both times ) कृत्वा ( for देयं ). M4 ( both times ) द्विजातये ( for °य वै ). — M4 om. line 847. — ( L. 847 ) G3 वाथ ( for कुत्र ). — ( L. 849 ) G3 M4 धर्मान्पुण्यान् ( by transp. ). — Before line 850, MSS. ins. श्रीभगवानुवाच. — ( L. 851 ) G3 M2–4 -कर्मणा ( for °णाम् ). — ( L. 852 ) G3 M4 नष्टपापाः समाहिताः. — ( L. 853 ) G3 M2.4 यांति. G3 M4 -रता अपि ( for -रतो ऽपि वा ). — ( L. 856 ) M4 परं ( for स्मृतम् ). G3 जीवानां परमं विदुः ( for the post. half ). — ( L. 857 ) G3 M2.4 शाश्वती ( for

पानीयस्य प्रदानेन तृप्तिर्भवति पाण्डव ।
पानीयस्य गुणा दिव्याः परलोके सुखावहाः ।
तत्र पुष्पोदकी नाम नदी परमपावनी ।
कामान्ददाति राजेन्द्र तोयदानं यमालये । [ 860 ]
शीतलं सलिलं तस्या अक्षय्यममृतोपमम् ।
शीततोयप्रदातॄणां भवेन्नित्यं सुखावहा ।
ये चाप्यतोयदातारः पूयस्तेषां विधीयते ।
प्रणश्यत्यम्बुपानेन बुभुक्षा च युधिष्ठिर ।
तृषितस्य न चान्नेन पिपासापि प्रणश्यति । [ 865 ]
तस्मात्तोयं सदा देयं तृषितेभ्यो विजानता ।
अग्नेर्मूर्तिः क्षितेर्योनिरमृतस्य च संभवः ।
अतोऽम्भः सर्वभूतानां मूलमित्युच्यते बुधैः ।
अद्भिः सर्वाणि भूतानि जीवन्ति प्रभवन्ति च ।
तस्मात्सर्वेषु दानेषु तोयदानं विशिष्यते । [ 870 ]
सर्वदानतपोयज्ञैर्यत्प्राप्यं फलमुत्तमम् ।
तत्सर्वं तोयदानेन प्राप्यते नात्र संशयः ।
ये प्रयच्छन्ति विप्रेभ्यस्त्वन्नदानं सुसंस्कृतम् ।
तैस्तु दत्ता स्वयं प्राणा भवन्ति भरतर्षभ ।
अन्नाद्रक्तं च शुक्लं च अन्ने जीवः प्रतिष्ठितः । [ 875 ]
इन्द्रियाणि च बुद्धिश्च पुष्णन्त्यन्नेन नित्यशः ।
अन्नहीनानि सीदन्ति सर्वभूतानि पाण्डव ।
तेजो बलं च वीर्यं च सत्त्वं रूपं द्युतिर्धृतिः ।
ज्ञानं मेधा तथायुश्च सर्वमन्ने प्रतिष्ठितम् ।
देवमानवतिर्यक्षु सर्वलोकेषु सर्वदा । [ 880 ]
सर्वकालं हि सर्वेषामन्ने प्राणाः प्रतिष्ठिताः ।
अन्नं प्रजापते रूपमन्नं प्रजननं स्मृतम् ।
सर्वभूतमयं चान्नं जीवश्चान्नमयं स्मृतम् ।
अन्नेनाधिष्ठितः प्राण अपानो व्यान एव च ।
उदानश्च समानश्च धारयन्ति शरीरिणाम् । [ 885 ]
शयनोत्थानगमनं ग्रहणाकर्षणानि च ।
सर्वसत्त्वकृतं कर्म चान्नादेव प्रवर्तते ।
चतुर्विधानि भूतानि जङ्गमानि स्थिराणि च ।
अन्नाद्भवन्ति राजेन्द्र सृष्टिरेषा प्रजापतेः ।
विद्यास्थानानि सर्वाणि सर्वयज्ञाश्च पावनाः । [ 890 ]
अन्नाद्यस्मात्प्रवर्तन्ते तस्मादन्नं परं स्मृतम् ।
देवा रुद्रादयः सर्वे पितरोऽप्यग्नयस्तथा ।
यस्मादन्नेन तुष्यन्ति तस्मादन्नं विशिष्यते ।
यस्मादन्नात्प्रजाः सर्वाः कल्पे कल्पेऽसृजत्प्रभुः ।
तस्मादन्नात्परं दानं न भूतं न भविष्यति । [895]
यस्मादन्नात्प्रवर्तन्ते धर्मार्थौ काम एव च ।
तस्मादन्नात्परं दानं नामुत्रेह च पाण्डव ।
यक्षरक्षोग्रहा नागा भूता दैत्याश्च दानवाः ।

---

ण्डव ). —(L. 858) $G_3$ $M_2$ परलोक-. —(L. 860) $G_3$ $M_4$ कामं. $T_2$ $M_{2-4}$ तोयदानां. —(L. 861) $G_3$ [अक्षय्]यम्; $M_{2-4}$ त($M_4$ य)स्याम्; Kumbh. ed. ह्यत्र (for [तस्]या). Kumbh. ed. ह्यक्षय्यम्. —(L. 862) $G_3$ $M_4$ [क्षी]र-; Madras ed. क्षीरं (for शीत-). T $G_2$ नित्य-; $G_3$ $M_4$ दिव्यं ($G_3$ °व्य-) (for नित्यं). $G_3$ $M_4$ सुखावहं. —(L. 863) $M_2$ भूयस्; $M_4$ पूयं (for पूयस्). —(L. 864) $G_3$ $M_{2.4}$ प्रशाम्यत्यंबुदा($M_4$ °पा)नेन (for the prior half). $M_2$ [अ]पि (for च). —(L. 865) $T_2$ $G_1$ $M_{2.3}$ [अ]न्येन (for [अ]न्नेन). $M_{3.4}$ वि- (for [अ]पि). —(L. 868) $G_3$ $M_4$ तत्तोयं; $M_2$ रेतोंबुः (for अतोऽम्भः). —(L. 869) $G_3$ ततः; $M_4$ अतः (for अद्भिः). —(L. 871) T प्राप्तं (for प्राप्यं). —(L. 873) $M_4$ ह्यन्नदानं सुसत्कृतं. —(L. 874) $G_3$ $M_4$ तस्माज्जाता (for तैस्तु दत्ता). $G_3$ $M_{2.4}$ पुरुषर्षभ (for भरत°). —(L. 875) $G_3$ रेतश् (for रक्तं). $M_2$ [अ]प्यन्ने (for अन्ने). —(L. 876) $T_1$ lacuna for the first च. $G_3$ [अ]र्थेन; $M_2$ [अ]न्येन (for [अ]न्नेन). $T_1$ भुज्यतः (for नित्यशः). —(L. 877) $G_3$ $M_4$ अन्नेनैव हि जीवंति (for the prior half). —(L. 878) $M_{2.4}$ रूपं (for वीर्यं). $G_3$ रूपं सत्त्वं (by transp.); $M_{2.4}$ सत्यं ($M_2$ °त्त्वं) वीर्यं. G $M_3$ धृतिर्द्युतिः (by transp.); $M_2$ बलं धृतिः. —(L. 880) $M_{2-4}$ -दानव- (for -मानव-). $T_2$ $M_{2.4}$ सर्वथा. —(L. 881) $G_{2.3}$ $M_4$ सर्वकामा (for °कालं). —(L. 882) $T_1$ $M_4$ प्रजा($M_4$ °ज्ञा)यते (for °पते). —(L. 883) $G_3$ $M_4$ [ए]व (for [अ]न्नं). $T_2$ $M_3$ जीवं (for जीवश्). $T_1$ $G_1$ $M_2$ जीवश्चान्नमयः स्मृतः; $G_3$ $M_4$ सर्वप्राणमयं स्मृतं (for the post. half). —(L. 884) $T_2$ $M_{2.3}$ [अ]धिष्ठित-. $G_3$ $M_{2.4}$ ह्यपानो (for अ°). —(L. 885) T $M_4$ शरीरिणं. —(L. 886) $G_3$ $M_{2.4}$ -गमन-. —(L. 887) $T_1$ सत्यसत्त्वं (for सर्वसत्त्व-). —(L. 888) T $G_1$ जातानि (for भू°). —(L. 889) $G_3$ सनातनी (for प्रजापतेः). —(L. 890) $G_3$ यज्ञाः सर्वे च पावकाः (for the post. half). — $T_1$ om. (hapl.) from the post. half of line 891 up to the prior half of line 896. —(L. 892) $G_3$ $M_2$ इंद्रादयः (for रुद्रा°). $G_3$ $M_4$ मुनयस् (for ऽप्यग्नयस्). —(L. 893) $G_3$ तस्माद् (for य°). $T_2$ $G_{2.3}$ परं स्मृतं (for विशिष्यते). —(L. 894) $T_2$ $G_{1.3}$ $M_4$ तस्माद् (for य°). $M_2$ अन्नं (for अन्नात्). —(L. 895) $M_2$ भूतो (for भूतं). —(L. 896) $G_3$ तस्माद्. $G_3$ $M_2$ धर्मार्थः. $M_2$ कामम्. —(L. 898) $G_3$ $M_4$ यक्षरक्षोगणा नागा; $M_{2.3}$ °ग्रहो नागा (for

50

तुष्यन्त्यन्नेन यस्मात्तु तस्मादन्नं परं भवेत् ।
परान्नमुपभुञ्जानो यत्कर्म कुरुते शुभम् । [ 900 ]
तच्छुभस्यैकभागस्तु कर्तुर्भवति भारत ।
अन्नदस्य त्रयो भागा भवन्ति पुरुषर्षभ ।
तस्मादन्नं प्रदातव्यं ब्राह्मणेभ्यो विशेषतः ।
ब्राह्मणाय दरिद्राय योऽन्नं संवत्सरं नृप ।
श्रोत्रियाय प्रयच्छेद्वै पाकभेदविवर्जितः । [ 905 ]
डम्भानृतविमुक्तस्तु परां भक्तिमुपागतः ।
स्वधर्मेणार्जितफलं तस्य पुण्यफलं शृणु ।
शतं वर्षसहस्राणि कामगः कामरूपधृक् ।
मोदतेऽमरलोकस्थः पूज्यमानोऽप्सरोगणैः ।
ततश्चापि च्युतः कालान्नरलोके द्विजो भवेत् । [ 910 ]
अग्रभिक्षां च यो दद्याद्दरिद्राय द्विजातये ।
षण्मासाद्वार्षिकं श्राद्धं तस्य पुण्यफलं शृणु ।
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमाप्नोति नरो वै नात्र संशयः ।
अथ संवत्सरं दद्यादग्रभैक्ष्यमयाचते । [ 915 ]
प्रच्छाद्यैव स्वयं नीत्वा तस्य पुण्यफलं शृणु ।
कपिलानां सहस्रैस्तु यद्देयं पुण्यमच्युते ।
तत्सर्वमखिलं प्राप्य शक्रलोके महीयते ।
स शक्रभवने रम्ये वर्षकोटिशतं नृप ।
यथाकामं महातेजाः क्रीडत्यप्सरसां गणैः । [ 920 ]
अग्रान्नं यस्तु वै दद्याद्द्विजाय नियतव्रतः ।
दशवर्षाणि राजेन्द्र तस्य पुण्यफलं शृणु ।
कपिलाशतसहस्रस्य विधिदत्तस्य यत्फलम् ।
तत्पुण्यफलमासाद्य पुरंदरपुरं व्रजेत् ।
स शक्रभवने रम्ये कामरूपी यथासुखम् । [ 925 ]
शतकोटिसमा राजन्क्रीडतेऽमरपूजितः ।
शक्रलोकावतीर्णश्च इह लोके महाद्युतिः ।
चतुर्वेदी द्विजः श्रीमाञ्जायते राजपूजितः ।
अध्वश्रान्ताय विप्राय क्षुधितायान्नकाङ्क्षिणे ।
देशकालाभियाताय दीयते पाण्डुनन्दन । [ 930 ]
याचतेऽन्नं न दद्याद्यो विद्यमाने धनागमे ।
स लुब्धो नरकं याति कृमीणां कालसूत्रकम् ।
स तत्र नरके घोरे लोभमोहितचेतनः ।
दशवर्षसहस्राणि क्लिश्यते वेदनार्दितः ।
तस्माच्च नरकान्मुक्तः कालेन महता हि सः । [ 935 ]
दरिद्रो मानुषो लोके चण्डालेष्वपि जायते ।
यस्तु पांसुलपादश्च दूराध्वश्रमकर्शितः ।
क्षुत्पिपासाश्रमः श्रान्त आर्तः खिन्नगतिर्द्विजः ।

---

the prior half ). $G_{1,2}$ $M_3$ भूतान्यन्ये च दानवाः. — ( L. 899 ) $G_1$ $M_3$ ( *sup. lin.* as above ) विशिष्यते ( for परं भवेत् ). — ( L. 900 ) $M_2$ -युंजानो ( for -भुञ्जानो ). — ( L. 901 ) $G_3$ [इ]ह ( for [ए]क- ). — ( L. 904 ) $T_1$ $M_2$ ये ( for यो ). — ( L. 906 ) $M_2$ -विनिर्मुक्तः ( for -विमुक्तस्तु ). — ( L. 907 ) $M_2$ स्वकर्मणार्जितधनस् ( for the prior half ). — $G_3$ $M_4$ om. ( hapl. ) lines 908–912. — ( L. 908 ) Kumbh. ed. and Madras ed. शत-. $M_2$ -सहस्राणां. Kumbh. ed. and Madras ed. -रूपधृत् ( for °धृक् ). — ( L. 909 ) $T_1$ सुर- ( for ऽमर- ). $M_2$ सुरोत्तमैः ( for ऽप्सरोगणैः ). — ( L. 910 ) $T_2$ श्रुतः ( for च्युतः ). $M_2$ इह ( for नर- ). — ( L. 911 ) $M_{2,3}$ तु ( for च ). $M_2$ द्विजाय वै ( for द्विजातये ). — ( L. 912 ) $T_2$ $M_3$ षण्मासान्; $G_1$ षाण्मासाद्. $G_1$ $M_{2,3}$ वार्षिक- ( $M_2$ °के ). $G_2$ प्रच्छाद्य वै स्वयं नीत्वा ( =var. L. 916 prior half ). — ( L. 913 ) $T_1$ lacuna for the post. half. — ( L. 914 ) $T_1$ यत् ( for तत् ). $M_2$ नास्ति; $M_4$ नैव ( for वै न ). — $M_2$ reads lines 915–920 twice. — ( L. 915 ) $G_3$ संवत्सरे. Madras ed. -भिक्षाम्. $M_2$ (second time) अग्रभिक्षामयाचता ( for the post. half ). — ( L. 916 ) $G_3$ [इ]व ( for [ए]व ). $G_3$ नीतास्; $M_4$ नीतस् ( for नीत्वा ). $M_2$ ( first time ) om. शृणु. — ( L. 917 ) $G_3$ $M_2$ ( both times ).$_4$ सहस्रे. $M_2$ ( second time ).$_4$ च ( for तु ). $T_2$ दैवं ( for देयं ). $M_2$ ( both times ) दत्ते यत्फलमुच्यते ( for the post. half ). — ( L. 918 ) $G_3$ $M_2$ ( both times ).$_4$ पुण्यम् ( for सर्वम् ). — ( L. 920 ) $T_1$ $G_3$ क्रीडित्वा. — ( L. 921 ) $T_2$ $G_1$ अन्नं च ( for अग्रान्नं ). $G_3$ च यत- ( for नियत- ). — ( L. 923 ) Prior half, hypermetric. T -साहस्रं ( for -सहस्रस्य ). $M_2$ पांडव ( for यत्फलम् ). — ( L. 924 ) $T_1$ यत् ( for तत् ). — ( L. 926 ) $M_{2,4}$ दश- ( for शत- ). $G_3$ $M_{2,4}$ सुर- ( for ऽमर- ). — $M_3$ om ( hapl. ) lines 927–928. — ( L. 927 ) Madras ed. चेद् ( for च ). $G_3$ $M_4$ अक्लेशेन ( for इह लोके ). — $M_2$ om. line 929 and the prior half of line 930. — ( L. 929 ) $M_4$ अथ श्रांताय. — ( L. 930 ) $G_3$ -भूताय ( for -याताय ). $M_2$ याचते ( for दीयते ). — ( L. 931 ) $G_3$ याचितो. $G_3$ $M_4$ वै ( for यो ). $G_3$ धने नृप; $M_2$ [ऽ]न्नसंचये ( for धनागमे ). — ( L. 934 ) $T_1$ $M_4$ शत- ( for दश- ). — ( L. 935 ) $G_2$ [अ]पि ( for हि ). — ( L. 936 ) $M_2$ [उ]प-; Madras ed. [ए]व ( for [अ]पि ). — ( L. 937 ) $G_1$ यत् ( for यस् ). $G_3$ $M_{2,4}$ तु ( for च ). $G_3$ दूराध्वक्लम- ( for °श्रम- ). $M_2$ -पीडितः ( for -कर्शितः ).

पृच्छन्वै ह्यन्नदातारं गृहमभ्येत्य याचयेत् ।
तं पूजयेत्तु यत्नेन सोऽतिथिः स्वर्गसंक्रमः । [ 940 ]
तस्मिंस्तुष्टे नरश्रेष्ठ तुष्टाः स्युः सर्वदेवताः ।
न तथा हविषा होमैर्न पुष्पैर्नानुलेपनैः ।
अग्नयः पार्थ तुष्यन्ति यथा ह्यतिथिपूजनात् ।
कपिलायां तु दत्तायां विधिवज्ज्येष्ठपुष्करे ।
न तत्फलमवाप्नोति यत्फलं विप्रभोजनात् । [ 945 ]
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपर्णेन पिबन्ति पितरो जलम् ।
देवमाल्यापनयनं द्विजोच्छिष्टापमार्जनम् ।
श्रान्तसंवाहनं चैव तथा पादावसेचनम् ।
प्रतिश्रयप्रदानं च तथा शय्यासनस्य च । [ 950 ]
एकैकं पाण्डवश्रेष्ठ गोप्रदानाद्विशिष्यते ।
पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम् ।
ये प्रयच्छन्ति विप्रेभ्यो नोपसर्पन्ति ते यमम् ।
विप्रातिथ्ये कृते राजन्भक्त्या शुश्रूषितेऽपि च ।
देवाः शुश्रूषिताः सर्वे त्रयस्त्रिंशद्भवन्ति ते । [ 955 ]
अभ्यागतो ज्ञातपूर्वो ह्यज्ञातोऽतिथिरुच्यते ।
तयोः पूजां द्विजः कुर्यादिति पौराणिकी श्रुतिः ।
पादाभ्यङ्गान्नपानैस्तु योऽतिथिं पूजयेन्नरः ।
पूजितस्तेन राजेन्द्र भवामीह न संशयः ।
शीघ्रं पापाद्विनिर्मुक्तो मया चानुग्रहीकृतः । [ 960 ]
विमानेनेन्दुकल्पेन मम लोकं स गच्छति ।
अभ्यागतं श्रान्तमनुव्रजन्ति
देवाश्च सर्वे पितरोऽग्नयश्च ।
तस्मिन्द्विजे पूजिते पूजिताः स्यु-
र्गते निराशाः पितरो व्रजन्ति । [ 965 ]
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च ।
वर्जितः पितृभिर्लुब्धः स देवैरग्निभिः सह ।
निरयं रौरवं गत्वा दश वर्षाणि पच्यते ।
ततश्चापि च्युतः कालादिह चोच्छिष्टभुग्भवेत् । [ 970 ]
वैश्वदेवान्तिके प्राप्तमतिथिं यो न पूजयेत् ।
स चण्डालत्वमाप्नोति सद्य एव न संशयः ।
निर्वासयति यो विप्रं देशकालागतं गृहात् ।
पतितस्तत्क्षणादेव जायते नात्र संशयः ।
नरके रौरवे घोरे वर्षकोटिं स पच्यते । [ 975 ]
ततश्चापि च्युतः कालादिह लोके नराधमः ।
श्वा वै द्वादश जन्मानि जायते क्षुत्पिपासितः ।
चण्डालोऽप्यतिथिः प्राप्तो देशकालेऽन्नकाङ्क्षया ।
अभ्युद्गम्य गृहस्थेन पूजनीयश्च सर्वदा ।
अनर्चयित्वा योऽश्नाति लोभमोहविचेतनः । [ 980 ]
स चण्डालत्वमाप्नोति दश जन्मानि पाण्डव ।
निराशमतिथिं कृत्वा भुञ्जानो यः प्रहृष्टवान् ।

---

— ( L. 938 ) $T_1$ $G_3$ $M_3$ शांत. $M_2$ क्षुत्पिपासान्वितो दीनः. $G_1$ आर्ति- ; $M_2$ श्रमात् ; $M_4$ श्रम- ( for आर्तः ). $G_3$ $M_4$ खिन्नमतिर्. — ( L. 939 ) $G_3$ एव ( for वै हि ). $G_3$ $M_3$ ( *inf. lin.* ).4 गृहमभ्येति चाशया ; $M_2$ °त्यथाशया ( for the post. half ). — ( L. 940 ) $T_1$ पूजयेत ( for °येत्तु ). $G_3$ $M_4$ तं पूजयति चान्नेन. — ( L. 945 ) $G_3$ फलं न तद् ( by transp. ). $G_3$ तत् ( for यत् ). $M_2$ -भोजने. — ( L. 946 ) T -पादोदके ; $G_3$ $M_4$ -पादजल- ( for -पादोदक- ). — ( L. 947 ) $M_2$ -पात्रेषु ; Kumbh. ed. -पत्रेण ( for -पर्णेन ). — ( L. 948 ) $G_3$ $M_4$ देवमाल्योपनयनं. — After line 950, $M_2$ ins. :

अभ्यञ्जनादि यत्किंचित्तथा पादावसेचनम् ।

— ( L. 952 ) $G_3$ दीपं मार्गप्रतिश्रये ( for the post. half ). — ( L. 954 ) T $G_{1,2}$ शुश्रूषते. — ( L. 955 ) $M_4$ भवंत्युत ; Kumbh. ed. अरिंदम ( for भवन्ति ते ). — ( L. 956 ) $G_3$ $M_{2,4}$ तु ( for हि ). — ( L. 957 ) $G_3$ पृथक् ; $M_{2,4}$ ( *inf. lin.* ) बुधः ( for द्विजः ). — ( L. 958 ) $M_2$ -दानैस् ( for -पानैस् ). $G_2$ [ऽ]तिथीन्. $G_1$ नरं. — ( L. 959 ) $G_3$ $M_{2,4}$ [ए]व ( for [इ]ह ). $T_1$ प्रभवामीह संशयः ( sic ). — ( L. 960 ) $G_3$ $M_{2,4}$ पाप- ( for पापाद् ). $G_3$ -ग्रहः ( for -ग्रही- ). $T_2$ $G_{1,2}$ -कृते. $M_3$ मया चानुग्रहे कृते ( for the post. half ). — ( L. 965 ) $T_1$ $G_3$ $M_{2,4}$ अपि ते ( for पितरो ). $M_2$ प्रयांति ( for व्रजन्ति ). — ( L. 968 ) $T_2$ वेदैर् ( for देवैर् ). $G_3$ $M_{2,4}$ सदा ( for सह ). — ( L. 969 ) $G_3$ $M_2$ शत- ( for दश ). $T_2$ $G_2$ $M_3$ पंच च ( for पच्यते ). — $M_3$ om. ( hapl. ) lines 970–975. — ( L. 970 ) $G_3$ काले दीर्घं ( for कालादिह ). — ( L. 972 ) $G_1$ सत्यम् ( for सद्य ). — ( L. 973 ) $M_4$ -कालेतिथिं ( for -कालागतं ). — ( L. 976 ) T नराधिप ( for °धमः ). — ( L. 979 ) $G_3$ प्रत्युद्गम्य ; Madras ed. अभ्युद्गमो. T $G_{1,3}$ ग्रहस्थेन ( sic ). $G_3$ $M_{2,4}$ स ( for च ). T सर्वथा. — ( L. 980 ) Madras ed. -मोहित- ( for -मोहवि- ). — ( L. 981 ) $T_2$ $M_3$ आपन्नो ( for आप्नोति ). $G_3$ $M_4$ चंडालत्वमवाप्नोति. — ( L. 982 ) $M_2$ प्रहृष्टधीः ( for °वान् ). — $T_2$ om. line 983. — ( L. 983 ) $G_{1,2}$ $M_3$ किल ( for [आ]त्मना ). $M_4$ -कफ- ( for -क्रूरे ). $T_1$ निपातितः. — $T_1$ $G_3$ read line 989 after line 983, $T_2$ after line 982, repeating it in its proper place.

न जानात्यात्मनात्मानं विष्ठाकूपे निपातितम् ।
मोघं ध्रुवं प्रोर्णयति मोघमस्य तु पच्यते ।
मोघमन्नं सदाश्नाति योऽतिथिं न च पूजयेत् । [ 985 ]
साङ्गोपाङ्गांस्तु यो वेदान्पठतीह दिने दिने ।
न चातिथिं पूजयति वृथा भवति स द्विजः ।
पाकयज्ञमहायज्ञैः सोमसंस्थाभिरेव च ।
ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम् ।
तेषां यशोभिकामानां दत्तमिष्टं च यद्भवेत् । [ 990 ]
वृथा भवति तत्सर्वमाशया हि तया हतम् ।
देशकालं च पात्रं च स्वशक्तिं च निरीक्ष्य च ।
अल्पं समं महद्वापि कुर्यादातिथ्यमात्मवान् ।
सुमुखः सुप्रसन्नात्मा धीमानतिथिमागतम् ।
स्वागतेनासनेनाद्भिरन्नाद्येन च पूजयेत् । [ 995 ]
हितः प्रियो वा द्वेष्यो वा मूर्खः पण्डित एव वा ।
प्राप्तो यो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ।
क्षुत्पिपासाश्रमार्ताय देशकालागताय च ।
सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छता ।
भोजयेदात्मनः श्रेष्ठान्विधिवद्धव्यकव्ययोः । [ 1000 ]
अन्नं प्राणो मनुष्याणामन्नदः प्राणदो भवेत् ।
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ।
अन्नदः सर्वकामैस्तु सुतृप्तः सुष्ठ्वलंकृतः ।
पूर्णचन्द्रप्रकाशेन विमानेन विराजता ।
सेव्यमानो वरस्त्रीभिर्मम लोकं स गच्छति । [ 1005 ]
क्रीडित्वा तु ततस्तस्मिन्वर्षकोटिं यथामरः ।
ततश्चापि च्युतः कालादिह लोके महायशाः ।
वेदशास्त्रार्थतत्त्वज्ञो भोगवान्ब्राह्मणो भवेत् ।
यथाश्रद्धं तु यः कुर्यान्मनुष्येषु प्रजायते ।
महाधनपतिः श्रीमान्वेदवेदाङ्गपारगः । [ 1010 ]
सर्वशास्त्रार्थतत्त्वज्ञो भोगवान्ब्राह्मणो भवेत् ।
सर्वातिथ्यं तु यः कुर्याद्वर्षमेकमकल्मषः ।
धर्मार्जितधनो भूत्वा पापभेदविवर्जितः ।
देवानिव स्वयं विप्रानर्चयित्वा पितॄनपि ।
विप्रानग्राशनाशी यस्तस्य पुण्यफलं शृणु । [ 1015 ]
वर्षेणैकेन यावन्ति पिण्डानश्नन्ति वै द्विजाः ।
तावद्वर्षाणि राजेन्द्र मम लोके महीयते ।
ततश्चापि च्युतः कालादिह लोके महायशाः ।
वेदशास्त्रार्थतत्त्वज्ञो भोगवान्ब्राह्मणो भवेत् ।
सर्वातिथ्यं च यः कुर्याद्यथाश्रद्धं नरेश्वर । [ 1020 ]
अकालनियमेनापि सत्यवादी जितेन्द्रियः ।
सत्यसंधो जितक्रोधः शाखाधर्मविवर्जितः ।
अधर्मभीरुर्धर्मिष्ठो मायामात्सर्यवर्जितः ।
श्रद्दधानः शुचिर्नित्यं पाकभेदविवर्जितः ।
स विमानेन दिव्येन दिव्यरूपी महायशाः । [ 1025 ]
पुरंदरपुरं याति गीयमानोऽप्सरोगणैः ।
मन्वन्तरं तु तत्रैव क्रीडित्वा देवपूजितः ।
मानुष्यलोकमागम्य भोगवान्ब्राह्मणो भवेत् ।

— ( L. 984 ) M2.3 स्रुवं ; M4 ध्रुवः. G3 M2.3 ( *inf. lin.* ). 4 ( *sup. lin.* ) प्रोन्नयति ; M3 पूर्ण° ( for प्रोर्ण° ). M2.3 अन्नं ( for अस्य ). — ( L. 985 ) G3 तु च ; M4 स च ( for सदा ). G3 तु ( for च ). — ( L. 986 ) G3 सांगोपांगं. — ( L. 987 ) T1 स ( for न ). G3 M2.4 स पठति ( for भवति स ). — ( L. 989 ) G3 ( second time ) [ अ ]श्नंति ( for [ अ ]र्चन्ति ). — ( L. 990 ) M4 तद् ( for यद् ). — ( L. 991 ) G3 M2–4 ह ( for हि ). T1 G3 हितं ; M2–4 हतः ( for हतम् ). — ( L. 992 ) G3 M2.4 देशं ( for देश- ). G2 M2 समीक्ष्य तु ( M2 च ) ( for निरीक्ष्य च ). — ( L. 993 ) M2 महत्समं ( by transp. ); M4 स च महद्. — ( L. 996 ) G3 M2.4 प्रियो वा यदि वा द्वेष्यो ( for the prior half ). — ( L. 997 ) G3 यः प्राप्तो ( by transp. ); M2 प्राप्नोति. — ( L. 998 ) T G3 देशकालगताय च. — ( L. 999 ) Madras ed. स्वर्गस्य ( for यज्ञस्य ). — ( L. 1002 ) M4 अशेषेण ( for वि° ). — ( L. 1003 ) G3 त्वभ्यलंकृतः ; M2 सुष्व° ; M4 स्वभ्य° ( for सुष्ठ्व° ). — ( L. 1004 ) T2 G1 M3 विराजते. — ( L. 1005 ) G3 M4 देव- ( for मम ). — ( L. 1006 ) G3 स्वर्गे ( for तस्मिन् ). — ( L. 1007 ) M2 विदेशेपूपजायते ( for the post. half ). — M3 om. ( hapl. ) lines 1009–1011. — ( L. 1009 ) G3 श्राद्धं तु यः ; M2 श्राद्ध- भूयस् ( for यथाश्रद्धं ). G3 M2.4 मानुषे ( M4 मनुष्ये ) षूपजायते ( for the post. half ). — ( L. 1011 ) G3 M4 -शास्त्रार्थ- विद्विद्वान् ; M2 °वित्प्राप्तो ( for °तत्त्वज्ञो ). — ( L. 1012 ) T1 G1 वर्षकोटिम् ( for °मेकम् ). — ( L. 1015 ) M4 विप्रो नाग्राशनाशी ( *inf. lin.* °प्रानुग्रासमाशी ) यस्. — ( L. 1016 ) G2 ये ( for वै ). — ( L. 1018 ) G3 M4 महीयते ( for महायशाः ). — ( L. 1019 ) M2 -वेदार्थ- ( for -शास्त्रार्थ- ). — ( L. 1020 ) G3 M2.4 तु ( for च ). G3 यथाश्राद्धं. — ( L. 1022 ) M2.3 ( *inf. lin.* ) शाठ्यधर्म- ; M4 शोका° ( for शाखा° ). — ( L. 1026 ) T1 M2.3 नीयमानो ( for गीय° ). — ( L. 1027 ) G3 M2.4 च ( for तु ). G3 M4 [ ए ]कं ( for [ ए ]व ). M3 वेद- ( for देव- ). — ( L. 1028 ) G3 मनुष्य- ( for मा° ). — ( L. 1029 ) M2

दश जन्मानि विप्रत्वमाप्नुयाद्राजपूजितः ।
जातिस्मरश्च भवति यत्र तत्रोपजायते । [ 1030 ]

Colophon.

भगवानुवाच ।

अतः परं प्रवक्ष्यामि भूमिदानमनुत्तमम् ।
यः प्रयच्छति विप्राय भूमिं रम्यां सदक्षिणाम् ।
श्रोत्रियाय दरिद्राय साग्निहोत्राय पाण्डव ।
स सर्वकामतृप्तात्मा सर्वरत्नविभूषितः ।
सर्वपापविनिर्मुक्तो दीप्यमानोऽर्कवत्सदा । [ 1035 ]
बालसूर्यप्रकाशेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन मम लोकं महायशाः ।
तत्र दिव्याङ्गनाभिस्तु सेव्यमानो यथासुखम् ।
कामगः कामरूपी च क्रीडत्यप्सरसां गणैः ।
यावद्बिभर्ति लोकान्वै भूमिः कुरुकुलोद्वह । [ 1040 ]
तावद्भूमिप्रदः कामं मम लोके महीयते ।
न हि भूमिप्रदानाद्वै दानमन्यद्विशिष्यते ।
न चापि भूमिहरणात्पापमन्यद्विशिष्यते ।
दानान्यन्यानि हीयन्ते कालेन कुरुपुंगव ।
भूमिदानस्य पुण्यस्य क्षयो नैवोपपद्यते । [ 1045 ]
ब्राह्मणाय दरिद्राय भूमिं दत्त्वा तु यो नरः ।
न हिंसति नरव्याघ्र तस्य पुण्यफलं शृणु ।
सप्तद्वीपसमुद्रान्ता रत्नधान्यसमाकुला ।
स शैलवनदुर्गाढ्या तेन दत्ता मही भवेत् ।
भूमिं दृष्ट्वा दीयमानां श्रोत्रियायाग्निहोत्रिणे । [ 1050 ]
सर्वभूतानि मन्यन्ते मां ददातीति हर्षवत् ।
सुवर्णमणिरत्नानि धनधान्यवसूनि च ।
सर्वदानानि वै राजन्ददाति वसुधां ददन् ।
सागरान्सरितः शैलान्समानि विषमाणि च ।
सर्वगन्धरसांश्चैव ददाति वसुधां ददन् । [ 1055 ]
ओषधीः फलसंपन्ना नानापुष्पफलान्विताः ।
कमलोत्पलषण्डांश्च ददाति वसुधां ददन् ।
धर्मं कामं तथार्थं च वेदान्यज्ञांस्तथैव च ।
स्वर्गमार्गगतिं चैव ददाति वसुधां ददन् ।
अग्निष्टोमादिभिर्यज्ञैर्ये यजन्ते सदक्षिणैः । [ 1060 ]
न तत्फलं लभन्ते ते भूमिदानस्य यत्फलम् ।
श्रोत्रियाय महीं दत्त्वा यो न हिंसति पाण्डव ।
तद्दानं कथयिष्यन्ति यावल्लोकाः प्रतिष्ठिताः ।
तावत्स्वर्गोपभोगानां भोक्तारः पाण्डुनन्दन ।
सस्यपूर्णां महीं यस्तु श्रोत्रियाय प्रयच्छति । [ 1065 ]
पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम् ।
मम रुद्रस्य सवितुस्त्रिदशानां तथैव च ।
प्रीतये विद्धि राजेन्द्र भूमिर्दत्ता द्विजाय वै ।
तेन पुण्येन पूतात्मा दाता भूमेर्युधिष्ठिर ।
मम सालोक्यमायाति नात्र कार्या विचारणा । [ 1070 ]
यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्शितः ।
स च गोकर्णमात्रेण भूमिदानेन शुध्यति ।
मासोपवासे यत्पुण्यं कृच्छ्रे चान्द्रायणेऽपि च ।

प्राप्नुयाद् ( for आप्नु° ). $G_3$ $M_4$ प्राप्नुयादेव पूजितः. — ( L. 1030 ) $G_3$ $M_4$ यत्रैव ( for तत्रोप- ). — Colophon om. in $G_3$ $M_{2.4}$. — *Sub-parvan :* $G_2$ वैष्णवधर्म. — *Adhy. no.:* $T_1$ 99; $T_2$ $G_{1.2}$ 88; $M_3$ 87. — T $G_{2.3}$ $M_{2-4}$ om. the ref. $G_3$ om. lines 1033–1035. —( L. 1035 ) $G_{1.2}$ $M_2$ यथा ( for सदा ). — ( L. 1037 ) $G_{1.2}$ लोके. — ( L. 1039 ) $G_{1.3}$ कामदः ( for °गः ). — $M_4$ om. lines 1040–1041. — ( L. 1041 ) $T_1$ $G_2$ $M_3$ कालं; $G_1$ काले ( for कामं ). — ( L. 1045 ) $T_1$ $M_3$ क्षयं. —( L. 1048 ) $M_3$ सप्तद्वीपा. Kumbh. ed. रत्नसंचयसंकुला ( for the post. half ). — ( L. 1049 ) $M_2$ भवेन्मही ( by transp. ). —( L. 1050 ) $G_3$ $M_4$ [आ]हिताग्नये ( for [अ]ग्निहोत्रिणे ). — ( L. 1051 ) $G_3$ $M_4$ मे; $M_2$ om.; $M_3$ मद् ( for मां ). $G_3$ [इ]ह ( for [इ]ति ). $G_3$ हर्षिताः ( for हर्षवत् ). — ( L. 1053 ) $M_2$ राजा ( for राजन् ). $T_2$ ( *inf. lin.* as above ) स्वर्गमार्गगतिं चैव ( for the prior half ). $M_2$ ददत्. — $G_3$ om. ( hapl. ) lines 1054–1057. — ( L. 1055 ) $M_{2.4}$ सर्वगंधान्नपानस्नेहान् ( for the prior half ). — $T_2$ repeats lines 1056–1057 after line 1059. — ( L. 1056 ) $T_{1.2}$ ( both times ) ओषधी-. $T_{1.2}$ ( first time ) -संपन्नां ( for °न्ना ). $T_{1.2}$ ( first time ) -फलान्वितां; $M_2$ -फलोपगाः; $M_4$ -फलोदकाः ( for -फलान्विताः ). — ( L. 1057 ) $M_{2.3}$ ददत्. — ( L. 1058 ) $G_{1.2}$ $M_3$ चार्थं ( by transp. ). $M_2$ धर्मान्कामांस्तथार्थं च ( for the prior half ). — ( L. 1059 ) $T_2$ $G_3$ $M_{2.4}$ -मोक्ष- ( for -मार्ग- ). $G_1$ -गतिश्; $M_4$ -गतीश् ( for -गतिं ). $G_2$ $M_{2.4}$ ददत्. — ( L. 1060 ) $T_2$ $G_3$ $M_{2-4}$ यजंति. — ( L. 1061 ) $G_3$ $M_{2.4}$ भवेत्तेषां; $M_3$ भजंते ते ( for लभन्ते ते ). — ( L. 1063 ) $G_{2.3}$ $M_{2.4}$ तं जनाः ( for तद्दानं ). — ( L. 1068 ) $M_2$ तद्धि ( for विद्धि ). —( L. 1069 ) $M_2$ स च ( for तेन ). —( L. 1070 ) Kumbh. ed. and Madras ed. आप्नोति ( for आयाति ). $G_3$ $M_{2.4}$ मम सालोक्य( $M_2$ °युज्य )तां याति ( for

भूमिगोकर्णमात्रेण तत्पुण्यं तु विधीयते ।
सर्वतीर्थाभिषेके च यत्पुण्यं समुदाहृतम् । [ 1075 ]
भूमिगोकर्णमात्रेण तत्पुण्यं तु विधीयते ।

युधिष्ठिर उवाच ।

देवदेव नमस्तेऽस्तु वासुदेव सुरेश्वर ।
गोकर्णस्य प्रमाणं वै वक्तुमर्हसि तत्त्वतः ।

भगवानुवाच ।

शृणु गोकर्णमात्रस्य प्रमाणं पाण्डुनन्दन ।
त्रिंशद्दण्डप्रमाणेन प्रमितं सर्वतोदिशम् । [ 1080 ]
प्रत्यक्प्रागपि राजेन्द्र तत्तथा दक्षिणोत्तरम् ।
गोकर्णं तद्विदः प्राहुः प्रमाणं धरणेर्नृप ।
सवृषं गोशतं यत्र सुखं तिष्ठत्ययन्त्रितम् ।
सवत्सं कुरुशार्दूल तच्च गोकर्णमुच्यते ।
किंकरा मृत्युदण्डाश्च कुम्भीपाकाश्च दारुणाः [ 1085 ]
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् ।
निरया रौरवाद्याश्च तथा वैतरणी नदी ।
तीव्राश्च यातनाः कष्टा नोपसर्पन्ति भूमिदम् ।
चित्रगुप्तः कलिः कालः कृतान्तो मृत्युरेव च ।
यमश्च भगवान्साक्षात्पूजयन्ति महीप्रदम् । [ 1090 )
रुद्रः प्रजापतिः शक्रः सुरा ऋषिगणास्तथा ।
अहं च प्रीतिमात्राजन्पूजयामो महीप्रदम् ।
कृशभृत्यस्य कृशगोः कृशाश्वस्य कृतातिथेः ।
भूमिर्देया नरश्रेष्ठ स निधिः पारलौकिकः ।
सीदमानकुटुम्बाय श्रोत्रियायाग्निहोत्रिणे । [1095]
व्रतस्थाय दरिद्राय भूमिर्देया नराधिप ।
यथा हि धात्री क्षीरेण पुत्रं वर्धयति स्वयम् ।
दातारमनुगृह्णाति दत्ता ह्येवं वसुंधरा ।
यथा बिभर्ति गौर्वत्सं सृजन्ती क्षीरमात्मनः ।
तथा सर्वगुणोपेता भूमिर्वहति भूमिदम् । [ 1100 ]
यथा बीजानि रोहन्ति जलसिक्तानि भूपते ।
तथा कामाः प्ररोहन्ति भूमिदस्य दिने दिने ।
यथोदयस्तु सूर्यस्य तमः सर्वं व्यपोहति ।
तथा पापं नरस्येह भूमिदानं व्यपोहति ।
दाता दशानुगृह्णाति यो हरेद्दश हन्ति च । [ 1105 ]
अतीतानागतानीह कुलानि कुरुपुंगव ।
आश्रुत्य भूमिदानं तु दत्त्वा यो वा हरेत्पुनः ।
स बद्धो वारुणैः पाशैः क्षिप्यते पूयशोणिते ।
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
न तस्य नरकाद्घोराद्विद्यते निष्कृतिः क्वचित् । [ 1110 ]
ब्राह्मणस्य हते क्षेत्रे हन्याद्द्वादश पूर्वजान् ।
स गच्छेत्कृमियोनिं च न च मुच्येत जातु सः ।

---

the prior half ). — ( L 1073 ) G3 M2 4 जीर्णे ( for कृच्छ्र ). — After line 1074, G3 M2 and Madras ed. ins.:

वेदपारायणे यत्तु परं पुण्यमुदाहृतम् ।
भूमिं गोकर्णमात्रेण तत्पुण्यं तु विधीयते ।

[ ( L. 1 ) Madras ed. वेदानां पारणे यत्तु ( for the prior half ). — ( L. 2 ) = ( var. ) line 1074. M2 भूमेर् ( for भूमिं ) and फलं ( for पुण्यं ). ]

— ( L. 1078 ) G3 M2.4 मे ( for वै ). M2 मानदः ( for तत्त्वतः ). — ( L. 1080 ) G1 -दिशः. — ( L. 1081 ) T1 तत्तदा; G3 सर्वतो; M4 तं तथा ( for तत्तथा ). — ( L. 1082 ) G3 धरणेः; M2 इति तत् ( for तद्विदः ). — ( L. 1083 ) T1 G1.2 M3 [अ]तंद्रितं ( for [अ]यन्त्रितम् ). — ( L. 1085 ) G3 -पाशाश्च ( for -दण्डाश्च ). — ( L. 1087 ) G3 M3 तु ( for च ). — ( L. 1088 ) T1 G2 M2.3 काष्ठा; G1 क्रुष्टा ( for कष्टा ). T1 M2 -सर्पति. — ( L. 1090 ) T2 स नित्यदा ( for महीप्रदम् ). — ( L. 1091 ) G3 M4 पशु- ( for प्रजा- ). — ( L. 1092 ) G3 पूजयंति; M2.4 °यामि ( for °यामो ). — ( L. 1093 ) M4 -वृत्तेश्च; Madras ed. -वृत्तस्य ( for -भृत्यस्य ). M2 कृशस्य कृशभृत्यस्य ( for the prior half ). M2 कृशगांश्च ( for कृशाश्वस्य ). — ( L. 1094 ) M2 सं- ( for स ). G1 नरः; G3 [ऽ]तिथिः ( for निधिः ). — ( L. 1095 ) G3 M4 [आ]हिताग्नये ( for [अ]ग्निहोत्रिणे ). — ( L. 1096 ) G1 ग्रहस्थाय ( for व्रत° ). — ( L. 1097 ) G3 M2.3 ( *inf. lin.* ).4 जनित्री ( for हि धात्री ). G3 M4 पुत्रं ( for स्वयम ). — ( L. 1098 ) G3 [ए]व ( for [ए]वं ). — ( L. 1099 ) G3 M4 सृजति. — ( L. 1101 ) G3 बीज- ( *for* जल- ). G3 M4 भूतले ( *for* भूपते ). — ( L. 1102 ) T1 यथा ( for तथा ). — ( L. *1103* ) T G1.2 M2.3 यथोदयं; Kumbh. ed. यथा तेजस्. M2 lacuna for तु सूर्यस्य. — ( L. 1104 ) G3 तथा नरस्य तत्पापं ( for the prior half ). — *M4 om. lines* 1105–1155. — ( L 1105 ) M2 -गृह्णंति. G3 पंच ( for हन्ति ). M2 सः ( for च ). — ( L. 1106 ) T1 G1 अतीतान्यागतानि च (sic). M2 कुल- ( for कुरु- ). — ( L. 1107 ) G2.3 M2 आश्रित्य. G3 M3 भूमिं वा ( M3 ना )प्यस्तु; M2 भूमिं न ददाद् ( for भूमिदानं तु ). T2 G1.2 [ऽ]पाहरेत्; M2.3 [ऽ]पह° ( for वा ह° ). — ( L. 1109 ) M2 हरेत्तु ( for हरेत ). — ( L. 1112 ) G3 स ( for the second च )

दत्त्वा भूमिं द्विजेन्द्राय यस्तामेवोपजीवति ।
गवां शतसहस्रस्य हन्तुः स लभते फलम् ।
सोऽधःशिरास्तु पापात्मा कुम्भीपाकेषु पच्यते । [1115]
दिव्यैर्वर्षसहस्रैस्तु कुम्भीपाकाद्विनिःसृतः ।
इह लोके भवेत्स श्वा शतजन्मानि पाण्डव ।
दत्त्वा भूमिं द्विजेन्द्राणां यस्तामेवोपजीवति ।
स मूढो याति दुष्टात्मा नरकानेकविंशतिम् ।
नरकेभ्यो विनिर्मुक्तः शुनां योनिं स गच्छति । [1120]
हलकृष्टा मही देया सबीजा सस्यमालिनी ।
अथ वा सोदका देया दरिद्राय द्विजातये ।
एवं दत्ता मही राजन्प्रहृष्टेनान्तरात्मना ।
सर्वान्कामानवाप्नोति मनसा चिन्तितानि च ।
बहुभिर्वसुधा दत्ता दीयते च नराधिपैः । [1125]
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ।
यः प्रयच्छति कन्यां वै सुरूपां श्रोत्रियाय वै ।
स ब्रह्मदेवो राजेन्द्र तस्य पुण्यफलं शृणु ।
बलीवर्दसहस्राणां दत्तानां धुर्यवाहिनाम् ।
यत्फलं लभते राजन्कन्यादानेन तत्फलम् । [1130]
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्फलं समवाप्नोति यः प्रयच्छति कन्यकाम् ।
यावन्ति चैव रोमाणि कन्यायाः कुरुपुंगवः ।
तावद्वर्षसहस्राणि मम लोके महीयते ।
ततश्चापि च्युतः कालादिह लोके स जायते । [1135]
षडङ्गविच्चतुर्वेदी सर्वलोकार्चितो द्विजः ।
यः सुवर्णं दरिद्राय ब्राह्मणाय प्रयच्छति ।
श्रोत्रियाय दरिद्राय बहुपुत्राय पाण्डव ।
विमुक्तः सर्वपापेभ्यो बालसूर्यसमप्रभः ।
विमानं दिव्यमारूढः कामगः कामभोगवान् । [1140]
वर्षकोटिं महातेजा मम लोके प्रमोदते ।
ततः कालावतीर्णश्च सोऽस्मिँल्लोके हि जायते ।
वेदवेदाङ्गविद्विप्रः कोटीधनपतिर्भवेत् ।
यश्च रूप्यं प्रयच्छेद्वै दरिद्राय द्विजाय वै ।
कृशवृत्ते कृशगवे स मुक्तः सर्वकिल्बिषैः । [1145]
पूर्णचन्द्रप्रकाशेन विमानेन विराजता ।
कामरूपी यथा कामं स्वर्गलोके महीयते ।
ततोऽवतीर्णः कालेन लोके चास्मिन्महायशाः ।
सर्वलोकार्चितः श्रीमान्राजा भवति वीर्यवान् ।
तिलपर्वतकं यस्तु श्रोत्रियाय प्रयच्छति । [1150]
विशेषेण दरिद्राय तस्यापि शृणु यत्फलम् ।
पुण्यं वृषायुतोत्सर्गे यत्प्रोक्तं पाण्डुनन्दन ।
तत्पुण्यं समनुप्राप्य तत्क्षणाद्विरजो भवेत् ।
यथा त्वचो भुजङ्गो वै त्यक्त्वा शुद्धतनुर्भवेत् ।
तथा तिलप्रदानाद्वै पापं त्यक्त्वा विशुध्यति । [1155]
तिलषण्डं प्रयुञ्जानो जाम्बूनदविभूषितम् ।

---

and चित् ( for सः ). — ( L. 1114 ) G3 फलमश्नुते ( for लभते फलम् ). — ( L. 1115 ) M2 -पाके स ( for -पाकेषु ). — ( L. 1116 ) M2 विनिर्गतः. — ( L. 1117 ) G3 M2 श्वा वै ( for स श्वा ). — ( L. 1118 ) G3 द्विजेंद्राय; M2 तु देवानां ( for द्विजेन्द्राणां ). — ( L. 1119 ) G3 स ताननुक्रमं याति ( for the prior half ). T1 M3 -विंशतः. — ( L. 1121 ) M2 सस्याढ्या बीजमालिनी ( for the post. half ). — ( L. 1122 ) M2 द्विजाय वै ( for द्विजातये ). — ( L. 1123 ) G3 ज्ञात्वा; M2.3 दत्त्वा ( for दत्ता ). G3 M2.3 महीं ( for मही ). — ( L. 1124 ) G3 M2 चिंतितानपि ( for °तानि च ). — ( L. 1125 ) T2 G2 हीयते न ( for दीयते च ). — ( L. 1126 ) T1 G3 यथा ( for यदा ). — ( L. 1127 ) G1 स- ( for सु- ). M2 श्रोत्रियात्मजां ( for °याय वै ). — ( L. 1128 ) G3 ब्रह्मदेया; M2.3 °देयां; Kumbh. ed. °देयो ( for °देवो ). — ( L. 1130 ) Kumbh. ed. यत्पुण्यं ( for यत्फलं ). — ( L. 1132 ) M2 यत्पुण्यफलमाप्नोति ( for the prior half ). — After line 1132, G2 M2.3 ins.:

अग्निहोत्रसहस्राणि षष्टिवर्षशतानि च ।
पितरस्तस्य तृप्यन्ति यः प्रयच्छति कन्यकाम् ।

— ( L. 1133 ) G3 -नंदन ( for -पुंगव ). — ( L. 1134 ) G3 ब्रह्म- ( for मम ). — ( L. 1135 ) G3 महीयते ( for स जा° ). — ( L. 1138 ) T1 M2 सुवृत्ताय ( for दरिद्राय ). — ( L. 1139 ) G3 M2 स ( for वि- ). M2 -प्रभं — ( L. 1140 ) G3 दिव्यं विमानमारूढः. G3 -वेगवान्; M2 -रूप° ( for -भोग° ). — ( L. 1141 ) G3 M2 महीयते ( for प्रमोदते ). — ( L. 1142 ) M2 [ऽ]भि- ( for हि ). — ( L. 1143 ) G3 महान् ( for भवेत् ). — ( L. 1144 ) G3 च; M2 तु ( for the first वै ). T1 G3 द्विजातये ( for द्विजाय वै ). — ( L. 1145 ) T G3 कृशवृत्तये ( hypermetric ) ( for °वृत्ते ). — After line 1147, G1 reads line 1158, repeating it in its proper place, and om. ( hapl. ) line 1148. — ( L. 1151 ) M2 तस्य पुण्यफलं शृणु ( for the post. half ). — ( L. 1153 ) M2 -प्राप्तं ( for -प्राप्य ). — ( L. 1154 ) G1 हि ( for वै ). — ( L. 1156 ) G3 M4 तिलषंडप्रयुक्तं ( M4

विमानं दिव्यमारूढः पितृलोके महीयते ।
षष्टिवर्षसहस्राणि कामरूपी महायशाः ।
तिलप्रदाता रमते पितृलोके यथासुखम् ।
यः प्रयच्छति विप्राय तिलधेनुं नराधिप । [ 1160 ]
श्रोत्रियाय दरिद्राय शृणु तस्यापि यत्फलम् ।
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमाप्नोति तिलधेनुप्रदो नरः ।
तिलानां कुडवैर्यस्तु तिलधेनुं प्रयच्छति ।
तावत्कोटिसमा राजन्स्वर्गलोके महीयते । [ 1165 ]
अष्टाढकतिलैः कृत्वा तिलधेनुं नराधिप ।
द्वात्रिंशन्निष्कसंयुक्तं विषुवे यः प्रयच्छति ।
मद्भक्त्या मद्गतात्मा वै तस्य पुण्यफलं शृणु ।
कन्यादानसहस्रस्य विधिदत्तस्य यत्फलम् ।
तत्पुण्यं समनुप्राप्तो मम लोके महीयते । [ 1170 ]
मम लोकावतीर्णश्च सोऽखिलँल्लोकेऽभिजायते ।
ऋग्यजुःसामवेदानां पारगो ब्राह्मणर्षभः ।
गां तु यस्तु दरिद्राय श्रोत्रियाय प्रयच्छति ।
प्रसन्नां क्षीरिणीं पुण्यां सवत्सां कांस्यदोहिनीम् ।
यत्किंचिद्दुष्कृतं कर्म तस्य पूर्वकृतं नृप । [ 1175 ]
तत्सर्वं तत्क्षणादेव विनश्यति न संशयः ।
यानं च वृषसंयुक्तं दीप्यमानं स्वलंकृतम् ।
आरूढः कामगं दिव्यं गोलोकमधिगच्छति ।
यावन्ति चैव रोमाणि तस्या गोस्तु नराधिप ।
तावद्वर्षसहस्राणि गवां लोके महीयते । [ 1180 ]
गोलोकादवतीर्णस्तु लोकेऽस्मिन्ब्राह्मणो भवेत् ।
सत्रयाजी वदान्यश्च सर्वराजभिरर्चितः ।
तिलं गावः सुवर्णं चाप्यन्नं कन्या वसुंधरा ।
तारयन्तीह दत्तानि ब्राह्मणेभ्यो महाभुज ।
ब्राह्मणं वृत्तसंपन्नमाहिताग्निमलोलुपम् । [ 1185 ]
तर्पयेद्विधिवद्राजन्स निधिः पारलौकिकः ।
आहिताग्निं दरिद्रं च श्रोत्रियं च जितेन्द्रियम् ।
शूद्रान्नवर्जितं चैव द्विजं यत्नेन पूजयेत् ।
आहिताग्निः सदा पात्रमग्निहोत्रश्च वेदवित् ।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे । [ 1190 ]
यच्च वेदमयं पात्रं यच्च पात्रं तपोमयम् ।
असंकीर्णं च यत्पात्रं तत्पात्रं तारयिष्यति ।
नित्यं स्वाध्यायनिरतास्त्वप्रकीर्णेन्द्रियाश्च ये ।
पञ्चयज्ञरता नित्यं पूजितास्तारयन्ति ते ।
ये क्षान्तिदान्ताः श्रुतिपूर्णकर्णा [ 1195 ]
जितेन्द्रिया प्राणिवधे निवृत्ताः ।
प्रतिग्रहे संकुचिता गृहस्था-
स्ते ब्राह्मणास्तारयितुं समर्थाः ।
नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी वृषलान्नवर्जी । [ 1200 ]
ऋतौ गच्छन्विधिवच्चापि जुह्व-
न्स ब्राह्मणस्तारयितुं समर्थः ।
ब्राह्मणो यस्तु मद्भक्तो मद्याजी मत्परायणः ।
मयि संन्यस्तकर्मा च स विप्रस्तारयेद्ध्रुवम् ।

°दाता ) च ( for the prior half ). — ( L. 1157 ) G3 दिव्यं विमानमारूढः ( for the prior half ). M2 पितृलोकं स गच्छति ( for the post. half ). — ( L. 1158 ) T2 G1 ( first time ) M2.3 षष्टिं; G3 षष्टिर् ( for षष्टि- ). M2 -तपाः ( for -यशाः ). — ( L. 1161 ) G3 तस्यापि शृणु यत्फलं. — ( L. 1162 ) G3 गोसहस्रस्य दानस्य ( for the prior half ). T1 lacuna for the post. half. —( L. 1163 ) T1 यत्पुण्य-; T2 तत्पुण्यं. G3 तिलधेनुप्रदानतः ( for the post. half ). — ( L. 1166 ) G3 अष्टादश-; M2 °ढकैस्. — ( L. 1168 ) M2.4 मद्भक्तो. G1 मद्भक्ताय महात्मा वै ( for the prior half ). — ( L. 1169 ) T1 विधिवत्तस्य. — ( L. 1171 ) G3 लोकेवतीर्णश्. G3 सोग्निहोत्रो ( for सोऽखिलँल्लोके ). — ( L. 1172 ) M2 ब्राह्मणो भवेत् ( for °णर्षभः ). — ( L. 1173 ) M2 च ( for the first तु ). G3 M2.4 ब्राह्मणाय ( for श्रोत्रियाय ). —( L. 1174 ) G3 M2-4 -दोहनां ( for -दोहिनीम् ). — ( L. 1175 ) M4 दुष्कारं ( for दुष्कृतं ). —( L. 1179 ) G3 तस्या ( for चैव ) and संति ( for तस्या ). —( L. 1182 ) G3 M2.4 शतायुश्च ( for वदान्यश्च ). —( L. 1183 ) G3 M4 तिलं गां वस्त्रमन्नं च ( for the prior half ). M4 स्वर्णं ( for [अ]प्यन्नं ). G3 स्वर्णं कन्यां वसुंधरां ( for the post. half ). — ( L. 1185 ) T M3 व्रत-, ( for वृत्त- ). — ( L. 1188 ) G3 M4 -विरतं ( for -वर्जितं ). M2 शूद्रान्नाद्विरतं चैव ( for the prior half ). — ( L. 1189 ) G1.2 अग्निहोत्री ( G2 °त्रं ); G3 M4 साग्निहोत्रश्; M2.3 ( *inf. lin.* ) सदा पात्रश् ( for अग्निहोत्रश् ). — ( L. 1190 ) G3 उत्तमं ( for अपि तत् ). — ( L. 1193 ) M2.4 गूढं; Kumbh. ed. and Madras ed. नित्य- ( for नित्यं ). M2 [इ]-नियमास् ( for -निरतास् ). Madras ed [अ]संकीर्णेंद्रियाश्. — ( L. 1194 ) G3 M4 -परा ( for -रता ). — ( L. 1195 ) G3 क्षांतदांताः; M4 क्षांता ** ( for क्षान्तिदान्ताः ). M2 ये क्षांतिदांतां श्रुतिकर्णपूर्णा. — ( L. 1197 ) G2.3 M4 प्रदरथास् ( sic ). —( L. 1199 ) G3 M4 नित्योदको. —( L. 1201 ) M4 क्षुण्वन् ( for जुह्वन् ). M2 ऋतौ च गच्छन्विधिवच्च जुह्वन्. — ( L. 1203 ) T G1 मद्रागी ( for मद्याजी ).

द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् । [ 1205 ]
अच्छिद्रपञ्चकालज्ञः स विप्रस्तारयिष्यति ।

Colophon.

वैशंपायन उवाच ।

वासुदेवेन दानेषु कथितेषु यथाक्रमम् ।
अवितृप्तस्तु धर्मेषु केशवं पुनरब्रवीत् ।
देव धर्मामृतमिदं शृण्वतोऽपि परंतप ।
न विद्यते सुरश्रेष्ठ मम तृप्तिर्हि माधव । [ 1210 ]
अनडुत्संप्रदानस्य यत्फलं तु विधीयते ।
तत्फलं कथयस्वेह तव भक्तस्य मेऽच्युत ।
यानि चान्यानि दानानि त्वया नोक्तानि कानिचित् ।
तान्याचक्ष्व सुरश्रेष्ठ तेषां चानुक्रमात्फलम् ।

भगवानुवाच ।

पवित्रत्वात्सुपुण्यत्वात्पावनत्वात्तथैव च । [ 1215 ]
शृणु धर्मामृतं श्रेष्ठं दत्तस्यानडुहः फलम् ।
दशधेनुसमोऽनड्वानेकोऽपि कुरुपुंगव ।
मेदोमांसविपुष्टाङ्गो नीरोगः कोपवर्जितः ।
युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः ।
धुरं धारयते क्षिप्रं दत्तो विप्राय पाण्डव । [ 1220 ]
स तेन पुण्यदानेन वर्षकोटिं युधिष्ठिर ।
यथाकामं महातेजा गवां लोके महीयते ।
यश्च दद्यादनडुहौ द्वौ युक्तौ च धुरंधरौ ।
सुवृत्ताय दरिद्राय श्रोत्रियाय विशेषतः ।
तस्य यत्पुण्यमाख्यातं तच्छृणुष्व युधिष्ठिर । [ 1225 ]
सहस्रगोप्रदानेन यत्प्रोक्तं फलमुत्तमम् ।
तत्पुण्यफलमाप्नोति याति लोकान्स मामकान् ।
यावन्ति चैव रोमाणि तयोरनडुहोर्नृप ।
तावद्वर्षसहस्राणि मम लोके महीयते ।
दरिद्रायैव दातव्यं न समृद्धाय पाण्डव । [ 1230 ]
वर्षाणां हि तटाकेषु फलं नैव पयोधिषु ।
यस्तु दद्यादनडुहं दरिद्राय द्विजातये ।
स तेन पुण्यदानेन पूतात्मा कुरुपुंगव ।
विमानं दिव्यमारूढो दिव्यरूपी यथासुखम् ।
मम लोकेषु रमते यावदाभूतसंप्लवम् । [ 1235 ]
गृहं दीपप्रभायुक्तं शय्यासनविभूषितम् ।
भाजनोपस्करैर्युक्तं धान्यपूर्णमलंकृतम् ।
दासीगोभूमिसंयुक्तं सफलं सर्वसाधनैः ।
ब्राह्मणाय दरिद्राय श्रोत्रियाय युधिष्ठिर ।
दद्यात्सदक्षिणं यस्तु तस्य पुण्यफलं शृणु । [ 1240 ]
देवाः पितृगणाश्चैव अग्नयो ऋषयस्तथा ।
प्रयच्छन्ति प्रहृष्टा वै यानमादित्यसंनिभम् ।
तेन गच्छेच्छ्रिया युक्तो ब्रह्मलोकमनुत्तमम् ।

—(L. 1204) G1 M2–4 सन्यस्तकर्मा. G3 M2–4 तारयिष्यति (for °येद्ध्रुवम्). —(L. 1205) M2.3 (*inf. lin.*) चतुर्वेद- (for °र्व्यूह-). —(L. 1206) G3 M4 अच्छिद्रः. —Colophon. —*Sub-parvan :* T G1.2 M2–4 वैष्णवधर्म. —*Adhy. name :* T G1.3 M2–4 सर्वदानसमुच्चयः. —*Adhy. no. :* T G2 90; G1 89; G3 100; M2 6; M3 80; M4 99. —(L. 1208) M2 स (for तु). G2.3 M2.4 राजा केशवमब्रवीत् (for the post. half). —(L. 1212) G2 M2 मम (for तव). —(L. 1213) G3 मम च (for त्वया न). G2 यानि च (for कानिचित्). —G3 M2.4 transp. lines 1215 and 1216. —(L. 1216) G3 M2 शृणु धर्म नृप (M2 °र्मविदां) श्रेष्ठ (for the prior half). M2 [अ]नडुहं. —(L. 1217) M4 वै (for ऽपि). —(L. 1218) G1 M2 निरोगः. —M4 om. (hapl.) line 1219. —(L. 1219) M2 सुशीलं वा (for °लश्च). T2 -रोष- (for -दोष-). —(L. 1220) M3 धारयति. G3 M4 धुरं धरति योनड्वान्; M2 धुरंधरस्तारयति (for the prior half). —(L. 1222) G2 यथाक्रमं; G3 °कालं (for °कामं). —(L. 1223) T2 यतो; G3 M4 यस्तु (for यश्च). G3 M2.4 अनड्वाहौ. —(L. 1224) M4 सुव्रताय. —(L. 1226) M2 गोसहस्र- (for सहस्रगो-). —(L. 1227) G3 पुण्यं (for पुण्य-). T2 G3 M2.4 आसाद्य (for आप्नोति). M4 सनातनान् (for स मामकान्). —M4 om. lines 1231–1233. —(L. 1231) M2 वर्षस्य (for वर्षाणां). —(L. 1232) G3 M2.3 यस्तु (M2 °तु) नैवेशिकं दद्याद् (for the prior half). M2.3 द्विजाय वै (for द्विजातये). —(L. 1233) G3 -पाकेन प्रीतात्मा (for -दानेन पू°). —(L. 1234) G3 दिव्यं विमानमारूढो. —(L. 1237) T1 धनपूर्णम्; Kumbh. ed. धनधान्यैर् (for धान्यपूर्णम्). —(L. 1238) M4 दासीभिर् (*sup. lin.* °भ्यो) (for दासीगो-). G3 अन्येषां; M2.3 (*inf. lin.*) युक्तं वा; M4 अन्यूनं (for सफलं). —M4 om. lines 1239–1247. —(L. 1241) G3 M2 मुनयस्त्वृषयस्तथा (for the post. half). —(L. 1242) M2 -वर्चसं (for -संनिभम्). —(L. 1244) Kumbh. ed. रम्ये (for दिव्ये). G3 स्त्रीसहस्रवृतो नित्यं (for the prior half). —(L. 1246)

स्त्रीसहस्रावृते दिव्ये भवने तत्र काञ्चने ।
मोदते ब्रह्मलोकस्थो यावदाभूतसंप्लवम् । [ 1245 ]
शय्यां प्रस्तरणोपेतां यः प्रयच्छति पाण्डव ।
अर्चयित्वा द्विजं भक्त्या वस्त्रमाल्यानुलेपनैः ।
भोजयित्वा विचित्रान्नं तस्य पुण्यफलं शृणु ।
धेनुदानस्य यत्पुण्यं विधिदत्तस्य पाण्डव ।
तत्पुण्यं तमनुप्राप्य पितृलोके महीयते । [ 1250 ]
शिल्पमध्ययनं वापि विद्यामन्त्रौषधानि च ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु ।
आहिताग्निसहस्रस्य पूजितस्यैव यत्फलम् ।
तत्पुण्यफलमाप्नोति यस्तु विद्यां प्रयच्छति ।
छन्दोभिः संप्रयुक्तेन विमानेन विराजता । [ 1255 ]
सप्तर्षिलोकान्व्रजति पूज्यते ब्रह्मवादिभिः ।
चतुर्युगानि वै त्रिंशत्क्रीडित्वा तत्र देववत् ।
इह मानुष्यके लोके विप्रो भवति वेदवित् ।
विश्रामयति यो विप्रं श्रान्तमध्वनि कर्शितम् ।
विनश्यति तदा पापं तस्य वर्षकृतं नृप । [ 1260 ]
अथ प्रक्षालयेत्पादौ तस्य तोयेन भक्तिमान् ।
दशवर्षकृतं पापं व्यपोहति न संशयः ।
घृतेन वाथ तैलेन पादौ तस्य तु पूजयेत् ।
तद्द्वादशसमारूढं पापमाशु व्यपोहति ।
धेनुकाञ्चनदत्तस्य यच्च पुण्यमुदाहृतम् । [ 1265 ]
तत्पुण्यफलमाप्नोति यस्त्वेवं विप्रमर्चयेत् ।
स्वागतेन च यो विप्रं पूजयेदासनेन च ।
प्रत्युत्थानेन वा राजन्स देवानां प्रियो भवेत् ।
स्वागतेनाग्नयो राजन्नासनेन शतक्रतुः ।
प्रत्युत्थानेन पितरः प्रीतिं यान्त्यतिथिप्रियाः [ 1270 ]
अग्निशक्रपितॄणां च तेषां प्रीत्या नराधिप ।
संवत्सरकृतं पापं तस्य सद्यो विनश्यति ।
यः प्रयच्छति विप्राय आसनं माल्यभूषितम् ।
स याति मणिचित्रेण रथेनेन्द्रनिकेतनम् ।
पुरंदरपुरे तत्र दिव्यनारीविभूषितः । [ 1275 ]
षष्टिं वर्षसहस्राणि क्रीडत्यप्सरसां गणैः ।
वाहनं यः प्रयच्छेत ब्राह्मणाय युधिष्ठिर ।
स याति रत्नचित्रेण वाहनेन सुरालयम् ।
स तत्र कामं क्रीडित्वा सेव्यमानोऽप्सरोगणैः ।
इह राजा भवेद्राजन्नात्र कार्या विचारणा । [ 1280 ]
पादपं पल्लवाकीर्णं पुष्पितं फलितं तथा ।
गन्धमाल्यैरथाभ्यर्च्य वस्त्राभरणभूषितम् ।
यः प्रयच्छति विप्राय श्रोत्रियाय सदक्षिणम् ।
भोजयित्वा यथाकामं तस्य पुण्यफलं शृणु ।
जाम्बूनदविचित्रेण विमानेन विराजता । [ 1285 ]
पुरंदरपुरं याति जयशब्दरवैर्युतः ।
ततः शक्रपुरे रम्ये तस्य कल्पकपादपः ।
ददाति चेप्सितं सर्वं मनसा यद्यदिच्छति ।
यावन्ति तस्य पत्राणि पुष्पाणि च फलानि च ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते । [ 1290 ]
शक्रलोकावतीर्णश्च मानुष्यं लोकमागतः ।

$M_2$ प्रावरणोपेतां ( for प्रस्तर° ). — ( L. 1247 ) $G_3$ गंध- ( for वस्त्र- ). — ( L. 1250 ) $M_2$ तत्पुण्यं समनुप्राप्तः ( for the prior half ). $T_1$ ब्रह्म- ( for पितृ- ). — ( L. 1251 ) $M_4$ स्वल्पम् ( for शिल्पम् ). — ( L. 1253 ) $G_3$ $M_{2,4}$ तर्पि( $M_3$ कल्पि )तस्येह यत्फलं ( for the post. half ). — ( L. 1254 ) T $G_{1,2}$ शय्यां ( for विद्यां ). — ( L. 1259 ) $M_{2,4}$ अध्ववि- ( for अध्वनि ). — ( L. 1260 ) $M_4$ तस्य पुण्यफलं शृणु ( for the post. half ). — ( L. 1261 ) $M_3$ ततः ( for अथ ). — ( L. 1263 ) $M_4$ पादं. $M_2$ यस्तस्य ( for तस्य तु ). — ( L. 1264 ) $M_2$ स ( for तद् ). — ( L. 1265 ) $G_3$ $M_{2,3}$ ( *inf. lin.* ).$_4$ -दानस्य ( for -काञ्चन- ). $G_3$ तु; $M_4$ तत् ( for च ). — ( L. 1266 ) $M_3$ यस्त्वैवं; Madras ed. यस्त्वेनं ( for यस्त्वेवं ). — ( L. 1268 ) $M_3$ वै ( for वा ). $M_2$ भवेत्प्रियः ( by transp. ). — ( L. 1270 ) $M_2$ प्रीणयंति ( for प्रीतिं यान्ति ). — $M_1$ om. lines 1271–1273. — ( L. 1271 ) $M_2$ अग्नि शक्रं ( for अग्निशक्र- ). — ( L. 1273 ) $G_{2,3}$ $M_2$ यानं माल्यविभूषितं ( for the post. half ). — ( L. 1274 ) $G_3$ $M_4$ -युक्तेन ( for -चित्रेण ). $G_1$ [इं]दु- ( for [इ]न्द्र- ). — ( L. 1275 ) Kumbh. ed. and Madras ed. पुरंदरासने तत्र ( for the prior half ). $G_3$ $M_{2-4}$ -भूषण- ( for -नारीवि- ). $M_3$ -भूषितं. — ( L. 1276 ) $G_3$ $M_3$ षष्टिर्; $M_4$ षष्टि-. — After line 1276, $T_2$ $G_3$ $M_{2,3}$ ins.:

इह लोके तु धनवाञ्चतुर्वेदी द्विजो भवेत् ।

— ( L. 1281 ) $M_{2,4}$ सफलं ( for फलितं ). — ( L. 1282 ) T अर्चयित्वा ( for अथाभ्यर्च्य ). $G_3$ $M_{2,4}$ गंधमाल्यार्चितं कृत्वा ( for the prior half ). $M_3$ वस्त्रभूषणभूषितं. — ( L. 1287 ) $G_3$ $M_{2,4}$ तत्र ( for ततः ). $M_3$ कल्पस्य ( for कल्पक- ). — $G_2$ *om.* lines 1289–1292. — ( L. 1289 ) $G_3$ पर्णानि ( for पत्राणि ). — ( L. 1290 ) $G_3$ $M_{2,4}$ शक्र- ( for स्वर्ग- ). — ( L. 1291 ) $M_3$ मानुषं. — ( L. 1292 ) $G_3$ $M_4$ गजाश्वरथसंपूर्णं ( $G_3$ °र्णः ) ( for the

रथाश्वगजसंपूर्णं पुरं राज्यं च रक्षति ।
स्थापयित्वा तु मद्भक्त्या यो मत्प्रतिकृतिं नरः ।
आलयं विधिवत्कृत्वा पूजाकर्म च कारयेत् ।
स्वयं वा पूजयेद्भक्त्या तस्य पुण्यफलं शृणु । [ 1295 ]
अश्वमेधसहस्रस्य यत्पुण्यं समुदाहृतम् ।
तत्फलं समवाप्नोति मत्सालोक्यं प्रपद्यते ।
न जाने निर्गमं तस्य मम लोकाद्युधिष्ठिर ।
देवालये विप्रगृहे गोवाटे चत्वरेऽपि वा ।
प्रज्वालयति यो दीपं तस्य पुण्यफलं शृणु । [ 1300 ]
आरुह्य काञ्चनं यानं द्योतयन्सर्वतोदिशम् ।
गच्छेदादित्यलोकं स सेव्यमानः सुरोत्तमैः ।
तत्र प्रकामं क्रीडित्वा वर्षकोटिं महातपाः ।
इह लोके भवेद्विप्रो वेदवेदाङ्गपारगः ।
देवालयेषु वा राजन्ब्राह्मणावसथेषु वा । [ 1305 ]
चत्वरे वा चतुष्के वा रात्रौ वा यदि वा दिवा ।
नानागन्धर्ववाद्यानि धर्मश्रावणिकानि च ।
यस्तु कारयते भक्त्या मद्गतेनान्तरात्मना ।
तस्य देवा नरश्रेष्ठ पितरश्चापि हर्षिताः ।
सुप्रीताः संप्रयच्छन्ति विमानं कामगं शुभम् । [ 1310 ]
स च तेन विमानेन याति देवपुरं नरः ।
तत्र दिव्याप्सरोभिस्तु सेव्यमानः प्रमोदते ।
देवलोकावतीर्णस्तु सोऽस्मिँल्लोके नराधिप ।
वेदवेदाङ्गतत्त्वज्ञो भोगवान्ब्राह्मणो भवेत् ।
चत्वरे वा सभायां वा विस्तीर्णे वा सभाङ्गणे । [ 1315 ]
कृत्वाग्निकुण्डं विपुलं स्थण्डिलं वा युधिष्ठिर ।
तत्राग्निं चतुरो मासान्ज्वलयेद्यस्तु भक्तिमान् ।
समासेषु च मासेषु पौष्यादिषु ततो द्विजान् ।
भोजयेत्पायसं मृष्टं मद्गतेनान्तरात्मना ।
दक्षिणां च यथाशक्ति ब्राह्मणेभ्यो निवेदयेत् । [ 1320 ]
एवमग्निं तु यः कुर्यान्नित्यमेवार्चयंस्तु माम् ।
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ।
तेनाहं शंकरश्चैव पितरो ह्यग्नयस्तथा ।
यास्यामः परमां प्रीतिं नात्र कार्या विचारणा ।
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च । [ 1325 ]
सोऽस्मत्प्रीतिकरः श्रीमान्मम लोके महीयते ।
मम लोकावतीर्णश्च सोऽस्मिँल्लोके महायशाः ।
वेदवेदाङ्गविद्विप्रो जायते राजपूजितः ।
यः करोति नरश्रेष्ठ भरणं ब्राह्मणस्य तु ।
श्रोत्रियस्याभिजातस्य दरिद्रस्य विशेषतः । [ 1330 ]
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ।
गवां कोटिप्रदानेन यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमाप्नोति वर्षेणैकेन पाण्डव ।
काञ्चनेन विचित्रेण यानेनाम्बरशोभिना ।
स याति मामकं लोकं दिव्यस्त्रीगणसेवितः । [ 1335 ]
गीयमानो वरस्त्रीभिर्वर्षाणां कोटिविंशतिम् ।
क्रीडित्वा मामके लोके तत्र देवैरभिष्टुतः ।

---

prior half). T G1.3 M4 परं (for पुरं). T2 G1 M3 ऋच्छति; Kumbh. ed. वक्ष्यति (for रक्षति). — (L. 1293) G3 M4 स्नापयित्वा (for स्थाप°). M2 -कृतिर्; M4 -कृतं. G1.2 यो मद्भक्तिरतं नरं (for the post. half). — (L. 1294) M2 भक्त्या (for कृत्वा). G3 M2.4 -कर्माणि (for -कर्म च). — (L. 1297) M2.4 समनुप्राप्तो (for °वाप्नोति). — (L. 1298) G3 ब्रह्म- (for मम). — (L. 1299) T1 G1.3 च (for वा). — (L. 1301) T2 G2 M4 द्योतयत्. M2 द्योतयंतो दिशो दश (for the post. half). — (L. 1302) M4 -लोके (for -लोकं). M2 गच्छेदादित्यकं लोकं (for the prior half). G3 द्विजोत्तमैः; M2.4 [ऽ]प्सरोगणैः (for सुरोत्तमैः). — (L. 1303) G1 प्रकाशं (for °मं). G3 M2.4 -यशाः (for -तपाः). — (L. 1307) G3 -गांधर्व-. G3 M4 वा (for च). — (L. 1309) G3 तोषिताः (for हर्षिताः). — (L. 1310) M4 संप्रीताः. Kumbh. ed. सुखं (for शुभम्). — (L. 1311) G3 देव- (for तेन). — (L. 1312) G3 हि; M4 [ऽ]भि- (for प्र-). — (L. 1313) G3 M2.4 च लोकेस्मिन् (for सोऽस्मिँल्लोके). — (L. 1314) G3 भगवान् (for भोग°). — (L. 1315) G1.2 M3 च (for the third वा). G2.3 M3.4 सभांकणे; M2 गृहांकणे (for सभाङ्गणे). — (L. 1317) M2 [अ]ग्निश्. G2.3 M2-4 ज्वालयेद्. — (L. 1318) G2 M2.4 तु (for च). — (L. 1319) T1 M2 स घृतं मद्गतात्मना (for the post. half). — (L. 1321) G3 M2.4 [अ]र्चयेत् (for °यंस्). — (L. 1323) M2 [अ]पि (for [ए]व). — (L. 1325) G3 षष्टिर् (for the first षष्टिं). T1 M3 षष्टि-; G3 षष्टिर् (for the second षष्टिं). — (L. 1326) G2 M2.3 [ऽ]स्मिन् (for ऽस्मत्). — (L. 1329) G3 तारणं (for भ°). — (L. 1330) G3 -दांतस्य (for -जातस्य). — (L. 1333) Kumbh. ed. सर्व- (for पुण्य-). — (L. 1334) G3 M4 विमानेन (for विचित्रेण). G3 M4 चित्रेण (for यानेन). T G2 [अं]बुध-; G1 M3 [अं]बुद- (for [अ]म्बर-). Kumbh. ed. विमानेनार्कशोभिना (for the post. half). — (L. 1335) M4 स याति मामके लोके. M2 -सेवितं. — (L. 1336) T1 M2 -विंशतिः. — (L. 1338)

मानुष्यमवतीर्णस्तु वेदविद्ब्राह्मणो भवेत् ।
करकं कुण्डिकां वापि महद्वा जलभाजनम् ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु । [ 1340 ]
ब्रह्मकूर्चेन यत्पीते फलं प्रोक्तं यथाविधि ।
तत्पुण्यफलमाप्नोति जलभाजनदो नरः ।
सुतृप्तः सुप्रभः सौम्यः प्रहृष्टेन्द्रियमानसः ।
हंससारसयुक्तेन विमानेन विराजता ।
स याति वारुणं लोकं दिव्यगन्धर्वसेवितः । [ 1345 ]
पानीयं यः प्रयच्छेद्धि जीवानां जीवनं परम् ।
ग्रीष्मकेषु च मासेषु तस्य पुण्यफलं शृणु ।
कपिलाकोटिदानस्य यत्पुण्यं तु विधीयते ।
तत्पुण्यफलमाप्नोति पानीयं यः प्रयच्छति ।
पूर्णचन्द्रप्रकाशेन विमानेन विराजता । [ 1350 ]
स गच्छेच्चेन्द्रसदनं सेव्यमानोऽप्सरोगणैः ।
त्रिंशत्कोटियुगं तत्र दिव्यगन्धर्वसेवितः ।
क्रीडित्वा मानुषे लोके चतुर्वेदी द्विजो भवेत् ।
शिरोऽभ्यङ्गप्रदानेन तेजस्वी प्रियदर्शनः ।
सुभगो रूपवाञ्शूरः पण्डितश्च भवेद्द्विजः । [ 1355 ]
वस्त्रदायी तु तेजस्वी सर्वत्र प्रियदर्शनः ।
सुखभोगपतिः श्रीमान्स्त्रीणां नित्यं मनोरमः ।
उपानहौ च छत्रं च यो ददाति नरोत्तमः ।
स याति नरमुख्येन काञ्चनेन विराजता ।
शक्रलोकं महातेजाः सेव्यमानोऽप्सरोगणैः । [ 1360 ]
काष्ठपादुकदो याति विमानैर्वृषनिर्मितैः ।
धर्मराजपुरं रम्यं सेव्यमानोऽप्सरोत्तमैः ।
दन्तकाष्ठप्रदानेन प्रियवाक्यो भवेन्नरः ।
सुगन्धवदनः श्रीमान्मेधासौभाग्यसंयुतः ।
क्षीरं दधि घृतं वापि गुडं मधुरसं तथा । [ 1365 ]
ये प्रयच्छन्ति विप्रेभ्यः परां भक्तिं गता नराः ।
ते वृषैरश्वयानैश्च श्वेतस्रग्दामभूषिताः ।
उपगीयमाना गन्धर्वैर्यान्तीश्वरपुरं नराः ।
तत्र दिव्याप्सरोभिस्तु सेव्यमाना यथासुखम् ।
षष्टिं वर्षसहस्राणि मोदन्ते देवसंनिभाः । [ 1370 ]
ततः कालावतीर्णाश्च जायन्ते त्विह मानवाः ।
प्रभूतधनधान्याश्च भोगवन्तो नरोत्तमाः ।
वैशाखे मासि वैशाखे दिवसे पाण्डुनन्दन ।
वैवस्वतं समुद्दिश्य परां भक्तिमुपागताः ।
अभ्यर्च्य विधिवद्विप्रांस्तिलान्गुडसमायुतान् । [ 1375 ]
ये प्रयच्छन्ति विप्रेभ्यस्तेषां पुण्यफलं शृणु ।
गोप्रदानेन यत्पुण्यं विधिवत्पाण्डुनन्दन ।
तत्पुण्यं समनुप्राप्तो यमलोके महीयते ।
ततश्चापि च्युतः कालादिह राजा भविष्यति ।

---

M2 अवतीर्णे. —(L. 1339) M2.3 कुंठिकां (for कुण्डिकां). Kumbh. ed. करकां कर्णिकां वापि. —(L. 1341) G3 -कूर्चे च (for -कूर्चेन). T1 ब्रह्मकूर्चे स यत्प्रीते; M4 °र्चे पयःपीते. Madras ed. युधिष्ठिर (for यथाविधि). —(L. 1343) G3 सुप्रियः; M2 सुव्रतः (for सुप्रभः). G1.2 M3 स तृप्तः सप्रभः सौम्यः; Kumbh. ed. सुतृप्तः सर्वसौगंधः. —(L. 1345) T1 G1 M3 देव- (for दिव्य-). G1 -सेवितं. —T1 om. (hapl.) lines 1346–1352; the same portion is damaged in T2. —(L. 1346) M3 (*sup. lin.*) जीवितं (for जीवनं). —(L. 1347) M4 ग्रैष्मकेषु. G1 M3 ग्रीष्मे चतुर्षु मासेषु; Kumbh. ed. ग्रीष्मे च त्रिषु मासेषु. —(L. 1352) M2 -समास्; M4 -शतं (for -युगं). —M2 reads from सुभगो (in line 1355) up to सुखभोगपतिः (in line 1357) after line 1358, repeating the prior half of line 1355. —(L. 1355) G3 M3.4 चैव (for शूरः). M2 (first time) भवेच्च सुभगः श्रीमान्, (second time) स याति रूपवांश्चैव (for the prior half). —(L. 1356) G3 M4 पुरुषस् (for तेजस्वी). T वस्त्रदो याति तेजस्वी (for the prior half). G3 M4 तेजस्वी (for सर्वत्र). —(L. 1357) M2 om. श्रीमान्. G3 M4 सुभगो भवति श्रीमान् (for the prior half). G3 M2 मनोहरः (M2 °हराः) (for °रमः). —(L. 1358) G1 नरेश्वर; G3 द्विजोत्तमः; M2.4 नरोत्तम. —(L. 1359) M2 कांचनच्छत्रशोभि वा (for the post. half). —(L. 1361) T G1.2 M2.3 काष्ठपादुकदा यांति. T -संयुतैः; G1 M3 -सेवितैः; M2 -योजितैः (for -निर्मितैः). —(L. 1362) G3 द्विजोत्तमैः (for ऽप्सरो°). M2–4 सेव्यमानाः सुरोत्तमैः. —(L. 1363) G3 M2 मृष्ट- (for प्रिय-). —(L. 1364) G3 मेधावी भाग्यसंयुतः (for the post. half). —(L. 1365) M3 दधिक्षुतं. G1 M2.4 गुळं (for गुडं). —(L. 1366) M2 उपागताः (for गता नराः). —(L. 1367) M2 तैर् (for ते). G3 वृक्षैर् (for वृषैर्). G3 एतैः; M4 श्वेतैः (for श्वेत-). T1 G2 M3 -धामभूषिताः; G3 M2.4 -दामभूषितैः. —(L. 1368) M2 नीयमानाश्च गंधर्वैर् (for the prior half which is hypermetric). G3 स्वर्ग-; M2 शक्र- (for [ई]श्वर-). —(L. 1369) G1 च (for तु). T G1.2 M3 सेव्यमानो. —(L. 1370) G3 षष्टिर्; Kumbh. and Madras eds. षष्टि-. M2 सर्वदेवतैः (for देवसंनिभाः). —(L. 1371) T G1.2 M3 नराः (for ततः). —(L. 1373) T1 वैशाखे माघमासे वा (for the prior half). —(L. 1375) T1 G1 वीरांस् (for विप्रान्). M2.4 गुळ- (for गुड-).

तस्मिन्नेव दिने विप्रान्भोजयित्वा सदक्षिणम् । [ 1380 ]
तोयपूर्णानि दिव्यानि भाजनानि दिशन्ति ये ।
ते यान्त्यादित्यवर्णाभैर्विमानैर्वरुणालयम् ।
तत्र दिव्याङ्गनाभिस्तु रमन्ते कामकामिनः ।
ततोऽवतीर्णाः कालेन ते चास्मिन्मानुषे पुनः ।
भोगवन्तो द्विजश्रेष्ठा भविष्यन्ति न संशयः । [ 1385 ]
अनन्तराशी यश्चापि वर्तते व्रतवत्सदा ।
सत्यवाक्क्रोधरहितः शुचिः स्नानरतः सदा ।
स विमानेन दिव्येन याति शक्रपुरं नरः ।
तत्र दिव्याप्सरोभिस्तु वर्षकोटिं महातपाः ।
क्रीडित्वा मानुषे लोके जायते वेदविद्विजः । [ 1390 ]
एकभुक्तेन यश्चापि वर्षमेकं तु वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यशौचसमन्वितः ।
स विमानेन दिव्येन याति शक्रपुरं नरः ।
दशकोटिसहस्राणि क्रीडित्वाप्सरसां गणैः ।
इह मानुष्यके लोके ब्राह्मणो वेदविद्भवेत् । [ 1395 ]
चतुर्थकालं यो भुङ्क्ते ब्रह्मचारी जितेन्द्रियः ।
वर्तते चैकवर्षं तु तस्य पुण्यफलं शृणु ।
चित्रबर्हिणयुक्तेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन स महेन्द्रपुरं नरः ।
अङ्कशाभिर्वरस्त्रीभिः सेव्यमानो यथासुखम् । [ 1400 ]
ततो द्वादशकोटिं स समाः सम्यक्प्रमोदते ।
शक्रलोकावतीर्णश्च लोके चास्मिन्नराधिप ।
भवेद्वै ब्राह्मणो विद्वान्क्षमावान्वेदपारगः ।
षष्ठकाले तु योऽश्नाति वर्षमेकमकल्मषः ।
ब्रह्मचर्यव्रतैर्युक्तः शुचिः क्रोधविवर्जितः । [ 1405 ]
तपोयुक्तस्य तस्याथ शृणुष्व फलमुत्तमम् ।
अत्यादित्यप्रकाशेन विमानेनार्कसंनिभः ।
स याति मम लोकान्वै दिव्यनारीनिषेवितः ।
तत्र साध्यैर्मरुद्भिश्च पूज्यमानो यथासुखम् ।
पश्यन्नेव सदा मां तु क्रीडत्यप्सरसां गणैः । [ 1410 ]
पक्षोपवासं यश्चापि कुरुते मद्गतात्मना ।
समाप्ते तु व्रते तांस्तर्पयेच्छ्रोत्रियान्द्विजान् ।
सोऽपि गच्छति दिव्येन विमानेन महातपाः ।
द्योतयन्प्रभया व्योम मम लोकं प्रपद्यते ।
स तत्र मोदते कामं कामरूपी यथासुखम् । [ 1415 ]
त्रिंशत्कोटिसमा राजन्क्रीडित्वा तत्र देववत् ।
इह मानुष्यके लोके पूजनीयो द्विजो भवेत् ।
त्रयाणामपि वेदानां साङ्गानां पारगो भवेत् ।
यश्च मासोपवासं वै कुरुते मद्गतात्मना ।
जितेन्द्रियो जितक्रोधो जितधीः स्नानतत्परः । [ 1420 ]
समाप्ते नियमे तत्र भोजयित्वा द्विजोत्तमान् ।
दक्षिणां च ततो दद्यात्प्रहृष्टेनान्तरात्मना ।
स गच्छति महातेजा ब्रह्मलोकमनुत्तमम् ।
सिंहयुक्तेन यानेन दिव्यस्त्रीगणसेवितः ।
स तत्र ब्रह्मणो लोके दिव्यर्षिगणसेवितः । [ 1425 ]
शतकोटिसमा राजन्यथाकामं प्रमोदते ।
ततः कालावतीर्णश्च सोऽस्मिँल्लोके द्विजो भवेत् ।
षडङ्गविच्चतुर्वेदी त्रिंशजन्मान्यरोगवान् ।
यस्त्यक्त्वा सर्वकर्माणि शुचिः क्रोधविवर्जितः ।
महाप्रस्थानमेकाग्रो याति मद्गतमानसः । [ 1430 ]
स गच्छेदिन्द्रसदनं विमानेन महातपाः ।
महामणिविचित्रेण सौवर्णेन विराजता ।
शतकोटिसमास्तत्र सुराधिपतिपूजितः ।

T1 M3 -समावृतान्; T2 G1.2 °श्रुतान्; M2 -समन्वितान्. — (L. 1377) M2 -दाने च (for -दानेन). — (L. 1380) G3 सदक्षिणैः; Kumbh. ed. सुदक्षिणं. — (L. 1381) G3 M4 नव्यानि; M2 रम्याणि (for दिव्यानि). — (L. 1383) T1 काल-; M4 सर्व- (for काम-). — (L. 1384) T G2 [ऽ]वतीर्णः. G1 पुरः (for पुनः). — M2 om. lines 1386–1437. — (L. 1386) M3 -राशयश् (for -राशी यश्). M3 वर्तेते. G2 व्रतवान् (for °वत्). — (L. 1387) G1.2 स्नानरतिः. — (L. 1388) M4 विमानेन स दिव्येन. — T2 G3 M4 om. (hapl.) lines 1389–1393. — (L. 1394) G3 M4 -समास्तत्र (for -सहस्राणि). — (L. 1396) T1 -काले (for -कालं). — (L. 1397) G3 M4 वर्तते वर्षमेकं यस् (for the prior half). — (L. 1400) M3 अप्सरोभिर् (for अङ्कशा°). — (L. 1401) G3 M4 तत्र (for ततो). — (L. 1402) G1 तु (for the first च). — (L. 1404) G3 षष्ठं कालं; M4 षष्ठकालं. — (L. 1406) G3 ततो (for तपो-). G3 M4 [अ]पि (for [अ]थ). — (L. 1408) G3 M4 -नरै( M4 -जनै )र्वृतः (for -निषेवितः). — (L. 1412) G3 M4 शुचीन् (for द्विजान्). — (L. 1416) G3 transp. the prior half and the post. half. G3 नृप (for राजन्) and देववत्तत्र (by transp.). — (L. 1417) G3 M4 द्विजोत्तमैः (for द्विजो भवेत्). — G1.2 om. (hapl.) lines 1420–1422. — (L. 1422) M4 दक्षिणाश्च. — G3 M4 om. (hapl.) line 1425. — (L. 1429) G3 M4 -कार्याणि (for -कर्माणि). — (L. 1430) T1 G2 M3 मम (for महा-). — (L. 1431) M4 विराजता (for महा-

मानुष्यमवतीर्णस्तु वेदविद्ब्राह्मणो भवेत् ।
करकं कुण्डिकां चापि महद्वा जलभाजनम् ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु । [ 1340 ]
ब्रह्मकूर्चेन यत्पीते फलं प्रोक्तं यथाविधि ।
तत्पुण्यफलमाप्नोति जलभाजनदो नरः ।
सुतृप्तः सुप्रभः सौम्यः प्रहृष्टेन्द्रियमानसः ।
हंससारसयुक्तेन विमानेन विराजता ।
स याति वारुणं लोकं दिव्यगन्धर्वसेवितः । [ 1345 ]
पानीयं यः प्रयच्छेद्वै जीवानां जीवनं परम् ।
ग्रीष्मकेषु च मासेषु तस्य पुण्यफलं शृणु ।
कपिलाकोटिदानस्य यत्पुण्यं तु विधीयते ।
तत्पुण्यफलमाप्नोति पानीयं यः प्रयच्छति ।
पूर्णचन्द्रप्रकाशेन विमानेन विराजता । [ 1350 ]
स गच्छेचेन्द्रसदनं सेव्यमानोऽप्सरोगणैः ।
त्रिंशत्कोटियुगं तत्र दिव्यगन्धर्वसेवितः ।
क्रीडित्वा मानुषे लोके चतुर्वेदी द्विजो भवेत् ।
शिरोऽभ्यङ्गप्रदानेन तेजस्वी प्रियदर्शनः ।
सुभगो रूपवाञ्शूरः पण्डितश्च भवेद्द्विजः । [ 1355 ]
वस्त्रदायी तु तेजस्वी सर्वत्र प्रियदर्शनः ।
सुखभोगपतिः श्रीमान्स्त्रीणां नित्यं मनोरमः ।
उपानहौ च छत्रं च यो ददाति नरोत्तमः ।
स याति नरमुख्येन काञ्चनेन विराजता ।
शक्रलोकं महातेजाः सेव्यमानोऽप्सरोगणैः । [ 1360 ]
काष्ठपादुकदो याति विमानैर्नृपनिर्मितैः ।
धर्मराजपुरं रम्यं सेव्यमानोऽप्सरोत्तमैः ।
दन्तकाष्ठप्रदानेन प्रियवाक्यो भवेन्नरः ।
सुगन्धवदनः श्रीमान्मेधासौभाग्यसंयुतः ।
क्षीरं दधि घृतं वापि गुडं मधुरसं तथा । [ 1365 ]
ये प्रयच्छन्ति विप्रेभ्यः परां भक्तिं गता नराः ।
ते वृषैरश्वयानैश्च श्वेतस्रग्दामभूषिताः ।
उपगीयमाना गन्धर्वैर्यान्तीश्वरपुरं नराः ।
तत्र दिव्याप्सरोभिस्तु सेव्यमाना यथासुखम् ।
षष्टिं वर्षसहस्राणि मोदन्ते देवसंनिभाः । [ 1370 ]
ततः कालावतीर्णाश्च जायन्ते त्विह मानवाः ।
प्रभूतधनधान्याश्च भोगवन्तो नरोत्तमाः ।
वैशाखे मासि वैशाखे दिवसे पाण्डुनन्दन ।
वैवस्वतं समुद्दिश्य परां भक्तिमुपागताः ।
अभ्यर्च्य विधिवद्विप्रांस्तिलान्गुडसमायुतान् । [ 1375 ]
ये प्रयच्छन्ति विप्रेभ्यस्तेषां पुण्यफलं शृणु ।
गोप्रदानेन यत्पुण्यं विधिवत्पाण्डुनन्दन ।
तत्पुण्यं समनुप्राप्तो यमलोके महीयते ।
ततश्चापि च्युतः कालादिह राजा भविष्यति ।

---

$M_2$ अवतीर्णे. —(L. 1339) $M_{2.3}$ कुंठिकां (for कुण्डिकां). Kumbh. ed. करकां कर्णिकां वापि. —(L. 1341) $G_3$ -कूर्चे च (for -कूर्चेन). $T_1$ ब्रह्मकूर्चे स यत्प्रीते; $M_4$ °र्चे पयःपीते. Madras ed. युधिष्ठिर (for यथाविधि). —(L. 1343) $G_3$ सुप्रियः; $M_2$ सुव्रतः (for सुप्रभः). $G_{1.2}$ $M_3$ स तृप्तः सप्रभः सौम्यः; Kumbh. ed. सुतृप्तः सर्वसौगंधः. —(L. 1345) $T_1$ $G_1$ $M_3$ देव- (for दिव्य-). $G_1$ -सेवितं. —$T_1$ om. (hapl.) lines 1346–1352; the same portion is damaged in $T_2$. —(L. 1346) $M_3$ (*sup. lin.*) जीवितं (for जीवनं). —(L. 1347) $M_4$ ग्रैष्मकेषु. $G_1$ $M_3$ ग्रीष्मे चतुर्षु मासेषु; Kumbh. ed. ग्रीष्मे च त्रिषु मासेषु. —(L. 1352) $M_2$ -समास्; $M_4$ -शतं (for -युगं). —$M_2$ reads from सुभगो (in line 1355) up to सुखभोगपतिः (in line 1357) after line 1358, repeating the prior half of line 1355. —(L. 1355) $G_3$ $M_{3.4}$ चैव (for शूरः). $M_2$ (first time) भवेच्च सुभगः श्रीमान्, (second time) स याति रूपवांश्चैव (for the prior half). —(L. 1356) $G_3$ $M_4$ पुरुषस् (for तेजस्वी). T वस्त्रदो याति तेजस्वी (for the prior half). $G_3$ $M_4$ तेजस्वी (for सर्वत्र). —(L. 1357) $M_2$ om. श्रीमान्. $G_3$ $M_4$ सुभगो भवति श्रीमान् (for the prior half). $G_3$ $M_2$ मनोहरः ($M_2$ °हराः) (for °रमः). —(L. 1358) $G_1$ नरेश्वर; $G_3$ द्विजोत्तमः; $M_{2.4}$ नरोत्तम. —(L. 1359) $M_2$ कांचनच्छत्रशोभि वा (for the post. half). —(L. 1361) T $G_{1.2}$ $M_{2.3}$ काष्ठपादुकदा यांति. T -संयुतैः; $G_1$ $M_3$ -सेवितैः; $M_2$ -योजितैः (for -निर्मितैः). —(L. 1362) $G_3$ द्विजोत्तमैः (for ऽप्सरो°). $M_{2-4}$ सेव्यमानाः सुरोत्तमैः. —(L. 1363) $G_3$ $M_2$ मृष्ट- (for प्रिय-). —(L. 1364) $G_3$ मेधावी भाग्यसंयुतः (for the post. half). —(L. 1365) $M_3$ दधिक्षतं. $G_1$ $M_{2.4}$ गुळं (for गुडं). —(L. 1366) $M_2$ उपागताः (for गता नराः). —(L. 1367) $M_2$ तैर् (for ते). $G_3$ वृक्षैर् (for वृषैर्). $G_3$ एतैः; $M_4$ श्वेतैः (for श्वेत-). $T_1$ $G_2$ $M_3$ -धामभूषिताः; $G_3$ $M_{2.4}$ -दामभूषितैः. —(L. 1368) $M_2$ नीयमानाश्च गंधर्वैर् (for the prior half which is hypermetric). $G_3$ स्वर्ग-; $M_2$ शक्र- (for [ई]श्वर-). —(L. 1369) $G_1$ च (for तु). T $G_{1.2}$ $M_3$ सेव्यमानो. —(L. 1370) $G_3$ षष्टिर्; Kumbh. and Madras eds. षष्टि-. $M_2$ सर्वदेवतैः (for देवसंनिभाः). —(L. 1371) T $G_{1.2}$ $M_3$ नराः (for ततः). —(L. 1373) $T_1$ वैशाखे माघमासे वा (for the prior half). —(L. 1375) $T_1$ $G_1$ वीरांस् (for विप्रांस्). $M_{2.4}$ गुळ- (for गुड-).

तस्मिन्नेव दिने विप्रान्भोजयित्वा सदक्षिणम् । [ 1380 ]
तोयपूर्णानि दिव्यानि भाजनानि दिशन्ति ये ।
ते यान्त्यादित्यवर्णाभैर्विमानैर्वरुणालयम् ।
तत्र दिव्याङ्गनाभिस्तु रमन्ते कामकामिनः ।
ततोऽवतीर्णाः कालेन ते चास्मिन्मानुषे पुनः ।
भोगवन्तो द्विजश्रेष्ठा भविष्यन्ति न संशयः । [ 1385 ]
अनन्तराशी यश्चापि वर्तते व्रतवत्सदा ।
सत्यवाक्क्रोधरहितः शुचिः स्नानरतः सदा ।
स विमानेन दिव्येन याति शक्रपुरं नरः ।
तत्र दिव्याप्सरोभिस्तु वर्षकोटिं महातपाः ।
क्रीडित्वा मानुषे लोके जायते वेदविद्द्विजः । [ 1390 ]
एकभुक्तेन यश्चापि वर्षमेकं तु वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यशौचसमन्वितः ।
स विमानेन दिव्येन याति शक्रपुरं नरः ।
दशकोटिसहस्राणि क्रीडित्वाप्सरसां गणैः ।
इह मानुष्यके लोके ब्राह्मणो वेदविद्भवेत् । [ 1395 ]
चतुर्थकालं यो भुङ्क्ते ब्रह्मचारी जितेन्द्रियः ।
वर्तते चैकवर्षं तु तस्य पुण्यफलं शृणु ।
चित्रबर्हिणयुक्तेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन स महेन्द्रपुरं नरः ।
अङ्कशाभिर्वरस्त्रीभिः सेव्यमानो यथासुखम् । [ 1400 ]
ततो द्वादशकोटिं स समाः सम्यक्प्रमोदते ।
शक्रलोकावतीर्णश्च लोके चास्मिन्नराधिप ।
भवेद्वै ब्राह्मणो विद्वान्क्षमावान्वेदपारगः ।
षष्ठकाले तु योऽश्नाति वर्षमेकमकल्मषः ।
ब्रह्मचर्यव्रतैर्युक्तः शुचिः क्रोधविवर्जितः । [ 1405 ]
तपोयुक्तस्य तस्याथ शृणुष्व फलमुत्तमम् ।
अत्यादित्यप्रकाशेन विमानेनार्कसंनिभः ।
स याति मम लोकान्वै दिव्यनारीनिषेवितः ।
तत्र साध्यैर्मरुद्भिश्च पूज्यमानो यथासुखम् ।
पश्यन्नेव सदा मां तु क्रीडत्यप्सरसां गणैः । [ 1410 ]
पक्षोपवासं यश्चापि कुरुते मद्गतात्मना ।
समाप्ते तु व्रते तास्मिंस्तर्पयेच्छ्रोत्रियान्द्विजान् ।
सोऽपि गच्छति दिव्येन विमानेन महातपाः ।
द्योतयन्प्रभया व्योम मम लोकं प्रपद्यते ।
स तत्र मोदते कामं कामरूपी यथासुखम् । [ 1415 ]
त्रिंशत्कोटिसमा राजन्क्रीडित्वा तत्र देववत् ।
इह मानुष्यके लोके पूजनीयो द्विजो भवेत् ।
त्रयाणामपि वेदानां साङ्गानां पारगो भवेत् ।
यश्च मासोपवासं वै कुरुते मद्गतात्मना ।
जितेन्द्रियो जितक्रोधो जितधीः स्नानतत्परः । [ 1420 ]
समाप्ते नियमे तत्र भोजयित्वा द्विजोत्तमान् ।
दक्षिणां च ततो दद्यात्प्रहृष्टेनान्तरात्मना ।
स गच्छति महातेजा ब्रह्मलोकमनुत्तमम् ।
सिंहयुक्तेन यानेन दिव्यस्त्रीगणसेवितः ।
स तत्र ब्रह्मणो लोके दिव्यर्षिगणसेवितः । [ 1425 ]
शतकोटिसमा राजन्यथाकामं प्रमोदते ।
ततः कालावतीर्णश्च सोऽस्मिँल्लोके द्विजो भवेत् ।
षडङ्गविच्चतुर्वेदी त्रिंशज्जन्मान्यरोगवान् ।
यस्त्यक्त्वा सर्वकर्माणि शुचिः क्रोधविवर्जितः ।
महाप्रस्थानमेकाग्रो याति मद्गतमानसः । [ 1430 ]
स गच्छेदिन्द्रसदनं विमानेन महातपाः ।
महामणिविचित्रेण सौवर्णेन विराजता ।
शतकोटिसमास्तत्र सुराधिपतिपूजितः ।

T1 M3 -समावृतान्; T2 G1.2 °श्रुतान्; M2 -समन्वितान्. — (L. 1377) M2 -दाने च (for -दानेन). — (L. 1380) G3 सदक्षिणैः; Kumbh. ed. सुदक्षिणं. — (L. 1381) G3 M4 नव्यानि; M2 रम्याणि (for दिव्यानि). — (L. 1383) T1 काल-; M4 सर्व- (for काम-). — (L. 1384) T G2 [ऽ]वतीर्णैः. G1 पुरः (for पुनः). — M2 om. lines 1386–1437. — (L. 1386) M3 -राशयश् (for -राशी यश्). M3 वर्तेत. G2 व्रतवान् (for °वत्). — (L. 1387) G1.2 स्नानरतिः. — (L. 1388) M4 विमानेन स दिव्येन. — T2 G3 M4 om. (hapl.) lines 1389–1393. — (L. 1394) G3 M4 -समास्तत्र (for -सहस्राणि). — (L. 1396) T1 -काले (for -कालं). — (L. 1397) G3 M4 वर्तेत वर्षमेकं यस् (for the prior half). — (L. 1400) M3 अप्सरोभिर् (for अङ्कशा°). — (L. 1401) G3 M4 तत्र (for ततो). — (L. 1402) G1 तु (for the first च). — (L. 1404) G3 षष्ठं कालं; M4 षष्ठकालं. — (L. 1406) G3 ततो (for तपो-). G3 M4 [अ]पि (for [अ]थ). — (L. 1408) G3 M4 -नरैः (M4 -जनै )र्वृतः (for -निषेवितः). — (L. 1412) G3 M4 शुचीन् (for द्विजान्). — (L. 1416) G3 transp. the prior half and the post. half. G3 नृप (for राजन्) and देववत्तत्र (by transp.). — (L. 1417) G3 M4 द्विजोत्तमैः (for द्विजो भवेत्). — G1.2 om. (hapl.) lines 1420–1422. — (L. 1422) M4 दक्षिणाश्च. — G3 M4 om. (hapl.) line 1425. — (L. 1429) G3 M4 -कार्याणि (for -कर्माणि). — (L. 1430) T1 G2 M3 मम (for महा-). — (L. 1431) M4 विराजता (for महा-

नाकपृष्ठे निवसति दिव्यस्त्रीगणसेवितः ।
शक्रलोकावतीर्णश्च मानुषेषूपजायते । [1435]
राज्ञां राजा महातेजाः सर्वलोकार्चितः प्रभुः ।
प्रायोपवेशं यश्चापि कुरुते मद्गतात्मना ।
नमो ब्रह्मण्यदेवायेत्युक्त्वा मन्त्रं समाहितः ।
अन्तःस्वस्थो जितक्रोधस्तस्य पुण्यफलं शृणु ।
कामगः कामरूपी च बालसूर्यसमप्रभः । [1440]
स विमानेन दिव्येन याति लोकाननामयान् ।
स्वर्गात्स्वर्गं महातेजा गत्वा चैव यथासुखम् ।
मम लोकेषु रमते यावदाभूतसंप्लवम् ।
अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना ।
सोऽपि यानेन दिव्येन मम लोकं प्रपद्यते । [1445]
ततः सर्वगुणोपेतः पश्यन्नपि स मां सदा ।
त्रिंशत्कोटिसमा राजन्मोदते मम संनिधौ ।
ततोऽवतीर्णः कालेन वेदविद्ब्राह्मणो भवेत् ।
कर्षणं साधयन्यस्तु मां प्रसन्नः शुचिव्रतः ।
नमो ब्रह्मण्यदेवायेत्येतं मन्त्रमुदाहरन् । [1450]
बालसूर्यप्रकाशेन विमानेन विराजता ।
मम लोकं समासाद्य षट्कोटिं तु प्रमोदते ।
मम लोकावतीर्णश्च सोऽस्मिँल्लोके नृपो भवेत् ।
निवेशयति मन्मूर्त्या आत्मानं मद्गतः शुचिः ।
रुद्रदक्षिणमूर्त्यां वा चतुर्दश्यां विशेषतः । [1455]
सिद्धैर्ब्रह्मर्षिभिश्चैव देवलोकैश्च पूजितः ।
गन्धर्वैर्भूतसंघैश्च गीयमानो महातपाः ।
प्रविशेत्स महातेजा मां वा शंकरमेव वा ।
तस्यापुनर्भवं (sic) राजन्नात्र कार्या विचारणा ।
गोकृते स्त्रीकृते चैव गुरुविप्रकृतेऽपि वा । [1460]
हन्यन्ते ये तु राजेन्द्र शक्रलोकं व्रजन्ति ते ।
तत्र जाम्बूनदमये विमाने कामगामिनि ।
मन्वन्तरं प्रमोदन्ते दिव्यनारीनिषेविताः ।
आश्रुतस्याप्रदानेन दत्तस्य हरणेन च ।
जन्मप्रभृति यद्दत्तं सर्वं नश्यति भारत । [1465]
नागोप्रदास्तत्र पयः पिबन्ति
नाभूमिदा भूमिमथाश्नुवन्ति ।
यान्यान्कामान्ब्राह्मणेभ्यो ददाति
तांस्तान्कामान्स्वर्गलोके च भुङ्क्ते ।
यद्यदिष्टतमं द्रव्यं न्यायेनोपार्जितं च यत् । [1470]
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ।
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गां च दरिद्रो नाम जायते ।
दानं यत्तत्फलं नैति श्रोत्रियाय न दीयते ।
श्रोत्रिया यत्र नाश्नन्ति न देवास्तत्र भुञ्जते । [1475]
श्रोत्रियेभ्यः परं नास्ति परमं दैवतं महत् ।
निधानं चापि राजेन्द्र तस्माच्छ्रोत्रियभोजनात् ।

Colophon.

---

तपाः ). — ( L. 1434 ) $G_1$ -सेवितैः ( for °तः ). — ( L. 1435 ) $M_4$ मानुष्येषु. — ( L. 1437 ) $G_3$ $M_4$ कुर्यान् ( for च्चापि ) and मद्गतेनांतरात्मना (for the post. half). — ( L. 1441 ) $M_2$ याति लोकांस्तु मामकान् ( for the post. half ). — ( L. 1442 ) $G_2$ स्वर्गाद्गम- (sic) ( for °त्स्वर्गं ). — $G_3$ om. lines 1444–1465. — ( L. 1445 ) $M_4$ मम लोके महीयते ( for the post. half ). — ( L. 1446 ) $M_4$ तत्र ( for ततः ). $M_{2.4}$ एव ( for अपि ). $T_1$ मा ( for मां ). — ( L. 1449 ) $M_{2.3}$ ( *inf. lin.* ) कारीषं ( for कर्षणं ). $G_2$ $M_3$ ( *inf. lin.* ) साधयेद्; $M_2$ सेवयेद्; $M_4$ कारयन् ( for साध° ). $M_4$ तं ( for तु ). $M_{2-4}$ प्रपन्नः ( for प्रसन्नः ). — ( L. 1450 ) Madras ed. उदीरयन् ( for उदाहरन् ). — ( L. 1452 ) $G_1$ $M_{2.3}$ वर्षकोटिं ( for षट्कोटिं तु ). $M_2$ स ( for प्र- ). — ( L. 1453 ) T $M_4$ लोकेस्मिन्क्षत्रियो भवेत् ( for the post. half ). — ( L 1454 ) $M_2$ निवेदयति तन्मूर्तिम् ( for the prior half ). — ( L. 1455 ) $G_1$ -दाक्षिण-. $M_3$ रुद्रं दाक्षिणमूर्तिं वा. — ( L. 1456 ) $T_1$ ब्रह्मर्षयश्. $M_3$ om. चैव. $G_1$ सिद्धैश्च ब्रह्मर्षिभिर् ( submetric ); $M_4$ सिद्धैर्ब्रह्मर्षिसंघैश्च ( for the prior half ). $M_2$ वेदैः सर्वैश् ( for देवलोकैश् ). — ( L. 1457 ) $M_2$ गंधर्व- ( for गन्धर्वैर् ). $M_4$ महायशाः ( for °तपाः ). — ( L. 1459 ) $G_1$ न स्यात् ( for तस्य ). — ( L. 1460 ) $M_{2.4}$ वापि ( for चैव ). T $G_2$ च ( for वा ). — ( L. 1464 ) $T_1$ भृत्य* ( for दत्तस्य ). $T_2$ भृत्यस्याभरणेन च ( for the post. half ). — ( L. 1466 ) $G_{2.3}$ न गोप्रदास् ( for नागो° ). — ( L. 1467 ) $T_1$ $G_{2.3}$ अथाप्नुवंति; $T_2$ अवाप्नु° ( for अथाश्नु° ). — ( L. 1470 ) $M_2$ दिव्यं ( for द्रव्यं ). $T_1$ तद्धर्मोपार्जितं च यत् ( for the post. half ). — ( L. 1471 ) $G_3$ [अ]क्षय्यम्. — ( L. 1472 ) $M_4$ तीर्थान्यनुपगम्य तु ( for the post. half ). — ( L. 1474 ) T यद्यत्; $M_{2.3}$ च यत् ( for यत्तत् ). $G_1$ चैव; $G_2$ नैव; $M_{2.3}$ नैतत् ( for नैति ). $G_3$ हीयते ( for दी° ). — ( L. 1475 ) $G_3$ भुज्यते ( sic ). — ( L. 1476 ) T $G_3$ $M_{2.4}$ दैवतं परमं ( $G_3$ $M_4$ °तं तारणं; $M_2$ °तास्तारणं )

युधिष्ठिर उवाच।

विप्रयोगे शरीरस्य सेन्द्रियस्य विशेषतः।
अन्तरा वर्तमानस्य गतिः प्राणस्य कीदृशी।

भगवानुवाच।

शुभाशुभकृतं सर्वं प्राप्नोतीह फलं नरः। [ 1480 ]
न तु सर्वस्य भूतस्य पञ्चत्वं वापि विद्यते।
पञ्चत्वं पाण्डवश्रेष्ठ भूरिभूतिकरं नृणाम्।
तेषां पञ्च महायज्ञान्ये कुर्वन्ति द्विजोत्तमाः।
पञ्चत्वं पञ्चभिर्भूतैर्वियोगं संप्रचक्षते।
न जायते न म्रियते पुरुषः शाश्वतः सदा। [ 1485 ]
प्रायेण मरणं नाम पापिनामेव पाण्डव।
येषां तु न गतिः पुण्या तेषां मरणमुच्यते।
प्रायेणाकृतकृत्यास्तु मृत्योरुद्विजते जनः।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्।

युधिष्ठिर उवाच।

पञ्च यज्ञाः कथं देव क्रियन्तेऽत्र द्विजातिभिः। [1490]
तेषां नाम च देवेश वक्तुमर्हस्यशेषतः।

भगवानुवाच।

शृणु पञ्च महायज्ञान्कीर्त्यमानान्युधिष्ठिर।
यैरेव ब्रह्मसालोक्यं लभ्यते गृहमेधिना।
ऋषियज्ञं ब्रह्मयज्ञं भूतयज्ञं च पार्थिव।
नृयज्ञं पितृयज्ञं च पञ्च यज्ञान्प्रचक्षते। [ 1495 ]
तर्पणं ऋषियज्ञं स्यात्स्वाध्यायो ब्रह्मयज्ञकः।
भूतयज्ञो बलिर्यज्ञो नृयज्ञोऽतिथिपूजनम्।
पितॄनुद्दिश्य यत्कर्म पितृयज्ञः प्रकीर्तितः।
हुतं चाप्यहुतं चैव तथा प्रहुतमेव च।
प्राशितं बलिदानं च पाकयज्ञान्प्रचक्षते। [ 1500 ]
वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः।
अहुतं च भवेद्दत्तं प्रहुतं ब्राह्मणाशितम्।
प्राणाग्निहोत्रहोमं च प्राशितं विधिवद्विदुः।
बलिकर्म च राजेन्द्र पाकयज्ञाः प्रकीर्तिताः।
केचित्पञ्च महायज्ञान्पाकयज्ञान्प्रचक्षते। [ 1505 ]
अपरे ब्रह्मयज्ञादीन्महायज्ञविदो विदुः।
सर्व एते महायज्ञाः सर्वथा परिकीर्तिताः।
बुभुक्षितान्ब्राह्मणांस्तु यथाशक्ति न हापयेत्।
अहन्यहनि ये त्वेतानकृत्वा भुञ्जते स्वयम्।
केवलं मलमश्नन्ति ते नरा न च संशयः। [ 1510 ]
तस्मात्स्नात्वा द्विजो विद्वान्कुर्यादेतान्दिने दिने।
अतोऽन्यथा तु भुञ्जन्वै प्रायश्चित्तीयते द्विजः।

---

महत् ( for the post. half ). — ( L. 1477 ) T $G_{2.3}$ निदानं. $T_1$ $M_4$ नास्मात्; $M_2$ नान्यत् ( for तस्मात् ). — Colophon. — *Sub-parvan :* $T_1$ G $M_{2-4}$ वैष्णवधर्म. — *Adhy. name :* $M_2$ नानादानविधिः. — *Adhy. no. :* $T_1$ $G_3$ 91 ; $T_2$ $M_4$ 100 ; $G_{1.2}$ 90 ; $M_2$ 7 ; $M_3$ 89. — ( L. 1480 ) T $G_1$ शुभाशुभं. $G_3$ -फलं ( for -कृतं ). $G_3$ $M_4$ दिव्यं ( for सर्वं ). — ( L. 1481 ) $G_3$ $M_2$ स ( for न ). $T_1$ अपि ; $M_2$ नाम ( for वापि ). $G_3$ पद्यते ( for वि° ). $G_{1.2}$ $M_3$ पंचत्वं विद्यते नृप ( for the post. half ). — ( L. 1482 ) $G_3$ $M_{2.4}$ परं ( for नृणाम् ). — $G_1$ om. ( ? hapl. ) lines 1483–1486. — ( L. 1483 ) $M_4$ नरोत्तम ( for द्विजोत्तमाः ). — ( L. 1484 ) $T_2$ $G_3$ $M_3$ वियोगः. $M_{2.3}$ -प्रवक्ष्यते ( for -प्रचक्षते ). — ( L. 1486 ) $G_2$ भारत ( for पाण्डव ). — ( L. 1487 ) $G_3$ रतिः पुण्ये ( for गतिः पुण्या ). $T_2$ इष्यते ( for उच्यते ). — ( L. 1488 ) $M_2$ -कृत्यत्वान् ; $M_3$ -कृत्यस्तु ; $M_4$ -कृत्यश्च ( for -कृत्यास्तु ). T $G_3$ $M_4$ नराः ( for जनः ). — ( L. 1490 ) $G_1$ कृतं ( for कथं ). $M_2$ ये ; $M_3$ तद् ( for ऽत्र ). — ( L. 1491 ) $G_3$ $M_4$ एतेषां नाम देवेश. — ( L. 1493 ) $G_3$ स्वैरेव ( for यैरेव ). $G_3$ $M_{2.4}$ लभंते. $T_1$ $M_{2.4}$ गृहमेधिनः ( $T_1$ °नां ). — ( L. 1494 ) T देव- ; $M_3$ त्वृषि- ; $M_4$ ऋभु- ( for ऋषि- ). $G_3$ $M_4$ भूत- ( for ब्रह्म- ). $G_3$ देव- ; $M_4$ ब्रह्म- ( for भूत- ). $G_{1.2}$ $M_3$ पांडव ( for पार्थिव ). — ( L. 1495 ) $G_3$ ब्रह्मयज्ञं ( for पितृ° ). — $T_2$ om. lines 1496–1497. — ( L. 1496 ) $T_1$ देवयज्ञं ; $G_2$ $M_4$ ऋभु° ( for ऋषि° ). $M_2$ स्वाध्यायं. $T_1$ $M_{2.4}$ ब्रह्मयज्ञकं. — ( L. 1497 ) $G_3$ च स्यात् ; $M_{2.4}$ ज्ञेयो ( for यज्ञो ). — ( L. 1498 ) $M_2$ पितृयज्ञं प्रकीर्तितं. — $T_2$ om. line 1500. — ( L. 1500 ) $T_1$ $M_2$ पाकयज्ञाः ; $G_3$ $M_4$ पंचयज्ञान् ( for पाक° ). $T_1$ प्रकीर्तिताः ( for प्रचक्षते ). — ( L. 1502 ) $M_2$ तु ( for च ). T $G_3$ प्रहुतं ब्राह्मणे हुतं ( for the post. half ). — $G_1$ om. ( hapl. ) lines 1504–1506. $M_{2.3}$ read line 1504 after line 1507. — ( L. 1504 ) T पाकयज्ञः प्रकीर्तितः. — ( L. 1506 ) $M_2$ ऋषि- ; $M_4$ त्वृभु- ( for ब्रह्म- ). $M_4$ यज्ञान् ( for महा- ). — ( L. 1507 ) $M_2$ महायज्ञान्. $T_2$ $G_3$ सर्वदा ; $M_4$ ऋषिभिः ( for सर्वथा ). T संप्र- ( for परि- ). — ( L. 1508 ) $M_2$ corrupt for the prior half. — ( L. 1509 ) $G_3$ यस् ( for ये ). $M_3$ [ऽ]पि ( for तु ). — ( L. 1510 ) T $G_3$ $M_2$ ते नित्यं ब्राह्मणाधमाः ( for the post. half ). — ( L. 1512 ) $G_{1.2}$ प्रायश्चिती भवे-

युधिष्ठिर उवाच ।

देवदेव नमस्तेऽस्तु त्वद्भक्तस्य जनार्दन ।
वक्तुमर्हसि देवेश स्नानस्य च विधिं मम ।

भगवानुवाच ।

शृणु पाण्डव तत्सर्वं पवित्रं पापनाशनम् । [ 1515 ]
स्नात्वा येन विधानेन मुच्यन्ते किल्बिषाद्द्विजाः ।
मृदं च गोमयं चैव तिलान्दर्भांस्तथैव च ।
पुष्पाण्यपि यथान्यायमादाय तु जलं व्रजेत् ।
नद्यां सत्यां न च स्नायादन्यत्र द्विजसत्तम ।
सति प्रभूते पयसि नाल्पे स्नायात्कदाचन । [ 1520 ]
गत्वोदकसमीपं तु शुचौ देशे मनोहरे ।
ततो मृद्गोमयादीनि तत्र प्रोक्ष्य विनिक्षिपेत् ।
बहिः प्रक्षाल्य पादौ च द्विराचम्य प्रयत्नतः ।
प्रदक्षिणं समावृत्य नमस्कुर्यात्तु तज्जलम् ।
न च प्रक्षालयेत्तीर्थमद्भिर्विद्वान्कदाचन । [ 1525 ]
न च पादेन वा हन्याद्धस्तेनान्येन तज्जलम् ।
सर्वदेवमया ह्यापो मन्मयाः पाण्डुनन्दन ।
तस्मात्तास्तु न हन्तव्यास्त्वद्भिः प्रक्षालयेत्स्थलम् ।
केवलं प्रथमं मज्जेन्नाङ्गानि विमृजेद्बुधः ।
तत्तु तीर्थं समासाद्य कुर्यादाचमनं पुनः । [ 1530 ]
गोकर्णाकृतिवत्कृत्वा करं त्रिः प्रपिबेज्जलम् ।
द्विस्तत्परिमृजेदङ्गं पादावभ्युक्ष्य चात्मनः ।
शीर्षण्यांस्तु ततः प्राणान्सकृदेव तु संस्पृशेत् ।
बाहू द्वौ च ततः स्पृष्ट्वा हृदयं नाभिमेव च ।
प्रत्यङ्गमुदकं स्पृष्ट्वा मूर्धानं तु पुनः स्पृशेत् । [ 1535 ]
आपः पुनन्त्वित्युक्त्वा च पुनराचमनं चरेत् ।
सोंकारा व्याहृतीर्वापि सदसस्पतिमित्यृचम् ।
आचम्य मृत्तिकाः पश्चात्त्रिधा कृत्वा समालभेत् ।
ऋचेदं विष्णुरित्यङ्गमुत्तमाधममध्यमम् ।
आलभ्य वारुणैः सूक्तैर्नमस्कृत्य जलं ततः । [ 1540 ]
स्रवन्ती चेत्प्रतिस्रोतः प्रत्यर्कं चान्यवारिषु ।
मज्जेदोमित्युदाहृत्य न च प्रक्षोभयेज्जलम् ।
गोमयं च त्रिधा कृत्वा जले पूर्वं समालभेत् ।
सव्याहृतिं सप्रणवां गायत्रीं च जपेत्पुनः ।
पुनराचमनं कृत्वा मद्गतेनान्तरात्मना । [ 1545 ]
आपो हि ष्ठेति तिसृभिर्दर्भपूतेन वारिणा ।
तथा तरत्समन्दीभिः सिञ्चेच्चतसृभिः क्रमात् ।
गोसूक्तेनाश्वसूक्तेन शुद्धवर्गेण चाप्यथ ।
वैष्णवैर्वारुणैः सूक्तैः सावित्रैरिन्द्रदेवतैः ।
वामदेवेन चात्मानमन्यैर्मन्मयसामभिः । [ 1550 ]
स्थित्वान्तःसलिले सूक्तं जपेद्वाचाघमर्षणम् ।
सव्याहृतिं सप्रणवां गायत्रीं वा ततो जपेत् ।
आ श्वासमोक्षात्प्रणवं जपेद्वा मामनुस्मरन् ।

---

द्विजः. — ( L. 1513 ) G1.2 M3 देवदेवेश दैत्यघ्न ( for the prior half ). — ( L. 1514 ) M2 तु ( for च ). T2 M3 विधिर्. — ( L. 1515 ) M2 तत्स्वेन ( for तत्सर्वं ). — ( L. 1516 ) M2 किल्बिषान्. — ( L. 1517 ) G3 M4 चापि ( for चैव ). G1.2 M3 तिलं. — ( L. 1519 ) Kumbh. ed. स्नात्वा ( for सत्यां ). T G3 न तु; M2 तु न ( for न च ). — ( L. 1520 ) G3 कथंचन; M2 कदा न च ( for कदाचन ). —( L. 1521 ) G3 -समीपे. G3 मनोरमे ( for °हरे ). — ( L. 1522 ) G2 विप्रो; M2.3 [अ]भ्युक्ष्य ( for प्रोक्ष्य ). — ( L. 1523 ) MSS. प्रक्षाल्य. — ( L. 1524 ) T च ( for तु ). — ( L. 1525 ) M2 तीरम् ( for तीर्थम् ). G3 तीर्थे मृद्भिर्विद्वान्; Kumbh. ed. विद्वांस्तीर्थमद्भिः ( by transp. ). —( L. 1526 ) G3 M2 वा ( for तद् ). — M4 om. ( hapl. ) lines 1527–1531. — ( L. 1529 ) T G मज्जन् ( for मज्जेन् ). T G2 अंगानि. T2 न मृजेद्; G2 M3 विमृशेद् ( for °जेद् ). — ( L. 1530 ) T G3 तत्तीर्थं स ( for तत्तु तीर्थं ). G3 द्विजः; M2 बुधः ( for पुनः ). — ( L. 1531 ) T गोकर्णवत्करं कृत्वा; G1.2 श्वपुच्छाकृतिवत्कृत्वा ( for the prior half ). T ब्राह्मणस्त्रिः पिबेज्जलं. — ( L. 1532 ) M2 धीस्तत्; M4 ततः ( for द्विस्तत् ). — ( L. 1535 ) M2–4 ततः ( for पुनः ). — ( L. 1537 ) G2.3 सों- ( G2 ओं )कारव्याहृतिर्वापि. — ( L. 1538 ) M2.4 मृत्तिकां. G3 M3 कृत्य ( for कृत्वा ). — ( L. 1541 ) T G3 स्रवंत्यश्; G1 °ति; M2.3 ( *sup. lin.* ).4 स्रव- ( M4 °वं )त्यां. M2.3 प्रतिस्रोतं. G3 corrupt for the post. half. — ( L. 1542 ) T तु ( for च ). G1.2 M3 विक्षोभयेज् ( for प्रक्षो° ). — M2 om. ( hapl. ) from the post. half of line 1543 up to the prior half of line 1545. — ( L. 1544 ) G1.2 M3.4 सव्या- हृती( G2 M4 °ति )कं ( hypermetric ). T2 पुनर्जलं; G3 M4 पुनर्जपेत् ( by transp. ). — ( L. 1545 ) M4 तत ( for पुनर् ). — ( L. 1546 ) T1 G1.2 अद्भिः ( for दर्भ- ). — ( L. 1547 ) M2 ततस् ( for तथा ). T2 G3 M4 तथा तरत्समं( T2 °म )दिति ( for the prior half ). —( L. 1548 ) G1.2 चात्मनः; M2 वात्मनः ( for चाप्यथ ). — ( L. 1549 ) G3 M4 वैष्णवैर् ( for सावित्रैर् ). M2 ऐंद्रदेवतैः. — ( L. 1550 ) M2–4 वामदेव्येन; Kumbh. ed. and Madras ed. °दैव्येन. T2 अन्यैर्मन्मथसादिभिः; G3 अन्यैर्ऋग्भिः शुभैः क्रमात् ( for the post. half ). — M2

उत्प्लुत्य तीर्थमासाद्य धौते शुक्ले च वाससी ।
शुद्धे चाच्छादयेत्कक्षे न कुर्यात्परिपाशके । [ 1555 ]
पाशे निबद्धकक्ष्यो यत्कुरुते कर्म वैदिकम् ।
राक्षसा दानवा दैत्यास्तद्विलुम्पन्ति हर्षिताः ।
तस्मात्सर्वप्रयत्नेन कक्ष्यां पाशे न धारयेत् ।
ततः प्रक्षाल्य पादौ च हस्तौ चैव मृदा शनैः ।
आचम्य पुनराचामेत्ततः सावित्रिया द्विजः । [ 1560 ]
जले जलगतः शुद्धः स्थल एव स्थले स्थितः ।
उभयत्र स्थितस्तस्मादाचामेदात्मशुद्धये ।
दर्भेषु दर्भपाणिः सन्प्राङ्मुखः सुसमाहितः ।
प्राणायामांस्ततः कुर्यान्मद्गतेनान्तरात्मना ।
सहस्रकृत्वः सावित्रीं शतकृत्वस्तु वा जपेत् । [ 1565 ]
समाप्ते तु जपे तस्मिन्सावित्र्या चाभिमन्त्र्य च ।
मन्देहानां विनाशाय रक्षसां विक्षिपेज्जलम् ।
उद्गर्गोऽसीत्यथाचान्तः प्रायश्चित्तजलं क्षिपेत् ।
अथादाय सपुष्पाणि तोयान्यञ्जलिना द्विजः ।
प्रक्षिप्य प्रतिसूर्यं च व्योममुद्रां प्रकल्पयेत् । [ 1570 ]
ततो द्वादशकृत्वस्तु सूर्यस्यैकाक्षरं जपेत् ।
ततः षडक्षरादीनि षट्कृत्वः परिवर्तयेत् ।
प्रदक्षिणं परामृश्य मुद्रया स्वमुखं तथा ।
ऊर्ध्वबाहुस्ततो भूत्वा सूर्यमीक्षेत्समाहितः ।
तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् । [ 1575 ]
उदु त्यं च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ।
सावित्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम् ।
मन्मयानि च सामानि पुरुषव्रतमेव च ।
ततश्चालोकयेदर्कं हंसः शुचिषदित्यृचा ।
प्रदक्षिणं समावृत्य नमस्कृत्य दिवाकरम् । [ 1580 ]
ततस्तु तर्पयेदद्भिः ब्रह्माणं मां च शंकरम् ।
प्रजापतिं च देवांश्च तथा देवमुनीनपि ।
साङ्गानपि तथा वेदानितिहासान्क्रतूंस्तथा ।
पुराणानि च दिव्यानि कुलान्यप्सरसां तथा ।
ऋतून्संवत्सरांश्चैव कलाकाष्ठान्तकं तथा । [ 1585 ]
भूतग्रामांश्च भूतानि सरितः सागरांस्तथा ।
शैलाञ्शैलस्थितान्देवानोषधीः सवनस्पतीः ।
तर्पयेदुपवीती तु प्रत्येकं तृप्यतामिति ।
अन्वारभ्य च सव्येन पाणिना दक्षिणेन तु ।

---

om. lines 1551–1552. — ( L. 1552 ) $G_{1,2}$ $M_{3,4}$ सव्याहृती( $G_2$ °ति )कां ( hypermetric ). — After line 1553, $M_{2,3}$ ins. :

त्रिपदं वा जपेन्मन्त्रमष्टाक्षरमथापि वा ।

— ( L. 1554 ) $G_3$ उद्धत्य ( for उत्प्लुत्य ). $T_2$ $G_3$ $M_4$ तीरम् ( for तीर्थम् ). — ( L. 1555 ) $M_4$ ( *inf. lin.* ) शुक्ले ( for शुद्धे ). $G_3$ $M_1$ ( *inf. lin.* as above ) वा ( for च ). $T_2$ कच्छे ; $G_2$ $M_1$ कक्ष्ये ; $M_{2,3}$ कुक्ष्यां ( for कक्षे ). $M_{2,3}$ ( *inf. lin.* ) क( $M_3$ कु )टिपाशके ( for परि° ). — ( L. 1556 ) $G_2$ पाने ; $G_3$ पाशा ( for पाशे ). $T_2$ -कच्छो ( for -कक्ष्यो ). $M_2$ यः ( for यत् ). $M_3$ पाशेन बद्धकक्ष्यो यत् ; $M_4$ पाशेन बद्धे यः कुर्यात् ; Kumbh. ed. and Madras ed. पाशेन बद्धा कक्षे यत्. — ( L. 1558 ) $T_2$ $M_4$ कच्छं ; $G_{1,2}$ कक्ष्या ( $G_2$ °क्षा ). $G_{1,2}$ पाशं. — ( L. 1559 ) $G_3$ चैवं. — ( L. 1560 ) $G_2$ $M_3$ पुनः ( for ततः ). T ततः सा( $T_2$ °त्तत्सा )वित्र्या द्विजः ( submetric ); $G_3$ सावित्र्या च पुनः पुनः ; $M_4$ तच्च सावित्रिया पुनः. — After line 1560, $G_2$ Kumbh. ed. and Madras ed. ins. :

प्राङ्मुखोदङ्मुखो वापि ध्यायन्वेदान्समाहितः ।

[ $G_2$ प्रांग्मुखोदर्भमु*पि. ]

— ( L. 1561 ) $G_1$ स्थलस्थितः. — ( L. 1562 ) $G_3$ चात्मशुद्धये. — ( L. 1563 ) $G_3$ $M_4$ तु ( for सु- ). — ( L. 1564 ) $M_{2,4}$ प्राणायामं. $M_4$ कृत्वा ( for कुर्यान् ). — ( L. 1566 ) $G_2$ $M_3$ ( *sup. lin.* ) समाहितो जपेत्तस्मात् ( for the prior half ). $M_4$ वाभिमंत्र्य. — ( L. 1567 ) $G_3$ रक्षार्थं निक्षिपेज्जलं ( for the post. half ). — ( L. 1568 ) $G_3$ उद्वयो ( for °र्गो ). — ( L. 1569 ) Kumbh. ed. तोयं. $M_2$ ततः ( for द्विजः ). — ( L. 1571 ) $G_3$ [इ]वाक्षरं ( for [ए]का° ). — ( L. 1572 ) $G_3$ $M_4$ त्रिःकृत्वः ; $M_2$ corrupt ( for षट्कृत्वः ). — ( L. 1573 ) $M_4$ परामृज्य. $G_{1,2}$ स्वमुखांतरे ; $G_3$ $M_2$ स्वमुखं तथा. — ( L. 1575 ) $M_2$ मा ( for मां ). — ( L. 1576 ) $M_4$ नित्यं ( for मन्त्रं ). — ( L. 1578 ) T मामकानि ( for मन्मयानि ). $G_3$ नामानि ( for सा° ). $G_{1,2}$ तु ; $M_2$ वा ( for च ). — ( L. 1579 ) $M_4$ [आ]लोकयन्. $T_1$ [अ]पि ; $G_{1,2}$ $M_3$ [अ]थ ( for [ऋ]चा ). $M_2$ corrupt. — ( L. 1580 ) $G_{1,2}$ $M_3$ नमस्कृत्वा. — ( L. 1581 ) $T_2$ मां ब्रह्माणं ( by transp. ). — ( L. 1583 ) $M_2$ यथा ( for the first तथा ). $G_{1,2}$ $M_3$ अपि ( for the second तथा ). — $M_2$ om. ( hapl. ) lines 1584–1586. — ( L. 1584 ) $G_{1,2}$ $M_3$ सर्वाणि ( for दिव्यानि ). — ( L. 1585 ) $G_{1,2}$ $M_4$ संवत्सरं. T कालान्कालांतकं तथा ; $G_3$ $M_4$ कलाका( $M_4$ कालं का )लात्मकं तथा ( for the post. half ). — ( L. 1587 ) T सर्वान् ( for देवान् ). T $M_2$ सवनस्पतीन्. — ( L. 1588 ) $G_{1,2}$

निवीती तर्पयेत्पश्चाद्दषीन्मन्त्रकृतस्तथा । [ 1590 ]
मरीच्यादीनृषींश्चैव नारदान्तान्समाहितः ।
प्राचीनावीत्यथैतांस्तु तर्पयेद्देवताः पितॄन् ।
ततस्तु कव्यवाडग्निं सोमं वैवस्वतं तथा ।
ततश्चार्यमणं चापि अग्निष्वात्तांस्तथैव च ।
सोमपांश्चैव दर्भैस्तु सतिलैरेव वारिभिः । [ 1595 ]
तृप्यध्वमिति पश्चात्तु स्वपितॄंस्तर्पयेत्ततः ।
पितॄन्पितामहांश्चैव तथैव प्रपितामहान् ।
पितामहीं तथा चापि तथैव प्रपितामहीम् ।
तथा पितृष्वसॄश्चैव मातृष्वसॄस्तथैव च ।
मातरं चात्मनश्चैव तथा मातामहीमपि । [ 1600 ]
मातुर्मातामहीं चैव गुरुमाचार्यमेव च ।
उपाध्यायान्सखीन्बन्धूञ्शिष्यर्त्विग्ज्ञातिपुत्रकान् ।
प्रमीतानानृशंस्यार्थं तर्पयेत्तानमत्सरः ।
तर्पयित्वा तथाचम्य स्नानवस्त्रं प्रपीडयेत् ।
वृद्धिं भृत्यजनस्याहुः स्नातकानां च तद्विदः । [ 1605 ]
अतर्पयित्वा तान्पूर्वं स्नानवस्त्रं न पीडयेत् ।
पीडयेच्चेत्पुरा मोहाद्देवाः सर्षिगणास्तथा ।
पितरस्तु निराशाश्च शप्त्वा यान्ति यथागतम् ।
प्रक्षाल्य तु मृदा पादावाचम्य प्रयतः पुनः ।
दर्भेषु दर्भपाणिः सन्स्वाध्यायं तु समारभेत् । [ 1610 ]
वेदमादौ समारभ्य ततोपरि पदक्रमान् ।
यदधीते स्वयं शक्त्या तत्स्वाध्यायं प्रचक्षते ।
ऋचं वाथ यजुर्वापि सामगाथामथापि वा ।
इतिहासपुराणानि यथाशक्ति न हापयेत् ।
उत्थाय च नमस्कृत्वा दिशो दिग्देवता अपि । [ 1615 ]
ब्रह्माणं च ततश्चाग्निं पृथिवीमोषधीस्तथा ।
वाचं वाचस्पतिं चैव मां चैव सरितस्तथा ।
नमस्कृत्वा तथाद्भिस्तु प्रणवादि च पूजयेत् ।
ततो नमोऽद्भ्य इत्युक्त्वा नमस्कुर्यात्तु तज्जलम् ।

---

M3 च (for तु). M2 तर्पयामीति प्रत्येकं तृप्यतामिति वाच्य च. — (L. 1589) M4 तु (for च). — (L. 1590) G1.2 M3 विद्वान् (for पश्चाद्). M4 सदा (for तथा). — (L. 1591) T मुनींश्; G3 मनूंश् (for ऋषींश्). M4 मरीच्यत्रीन्मनूंश्चैव. T नारदादीन्; G1.2 °दाद्यान् (for °दान्तान्). — (L. 1593) G3 कव्यवाटग्निं; M2 °वाळग्निं. — (L. 1594) M4 वा (for च). M2 चाग्निषु; Kumbh. ed. ह्य° (for अ°). G1 निषादां-स्तांस्तथैव च (for the post. half). — (L. 1595) G1.2 M3 दर्भेषु (for दर्भैस्तु). M2 सोमपांस्तु संदर्भैस्तु. — (L. 1596) G1.2 M3 तृप्यताम् (for °ध्वम्). G1 तर्पितस्; G3 स पितॄंस्. — (L. 1598) G1.2 M4 corrupt. G1 om. (hapl.) from the post. half up to the prior half of line 1601. M4 प्रपितामहीः. — G2 and Kumbh. ed. om. line 1599. — (L. 1599) T तथा पितृष्वसृ-(T2 °स्र)श्चैव; G3 M3 तथा पितृष्वसां चैव; M2 मातृष्वसां तथा चापि (for the prior half). T2 मातृष्वसॄस्तथैव च; G3 M3 मातृस्व(M3 °ष्व)सारं तथैव च (hypermetric); M2 तथैव च पितृष्वसां (for the post. half). — (L. 1600) Om. in M3. G2 तत्र (for चैव). M2 मातामहं चात्मनश्च (for the prior half). — G2 ins. after the prior half of line 1600: Kumbh. ed. after line 1601 :

पितृमातृष्वसारं च तथा मातामहीमपि ।

[ Kumbh. ed. पितृमातृष्वसारौ च. ]

— G2 om. the post. half and the prior half of line 1601. — (L. 1601) M2 [अ]पि (for [ए]व). M2 गुरून् (for गुरुम्). — (L. 1602) M2 चापि (for बन्धून्). G1 M3 शिष्यांश्च; M2 बंधूनस- (for शिष्यर्त्विग्-). — (L. 1603) G2 प्रज्ञातान्; M2 प्रमि° (for प्रमी°). T2 G1.2 M2.3 आनृशंसार्थं. — (L. 1604) M4 स्वथ (for तथा). G1 -मंत्रं (for -वस्त्रं). — T2 G1.3 M4 om. (hapl.) lines 1605–1606. M3 om. line 1605. — (L. 1605) M2 corrupt for the prior half. Kumbh. ed. वृत्तिं (for वृद्धिं). G2 M2 स्नानपा(M2 °नं पा)नं (for स्नातकानां). M2 तद्विदुः (for °दः). — (L. 1606) M3 तत् (for तान्). M2.3 प्र- (for न). — (L. 1607) G3 M4 चेत (M4 चेन्न) तन्; M2 यदि तन् (for चेत्पुरा). G2 पीडयेन्न तु मोहाद्वै (for the prior half). G1 सऋषि- (for सर्षि-). — (L. 1608) G2 M2.4 च (for तु). G1.2 M3 ते; M4 तु (for च). — (L. 1609) MSS. प्रक्षाळ्य. G3 M4 च (for तु). G3 M4 पादम् (for पादाव्). — (L. 1611) M2 समाराध्य (for °रभ्य). G1.2 M3 ततोपरि परिक्रमान् (M3 °त्); M2 ततः पत्युपरि°; M4 तथोपर्यपरिक्रमान् (*sup. lin.* °त्) (for the post. half). — M4 om. lines 1612–1613. — (L. 1612) G1.2 तु विशल्या; G3 त्वयं शक्त्या; M2.3 [ऽ]न्वहं शक्त्या (for स्वयं शक्त्या). T1 तत्स्वाध्यायः; G2 यत्स्वाध्यायं; G3 स्वाध्यायं तत् (by transp.). — (L. 1613) G1.2 ऋचो (for ऋचं). G3 [अ]थ (for [अ]पि). — (L. 1614) T2 G3 -पुराणान्वा; M2 °णं वा (for °णानि). G2 निगापयेत् (for न हाप°). — (L. 1615) G2 M2-4 तु (for च). — (L. 1616) T2 G3 M4 ब्राह्मणांश्च (G3 °णानां) (for ब्रह्माणं च). M2 ओषधीं. — (L. 1617) T सागरान् (for मां चैव). — (L. 1618) T [अ]द्भ्यस्तु. M2 नमस्कारांतमद्भिस्तु (for

घृणिः सूर्यस्तथादित्यस्तान्प्रणम्य स्वमूर्धनि । [ 1620 ]
ततस्त्वालोकयन्नर्कं प्रणवेन समाहितः ।
ततो मामर्चयेत्पुष्पैर्मत्प्रियैरेव नित्यशः ।

युधिष्ठिर उवाच ।

त्वत्प्रियाणि प्रसूनानि त्वदधिष्ठानि माधव ।
सर्वाण्याचक्ष्व देवेश त्वद्भक्तस्य ममाच्युत ।

भगवानुवाच ।

शृणुष्वावहितो राजन्पुष्पाणि प्रीतिकृन्ति मे । [ 1625 ]
कुमुदं करवीरं च चणकं चम्पकं तथा ।
मल्लिकाजातिपुष्पं च नन्द्यावर्तं च नन्दिकम् ।
पलाशपुष्पपत्राणि दूर्वा भृङ्गकमेव च ।
वनमाला च राजेन्द्र मत्प्रियाणि विशेषतः ।
सर्वेषामपि पुष्पाणां सहस्रगुणमुत्पलम् । [ 1630 ]
तस्मात्पद्मं तथा राजन्पद्मात्तु शतपत्रकम् ।
तस्मात्सहस्रपत्रं तु पुण्डरीकं ततः परम् ।
पुण्डरीकसहस्रात्तु तुलसी गुणतोऽधिका ।
बकपुष्पं ततस्तस्मात्सौवर्णं तु ततोऽधिकम् ।
सौवर्णात्तु प्रसूनाच्च मत्प्रियं नास्ति पाण्डव । [ 1635 ]
पुष्पालाभे तु तुलस्यास्तु पत्रैर्मामर्चयेद्बुधः ।
पत्रालाभे तु शाखाभिः शाखालाभे शिफाफलैः ।
शिफालाभे मृदा तत्र भक्तिमानर्चयेद्बुधः ।
वर्जनीयानि पुष्पाणि शृणु राजन्समाहितः ।
किङ्किणी मुनिपुष्पं च धुत्तूरं पाटलं तथा । [ 1640 ]
तथातिमुक्तकं चैव पुंनागं नक्तमालिका ।
यौथिकं क्षीरिकापुष्पं निर्गुण्डी लाङ्गली जपा ।
कर्णिकारं तथाशोकं शल्मलीपुष्पमेव च ।
ककुभाः कोविदाराश्च वैभीतकमथापि वा ।
कुरण्टकप्रसूनां च तिल्वकं लाङ्गली तथा । [ 1645 ]
अङ्कोलं गिरिकर्णीं च नीलान्येव च सर्वशः ।
एकवर्णानि चान्यानि सर्वाण्येव विवर्जयेत् ।
अर्कपुष्पाणि वर्ज्यानि चार्कपत्रस्थितानि च ।
व्यावातपिचुमन्दानि सर्वाण्येव विवर्जयेत् ।
अन्यैस्तु शुक्लपत्रैस्तु गन्धवद्भिर्नराधिप । [ 1650 ]

---

the prior half). $G_1$ $M_3$ पूर्ववत् (for पूजयेत्). T $G_2$ प्रणम्य च सुपूजयेत् (for the post. half). — (L. 1619) $M_2$ तु (for ऽद्भय). T च (for तु). — (L. 1620) $T_1$ घृणिं सूर्यं; $T_2$ घृणीन्सूर्यांस्. $T_1$ तत् (for तान्). $T_2$ $G_3$ $M_4$ तर्पयेच्च (for तान्प्रणम्य). — (L. 1621) T $G_3$ $M_{2,3}$ (*inf. lin.*). 4 सिक्त्वा ($T_2$ $G_3$ स्थित्वा) वलोकयन्नर्कं (for the prior half). — (L. 1622) $T_2$ नित्यधा (for °शः). — (L. 1623) $M_2$ त्वदनिष्टानि (for त्वदधिष्ठानि). — (L. 1625) T प्रीणयंति; $M_{2,3}$ प्रीनिकानि (for °कृन्ति). — (L. 1627) $T_2$ निष्टिकं (for नन्दिकम्). — (L. 1628) $M_{3,4}$ वा (for च). — (L. 1629) $T_1$ $M_{2,3}$ नवमाला. $M_2$ शमी चेति (for च राजेन्द्र). — $G_3$ om. the post. half of line 1631 and the prior half line 1632. — (L. 1633) $M_4$ -सहस्रं. $M_2$ om. from the post. half of line 1633 up to the post. half of line 1635. — (L. 1634) $M_4$ बिल्वपुष्पं (for बक°). $G_3$ $M_4$ तु स्यात् (for तस्मात्). — (L. 1635) $T_1$ सुवर्णाच्च्. T $G_3$ च (for तु). — (L. 1636) $T_1$ $G_{1,2}$ $M_3$ पुष्पाभावे. — $G_1$ om. (hapl.) lines 1637–1638. — (L. 1637) $G_2$ पत्राभावे. $T_1$ शाखाभावे (for °लाभे). T त्वचापि वा; $G_2$ $M_3$ शिफालवैः (for °फलैः). — (L. 1638) T त्वगभावे; $G_2$ शिफाभावे; $M_4$ शिखालाभे. $T_1$ शक्तिमान् (for भ°). $G_2$ $M_2$ अर्चयेत ($M_2$ °त्तु) मां (for °येद्बुधः). — After line 1638, T ins.:

येन केन प्रकारेण तुलसीदलपूर्वकैः ।
पुष्पैः फलैर्वाप्यन्नाद्यैर्मदाराधनमुत्तमम् ।

— (L. 1639) $G_2$ $M_4$ समंततः (for समाहितः). — (L. 1640) $M_2$ किनिभिर् (for किङ्किणी). $G_{1,2}$ $M_3$ मुखपुष्पं; $G_3$ मणिमुक्तं (for मुनिपुष्पं). $G_1$ धूर्धूरं; $G_2$ $M_4$ धुद्धू($M_4$ °द्धु)रं; $G_3$ दुत्तुरं; $M_{2,3}$ धुर्दूरं. — (L. 1641) T नक्त($T_2$ °व)मल्लिकं; $G_3$ $M_4$ नवमालिका; Kumbh. ed. and Madras ed. नक्तमालिकं. — (L. 1642) $T_1$ यौधिका; $T_2$ $G_3$ यूथिकं; $M_2$ योद्धितः (for यौथिकं). $T_1$ $M_2$ क्षीरका-; $G_2$ क्षीरिकं. $T_2$ निर्गंडी. $M_{2,3}$ जांगली; Kumbh. ed. and Madras ed. लांगुली. — (L. 1643) $T_1$ पुष्पं (for [अ]शोकं). $G_3$ शाल्मली-; $M_2$ शन्यली-. — (L. 1644) T $M_4$ कुसुंभं ($M_4$ °भः); $G_3$ ककुभं (for ककुभाः). T $G_3$ कोविदारं; $M_4$ °रश्. $M_2$ काकुस्थाः कोविदाश्चैव (for the prior half). $T_2$ वैभीतिकम्. $G_2$ $M_4$ अथापि च; $G_3$ अथाफली (for °पि वा). — (L. 1645) $T_2$ $G_2$ $M_{2-4}$ कुरंडक-. $G_1$ कल्पकं; $G_2$ $M_4$ तल्पकं; $M_{2,3}$ तिलकं (for तिल्वकं). T लांगलिं; $G_1$ $M_3$ लांगलं; $M_2$ घातकी; $M_3$ (*inf. lin.*) घातकं (for लाङ्गली). — (L. 1646) $G_1$ $M_3$ अंकोलहि- ($M_3$ °लं हि)किणीश्चैव; $M_2$ अंगोलं गिरिकर्णी च. $G_5$ तिलानि (for नी°). — (L. 1647) $T_1$ $G_2$ एकपर्णानि. — $G_3$ om. (hapl.) lines 1648–1649. — (L. 1648) $G_2$ $M_{2,3}$ अर्क- (for चार्क-). $G_1$ $M_3$ वा (for च). — After line 1648, $M_2$ ins.:

अवर्ज्यैस्तैर्यथालाभं मद्भक्तो मां समर्चयेत् ।

युधिष्ठिर उवाच ।

कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशास्तु ते ।
वैखानसाः कथं ब्रूयुः कथं वा पाञ्चरात्रिकाः ।

भगवानुवाच ।

शृणु पाण्डव तत्सर्वमर्चनाक्रममात्मनः ।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं सकर्णिकम् । [ 1655 ]
अष्टाक्षरविधानेन ह्यथ वा द्वादशाक्षरैः ।
वैदिकैरथ वा मन्त्रैर्मम सूक्तेन वा पुनः ।
स्थापितं मां ततस्तस्मिन्नर्चयित्वा विचक्षणः ।
पुरुषं च ततः सत्यमच्युतं च युधिष्ठिर ।
अनिरुद्धं च मां प्राहुर्वैखानसविदो जनाः । [ 1660 ]
अन्ये त्वेवं विजानन्ति मां राजन्पाञ्चरात्रिकाः ।
वासुदेवं च राजेन्द्र संकर्षणमथापि वा ।
प्रद्युम्नं चानिरुद्धं च चतुर्मूर्तिं प्रचक्षते ।
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्तयः ।
विद्ध्यनर्थान्तरा एव मामेवं चार्चयेद्बुधः । [ 1665 ]

युधिष्ठिर उवाच ।

त्वद्भक्ताः कीदृशा देव कानि तेषां व्रतानि च ।
एतत्कथय देवेश त्वद्भक्तस्य ममाच्युत ।

भगवानुवाच ।

अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः ।
मामेव शरणं प्राप्तास्ते मद्भक्ताः प्रकीर्तिताः ।
स्वर्ग्याण्यपि यशस्यानि मत्प्रियाणि विशेषतः । [ 1670 ]
मद्भक्तः पाण्डवश्रेष्ठ व्रतानीमानि धारयेत् ।
नान्यदाच्छादयेद्वस्त्रं मद्भक्तो जलतारणे ।
स्वस्थस्तु न दिवा स्वप्यान्मधुमांसानि वर्जयेत् ।
प्रदक्षिणं व्रजेद्विप्रान्गामश्वत्थं हुताशनम् ।
न धावेत्पतिते वर्षे नाग्रभिक्षां च लोपयेत् । [ 1675 ]
प्रत्यक्षलवणं नाद्यात्सौभञ्जनकगृञ्जनौ ।
ग्रासमुष्टिं गवे दद्याद्धान्याम्लं चैव वर्जयेत् ।
तथा पर्युषितं चापि पक्वं परगृहागतम् ।
अनिवेदितं च यद्द्रव्यं तत्प्रयत्नेन वर्जयेत् ।
बिभीतककरञ्जानां छायां दूरं विवर्जयेत् । [ 1680 ]
विप्रदेवपरीवादं न वदेत्पीडितोऽपि सन् ।
सात्त्विका राजसाश्चापि तामसाश्चापि पाण्डव ।
मामर्चयन्ति मद्भक्तास्तेषामीदृग्विधा गतिः ।
तामसास्तिमिरं यान्ति राजसा रज एव तत् ।

रक्तं कुमुदपुष्पं च शूलपुष्पं च वर्जयेत् ।

— (L. 1649) $G_1$ $M_3$ व्याघ्राताः; $G_2$ व्याघाताः; $M_2$ ज्याघात- (for व्या°). $T_1$ च (for वि-). $M_2$ गंधीनि पितृमेव च (for the post. half). — After line 1649, $M_2$ ins.:

राजवृक्षप्रसूनानि यत्नादेव विवर्जयेत् ।

— (L. 1650) T सु- (for the first तु). $G_3$ $M_4$ -पत्रैश्च; $M_2$ -पुष्पैस्तु. — (L. 1651) $M_2$ अवर्जितैर् (for °र्ज्यैस्तैर्) and सदार्चयेत् (for सम°). — (L. 1654) $M_2$ उत्तमं; $M_4$ एव ह (for आत्मनः). — (L. 1655) $M_2$ स्थंडिलं. — (L. 1656) T $M_4$ अथ; $G_3$ यथा; $M_2$ [अ]प्यथ (for ह्यथ). — (L. 1657) $G_{1.2}$ मंत्रैश्च (for वा मन्त्रैर्). — (L. 1658) $T_2$ अतस् (for ततस्). $G_3$ $M_4$ पुनः पुनः (for विचक्षणः). $M_2$ अर्चयीत समाहितः (for the post. half). — (L. 1662) $M_2$ तथा राजन् (for च राजेन्द्र). $T_2$ $M_2$ च (for वा). — (L. 1663) $G_3$ $M_4$ अनिरुद्धं (for चानि°). — (L. 1664) $G_{1.2}$ एतस्त्वा( $G_2$ °च्चा )न्यच्च राजेंद्र (for the prior half). $T_1$ -भेदाः स-; $M_2$ -भेदाश्च (for -भेदेन). — (L. 1665) $G_2$ $M_3$ एव (for एवं). — After line 1665, $T_1$ and Madras ed. ins.:

अत्यन्तभेदरहितं गुणपूर्वं सदैव हि ।

[ Madras ed. गुणपूर्णं. ]

— (L. 1668) $M_2$ मम (for ये मद्-). $G_3$ -भक्ता मम (for -भक्तजन-). — (L. 1669) $G_{1.2}$ मद्भक्ताश्च; $M_3$ मद्भक्तास्ते (by transp.). — (L. 1670) T $G_{1.3}$ $M_{1-3}$ स्वर्गाणि; $G_2$ शुद्धानि (for स्वर्ग्याणि). — (L. 1671) $M_2$ एतस्मात् (for मद्भक्तः). — (L. 1672) $M_4$ जन- (for जल-). $G_1$ -धारणे (for -तारणे). — (L. 1673) $G_1$ स्वप्स्येन्; $G_2$ स्वप्यो; $G_3$ स्वापेन्; $M_2$ स्वप्नं; $M_4$ स्वापं (for स्वप्यान्). — (L. 1675) $G_3$ नोपयेत् (for लोप°). — (L. 1676) T $G_{1.2}$ प्रत्यक्षं. T $G_{2.3}$ सौभांजनकसं( $G_3$ °गृं )जनान् ( $G_2$ °जनौ ); $G_1$ सौभेजनककुंजनौ (for the post. half). — (L. 1677) $G_2$ $M_3$ ( *inf. lin.* ) corrupt. — $T_1$ $M_2$ om. (hapl.) lines 1678–1679. — (L. 1678) $G_3$ पाकं (for पक्वं). — (L. 1679) Prior half, hypermetric. $G_1$ निवेदितं (for अनिवे°). — (L. 1680) T $M_{2.4}$ दूरात्तु ( $M_2$ °द्वि- ); $G_3$ दूरेण (for दूरं वि-). — (L. 1681) T $G_{1.2}$ -वेद- (for -देव-). $T_1$ -परिवादं; $G_1$ $M_3$ -परीवादान्. — (L. 1682) $G_1$ [ए]व (for the second [अ]पि). — (L. 1683) $G_2$ मम (for माम्). $M_{2.4}$ -भावास् (for -भक्तास्). — After line 1683, $M_2$ ins.:

सात्त्विकाः सत्त्वसंपन्नाः सत्त्वमेव प्रयान्ति ते । [1685]
ये सिद्धाः सन्ति सांख्येन योगसत्त्वबलेन च ।
नभसादित्यचन्द्राभ्यां पश्यन्ति पदविस्तरम् ।
एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चधातुके ।
एतस्मिन्देहनगरे राजसस्तु सदा भवेत् ।
उदिते सवितर्यस्य क्रियायुक्तस्य धीमतः । [1690]
चतुर्वेदविदश्चापि देहे षड्वृषलाः स्मृताः ।
क्षत्रियाः सप्त विज्ञेया वैश्यास्त्वष्टौ प्रकीर्तिताः ।
नियताः पाण्डवश्रेष्ठ शूद्राणामेकविंशतिः ।
कामः क्रोधश्च लोभश्च मोहश्च मद एव च ।
महामोहश्च इत्येते देहे षड्वृषलाः स्मृताः । [1695]
गर्वः स्तम्भो ह्यहंकार ईर्ष्या च द्रोह एव च ।
पारुष्यं क्रूरता चेति सप्तैते क्षत्रियाः स्मृताः ।
तीक्ष्णता निकृतिर्माया शाठ्यं डम्भो ह्यनार्जवम् ।
पैशुन्यमनृतं चैव वैश्यास्त्वष्टौ प्रकीर्तिताः ।
तृष्णा बुभुक्षा निद्रा च आलस्यं चाघृणादया । [1700]
आधिश्चापि विवादश्च प्रमादो हीनसत्त्वता ।
भयं विक्लवता जाड्यं पापकं मन्युरेव च ।
आशा चाश्रद्दधानत्वमनवस्थाप्ययन्त्रणम् ।
आशौचं मलिनत्वं च शूद्रा ह्येते प्रकीर्तिताः ।
यस्मिन्नेते न दृश्यन्ते स वै ब्राह्मण उच्यते । [1705]
येषु येषु हि भावेषु यत्कालं वर्तते द्विजः ।
तत्तत्कालं स विज्ञेयः ब्राह्मणो ज्ञानदुर्बलः ।
प्राणानायम्य यत्कालं येन मां चापि चिन्तयेत् ।
तत्काले वै द्विजो ज्ञेयः शेषकालो ह्यथेतरः ।
तस्मात्तु सात्त्विको भूत्वा शुचिः क्रोधविवर्जितः । [1710]
मामर्चयेत्तु सततं मत्प्रियत्वं यदिच्छति ।
अलोलजिह्वः समुपस्थितो धृति-
निधाय चक्षुर्युगमात्रमेव च ।
मनश्च वाचं च निगृह्य चञ्चलं
भयान्निवृत्तो मम भक्त उच्यते । [1715]
ईदृशाध्यात्मिनो ये तु ब्राह्मणा नियतेन्द्रियाः ।
तेषां श्राद्धेषु तृप्यन्ति तेन तृप्ताः पितामहाः ।
धर्मो जयति नाधर्मः सत्यं जयति नानृतम् ।

---

तिर्यग्यानुषदेवेन तामसा भुञ्जते फलम् ।
नागयक्षा गृहस्थाने राजसा भुञ्जते फलम् ।

— M2 om. line 1684. — (L. 1685) M2 मत्पादा यांति मानवाः (for the post. half). — (L. 1686) M4 सर्वे- (for सन्ति). G1.2 M3 -तत्त्व-; G3 -सिद्धि- (for -सत्त्व-). — After line 1687, M4 ins.:

युधिष्ठिरः ।
कथं मानुषदेहेषु गुरुस्त्रीगुणसंभवा ।
*** स्तदनुविद्धा भवन्ति मधुसूदन ।
भगवान् ।

— (L. 1689) G2 एकस्मिन्. M4 [आ]चरेत् (for भवेत्). M2 अस्मिंस्तु देहे नगरे ये वसंतीति तच्छृणु. — (L. 1690) G1 सवितुर्योप्य; G2 °तुर्योपि; M3 °तुर्यस्य; M4 °तर्योपि (for °तर्यस्य). M2 उदितादित्यविप्रस्य (for the prior half). — (L. 1691) M2 चतुर्वेदे. M4 तथा (for स्मृताः). — (L. 1692) T2 वैश्यास्त्वष्ट; M2 वैश्ये त्वष्टौ. —(L. 1693) G3 वियताः बांधवश्रेष्ठाः. —(L. 1695) M2 तथा (for च). — (L. 1696) M2 दर्पः (for गर्वः). M2 [अ]हंकारम्. — (L. 1697) G1.2 M3 [द्]व (for [इ]ति). — (L. 1698) M4 तीक्ष्णा च (for तीक्ष्णता). T2 दंभो; G1.2 स्तंभो (for डम्भो). G2 [s]पि (for हि). M2 शाठ्यडंभोप्यनार्जवं; M3.4 शाठ्यस्तंभोप्य( M4 °भो ह्य )नार्जवं. — (L. 1699) M2.3 पैशून्यम्. — (L. 1700) M4 तीक्ष्णा बुभुक्षुता निद्रा (for the prior half). M3 ह्यालस्यं; M4 [अ]प्यालस्यं (for आ°). G3 घृणादयः. — (L. 1701) M2 अवृत्तिश्च (for आधिश्चापि). G1.2 M3 विषादश्. — (L. 1702) G3 भय- (for भयं). G2 M2.4 जाल्यं (for जाड्यं). M2 om. from the post. half up to the prior half of line 1705. T2 G3 प्रमादो; M4 पापका (for °कं). — (L. 1703) T1 आहूय; T2 असूया; G3 अशौचा (for आशा च). G1.2 M3 [अ]मंत्रणं; G3 [अ]यंत्रिणं. — (L. 1704) G2 अशौचं. G3 ह्येताः (for ह्येते). — (L. 1705) T G3 प्र- (for न). G3 M4 वर्तते (for दृश्यन्ते). T1 न (for स). — (L. 1706) G2.3 M3 ये( G2 ए )ष्वेतेषु (for येषु येषु). T M4 च (for हि). — (L. 1707) G1.2 M2.3 कालं वै (for तत्कालं). G3 M3 -दुर्लभः (for -दुर्बलः). — (L. 1708) T G3 M4 प्राणायामं च यः का( G3 यत्का )ले यो मां चापि विचिंतयेत्. — (L. 1709) G1.2 M2.3 सकालो; G3 तत्कालो. T1 M4 शेषकाले; G3 शेषः कालो. G1.2 M3 [s]पि (for हि). M2 शेषकालमथेतरः (for the post. half). — (L. 1710) T G1.3 असात् (for त°). M3 हि (for तु). — (L. 1711) M2 यदि (for यद्). T G1.3 इच्छसि (for °ति). — (L. 1712) T M3 धृतौ; G3 ऋतौ; M2 धृतो; M4 धृतिं (for धृतिर्). — (L. 1713) T om. च. — (L. 1714) M2.4 केवलं (for चञ्चलं). — (L. 1715)

क्षमा जयति न क्रोधः क्षमावान्ब्राह्मणो भवेत् ।

Colophon.

वैशंपायन उवाच ।

दानपुण्यफलं श्रुत्वा तपः पुण्यफलानि च । [ 1720 ]
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ।
या चैषा कपिला देव पूर्वमुत्पादिता विभो ।
होमधेनुः सदा पुण्या चतुर्वक्त्रेण माधव ।
सा कथं ब्राह्मणेभ्यो हि देया कस्मिन्दिनेऽपि वा ।
कीदृशाय च विप्राय दातव्या पुण्यलक्षणा । [ 1725 ]
कति वा कपिलाः प्रोक्ताः स्वयमेव स्वयंभुवा ।
कैर्वा देयाश्च ता देव श्रोतुमिच्छामि तत्त्वतः ।
एवमुक्तो हृषीकेशो धर्मपुत्रेण संसदि ।
अब्रवीत्कपिलासंख्यां तासां माहात्म्यमेव च ।
शृणु पाण्डव तत्त्वेन पवित्रं पावनं परम् । [ 1730 ]
यच्छ्रुत्वा पापकर्मापि नरः पापैः प्रमुच्यते ।
अग्निमध्योद्भवां दिव्यामग्निज्वालासमप्रभाम् ।
अग्निज्वालोज्ज्वलच्छृङ्गीं प्रदीप्ताङ्गारलोचनाम् ।
अग्निपुच्छामग्निखुरामग्निरोमप्रभान्विताम् ।
तामाग्नेयीमग्निजिह्वामग्निग्रीवां ज्वलत्प्रभाम् । [ 1735 ]
भुञ्जते कपिलां ये तु शूद्रा लोभेन मोहिताः ।
पतितांस्तान्विजानीयाच्चण्डालसदृशा हि ते ।
न तेषां ब्राह्मणः कश्चिद्गृहे कुर्यात्प्रतिग्रहम् ।
दूराच्च परिहर्तव्या महापातकिनोऽपि ते ।
सर्वकालं हि ते सर्वैर्वर्जिताः पितृदैवतैः । [ 1740 ]
ते सदा ह्यप्रतिग्राह्या ह्यसंभाष्याश्च पापिनः ।
पिबन्ति कपिलां यावत्तावत्तेषां पितामहाः ।
अमेध्यमुपभुञ्जन्ति भूम्यां वै श्वसृगालवत् ।
कपिलाया घृतं क्षीरं दधि तक्रमथापि वा ।
ये शूद्रा उपभुञ्जन्ति तेषां गतिमिमां शृणु । [ 1745 ]
कपिलोपजीवी शूद्रस्तु मृतो गच्छति रौरवम् ।
क्लिश्यते रौरवे घोरे वर्षकोटिशतं वसन् ।
रौरवाच्च परिभ्रष्टो विष्ठायां जायते क्रिमिः ।
विष्ठागर्तेषु संविष्टो दुर्गन्धेषु सहस्रशः ।
तत्रैव जायमानोऽसौ नोत्तारं तत्र विन्दति । [ 1750 ]
ब्राह्मणश्चैव यस्तेषां गृहे कुर्यात्प्रतिग्रहम् ।

---

M3 ( *sup. lin.* as above ) भोगान् ( for भयान् ). M2 भोगान्निवृत्तो भगवान्स चोच्यते. — ( L. 1716 ) T G1.3 ध्या- ( G1 ध्या )निनो ; M4 ध्यायिनो ( for [अ]ध्यात्मिनो ). — ( L. 1717 ) T G3 M2 येषां; M4 एषां ( for तेषां ). G3 तृप्यंते ; M2 भोज्यंति. M2 तेषां ( for तेन ). — Colophon. — *Sub-parvan :* T M2.4 वैष्णवधर्म. — *Adhy. name :* M2 गृहस्थधर्मविधिः. — *Adhy. no. :* T1 92; T2 G1.2 91; G3 102; M2 8; M3 90; M4 101. —(L. 1720) M2 -धर्म- (for -पुण्य-). G1 ततः ( for तपः ). — Before line 1722, MSS. ins. युधिष्ठिर उवाच. G1 om. lines 1724–1726. —(L. 1724) G3 M2 वै ( for हि ). — ( L. 1726 ) Kumbh. ed. कथिताः ( for कति वा ). —(L. 1727;) M2 ज्ञातुम् ( for श्रोतुम् ). G3 M4 माधव ( for तत्त्वतः ). — Before line 1730, MSS. ins. भगवानुवाच. — ( L. 1730 ) G3 तत्त्वश ( for तत्त्वेन ). M4 पवित्रं पापनाशनं. —(L. 1731) G2 तत्कृत्वा; M2 तच्छ्रुत्वा. G1.2 M3 पापात् ( for पापैः ). — ( L. 1733 ) M2 -ज्वालोज्ज्वलां. T प्रदीप्तां गौरलोचनां ( for the post. half ). — ( L. 1734 ) T1 G1.2 -प्रभाम् ( for -पुच्छाम् ). — ( L. 1735 ) G1.2 M3 -वर्णाम् ( for -जिह्वाम् ). — ( L. 1736 ) M2 om. from the post. half up to the prior half of line 1738. G1 M3 श्रद्धा- (sic) ( for शूद्रा ). —(L. 1737) G1 -समशो ( for -सदृशा ). — ( L. 1738 ) T किंचिद् ( for कश्चिद् ). — ( L. 1740 ) T1 G2 M2.3 सार्व- ( for सर्व- ). M2 -देवतैः ( for -दै° ). — ( L. 1741 ) G2.3 M3 om. the second हि. —( L. 1744 ) M4 स्तनं ( for घृतं ). T M2 च ( for वा ). — ( L. 1745 ) G1 M3 अपि ( for उप- ). — After line 1747, G1.2 M3 ins. :

ततश्चापि च्युतः कालाच्छ्वानयोनिं स गच्छति ।

while M2 ins. :

ततश्च मुक्तः कालेन शूनां योनिशतं व्रजेत् ।

— ( L. 1748 ) G1 M2-4 श्वयोन्याश् ( for रौरवात् ). — ( L. 1749 ) G1.2 M2.3 विष्ठाकूपे( M2 °वर्गे )षु पापिष्ठो ( for the prior half ). — ( L. 1750 ) G1.2 M2.3 तत्र तत्रैव जायेत; M4 तत्रैव जायते तत्र; Kumbh. ed. and Madras ed. तत्र तत्रोपजायेत ( for the prior half ). T नोत्कर्षं ( for नोत्तारं ). — ( L. 1751 ) M2 चापि ( for चैव ). — ( L. 1753 ) T1 G1.2

ततः प्रभृति तस्यापि पितरः स्युरमेध्यपाः ।
न तेन सार्धं संभाषेन्न चाप्येकासनं व्रजेत् ।
स नित्यं वर्जनीयो हि दूरात्तु ब्राह्मणाधमः ।
यस्तेन सह संभाषेदेकशय्यां व्रजेत वा । [ 1755 ]
प्राजापत्यं चरेत्कृच्छ्रं स च तेनैव शुध्यति ।
कपिलोपजीविनः शूद्राद्यः करोति प्रतिग्रहम् ।
प्रायश्चित्तं भवेत्तस्य विप्रस्यैतन्न संशयः ।
ब्रह्मकूर्चं तु कुर्वीत चान्द्रायणमथापि वा ।
मुच्यते किल्बिषात्तस्मादेतेन ब्राह्मणो हि सः । [ 1760 ]
कपिला ह्यग्निहोत्रार्थे यज्ञार्थे च स्वयंभुवा ।
सर्वतस्तेज उद्धृत्य ब्रह्मणा निर्मिता पुरा ।
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
पुण्यानां परमं पुण्यं कपिला पाण्डुनन्दन ।
तपसां तप एवाग्र्यं व्रतानां व्रतमुत्तमम् । [ 1765 ]
दानानां परमं दानं निदानं ह्येतदक्षयम् ।
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
पवित्राणि च रम्याणि सर्वलोकेषु पाण्डव ।
तेभ्यस्तेजः समुद्धृत्य ब्रह्मणा लोककर्तृणा ।
लोकनिस्तारणायैव निर्मिताः कपिलाः स्वयम् । [ 1770 ]
सर्वतेजोमयी ह्येषा कपिला पाण्डुनन्दन ।
सदामृतमयी मेध्या शुचिः पावनमुत्तमम् ।
क्षीरेण कपिलायास्तु दध्ना वै सघृतेन वा ।
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः ।
कपिलाया घृतेनापि दध्ना क्षीरेण वा पुनः । [ 1775 ]
जुह्वते येऽग्निहोत्राणि ब्राह्मणा विधिवत्प्रभो ।
पूजयन्त्यतिथींश्चैव परां भक्तिमुपागताः ।
शूद्रान्नाद्विरता नित्यं दम्भानृतविवर्जिताः ।
ते यान्त्यादित्यसंकाशैर्विमानैर्द्विजसत्तमाः ।
सूर्यमण्डलमध्येन ब्रह्मलोकमनुत्तमम् । [ 1780 ]
ब्रह्मणो भवने दिव्ये कामगाः कामरूपिणः ।
ब्रह्मणा पूज्यमानास्तु मोदन्ते कल्पमक्षयम् ।
एवं हि कपिला राजन्पुण्या मन्त्रामृतारणिः ।
आदावेवाग्निमध्यात्तु मैत्रेयी ब्रह्मनिर्मिता ।
शृङ्गाग्रे कपिलायास्तु सर्वतीर्थानि पाण्डव । [ 1785 ]
ब्रह्मणो हि नियोगेन निवसन्ति दिने दिने ।
प्रातरुत्थाय यो मर्त्यः कपिलाशृङ्गमस्तकात् ।
च्युता आपस्तु शीर्षेण प्रयतो धारयेच्छुचिः ।
स तेन पुण्यतीर्थेन सहसा दग्धकिल्बिषः ।
वर्षत्रयकृतं पापं प्रदहत्यग्निवत्तृणम् । [ 1790 ]
मूत्रेण कपिलायास्तु यस्तु प्रातरुपस्पृशेत् ।

---

संभाष्येन्. $M_2$ om. ( hapl. ) from the post. half up to the prior half of line 1755. — ( L. 1755 ) $T_1$ $G_{1,2}$ $M_3$ संभाष्येद्. $T_1$ व्रजेत्ततः ( for °त वा ). — ( L. 1756 ) T विवर्जितः ( $T_2$ °र्जयेत् ); $G_3$ $M_4$ विशुध्यति ( for [ए]व शु° ). — ( L. 1757 ) Prior half, hypermetric. $T_1$ कपिलाजीविनः शूद्राद् ( for the prior half ). — ( L. 1758 ) $G_{1,2}$ $M_3$ ( *sup. lin.* ) चरेत् ( for भवेत् ). $G_{1,2}$ $M_3$ [इ]ति; $M_2$ [इ]दं ( for [ए]तन् ). — ( L. 1759 ) $G_{1,2}$ $M_{3,4}$ स ( for तु ). $M_2$ पद्मकूर्चं कुर्वीत. $G_1$ अथो ( for अथ ). — ( L. 1760 ) T $G_3$ अस्माद् ( for त° ). $M_2$ तेन स्याद् ( for एतेन ). — ( L. 1761 ) T अग्निहोत्रार्थं. $G_{1,2}$ $M_2$ विप्रार्थे ( for यज्ञार्थे ). $T_1$ $G_{1,2}$ $M_3$ वा ( for च ). — ( L. 1762 ) $G_3$ सर्वं तत् ( for सर्वतस् ). $G_{1,2}$ $M_3$ सर्वं तेजः समुद्धृत्य ( for the prior half ). $G_{1,2}$ $M_{2,3}$ निर्मिता ब्रह्मणा पुरा. — ( L. 1765 ) $G_{1,2}$ $M_3$ उत्तमं व्रतं ( by transp. ). — ( L. 1766 ) $G_1$ $M_{2-4}$ निधानं ( for निदानं ). $T_2$ $G_3$ न दा( $G_3$ निद्रा )नं वा तदुत्तमं ( for the post. half ). — ( L. 1769 ) Kumbh. ed. एभ्यस् ( for तेभ्यस् ). $G_1$ तेभ्यः ( for तेजः ). — ( L. 1770 ) $T_2$ $G_3$ -निस्तरणाय; $G_1$ -विस्तार°. $M_2$ [इ]व ( for [ए]व ). — ( L. 1771 ) T $G_3$ $M_4$ ह्येवं ( $M_4$ °व ) ( for ह्येषा ). — ( L. 1772 ) T सदामृतमहामेध्या; $G_3$ °मद्रा मेध्या; $M_4$ °वहा मेध्या. — ( L. 1773 ) $M_{2,3}$ ( *sup. lin.* as above ) चैव ( for वै स- ). — ( 1774 ) $G_3$ $M_4$ भोक्तव्यानि ( for सायं प्रातर् ). — ( L. 1775 ) $G_2$ $M_2$ नृप ( for पुनः ). — ( L. 1776 ) $M_2$ जुहृते. $M_2$ सदा ( for प्रभो ). — ( L. 1777 ) $G_3$ $M_4$ उपाश्रितः ( for °गताः ). — ( L. 1778 ) T $M_4$ शूद्रान्न- ( for °न्नाद् ). T दंभलोभ- ( for दम्भानृत- ). — ( L. 1779 ) $G_3$ $M_{2,4}$ -कल्पैस्तु ( for -संकाशैर् ). — ( L. 1783 ) $G_3$ $M_4$ पुण्यामृतवितारिणी; $M_2$ श्रेयामतवितारणिः ( sic ) ( for the post. half ). — ( L. 1784 ) $G_3$ देवाग्नि- ( for एवाग्नि- ). $G_1$ -मध्ये; $M_{2,3}$ ( *inf. lin.* ) -होत्रात् ( for -मध्यात् ). $G_3$ मैत्रेय-. $M_2$ मंत्रैर्ब्रह्मादिनिर्मिता. — ( L. 1787 ) $M_{2,3}$ -मस्तकं ( for °कात् ). — ( L. 1788 ) $G_{1,2}$ $M_2$ यश्च्युताम्बुधारां वै ( for the prior half ). T धारयेत्प्रयतः ( by transp. ); $G_{1,2}$ $M_2$ शिरसा प्रयतः. — ( L. 1789 ) $M_2$ -स्नानेन ( for -तीर्थेन ). T न हि( $T_2$ स हि )तो; $M_2$ तत्क्षणाद् ( for सहसा ). — ( L. 1790 ) $T_2$ $G_{1,2}$ $M_3$ जन्म- ( for वर्ष- ). $M_2$ -कृतः (sic) ( for -कृतं ). T कर्म ( for

स्नानेन तेन पुण्येन नष्टपापः स मानवः ।
त्रिंशद्वर्षकृतात्पापान्मुच्यते नात्र संशयः ।
प्रातरुत्थाय यो भक्त्या प्रयच्छेत्तृणमुष्टिकम् ।
तस्य नश्यति तत्पापं त्रिंशद्रात्रिकृतं नृप । [ 1795 ]
प्रातरुत्थाय मद्भक्त्या कुर्याद्यस्तां प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन पृथिवी नात्र संशयः ।
प्रदक्षिणेन चैकेन श्रद्धायुक्तस्य पाण्डव ।
दशरात्रकृतं पापं तस्य तन्नश्यति ध्रुवम् ।
कपिलापञ्चगव्येन यः स्नायात्तु शुचिर्नरः । [ 1800 ]
स गङ्गाद्येषु तीर्थेषु स्नातो भवति पाण्डव ।
तेन स्नानेन तस्यापि श्रद्धायुक्तस्य पाण्डव ।
दशरात्रकृतं पापं तत्क्षणादेव नश्यति ।
दृष्ट्वा तु कपिलां भक्त्या श्रुत्वा हुम्भारवं तथा ।
व्यपोहति नरः पापमहोरात्रकृतं नृप । [ 1805 ]
यत्र वा तत्र वा चाङ्गे कपिलां यः स्पृशेच्छुचिः ।
संवत्सरकृतं पापं विनाशयति पाण्डव ।
गोसहस्रं च यो दद्यादेकां च कपिलां नरः ।
समं तस्य फलं प्राह ब्रह्मलोके पितामहः ।
यस्त्वेकां कपिलां हन्यान्नरः किंचित्प्रमादतः । [ 1810 ]
गोसहस्रं हतं तेन भवेन्नात्र विचारणा ।
यश्चैकां कपिलां दद्याच्छ्रोत्रियायाहिताग्नये ।
गवां शतसहस्रं तु दत्तं भवति पाण्डव ।
दशैव कपिलाः प्रोक्ताः स्वयमेव स्वयंभुवा ।
यो दद्याच्छ्रोत्रियेभ्यो वै स्वर्गं गच्छति तच्छृणु । [ 1815 ]
प्रथमा स्वर्णकपिला द्वितीया गौरपिङ्गला ।
तृतीया रक्तपिङ्गाक्षी चतुर्थी गलपिङ्गला ।
पञ्चमी बभ्रुवर्णाभा षष्ठी च श्वेतपिङ्गला ।
सप्तमी रक्तपिङ्गाक्षी अष्टमी खुरपिङ्गला ।
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला । [ 1820 ]
दशैताः कपिलाः प्रोक्तास्तारयन्ति नरान्सदा ।
मङ्गल्याश्च पवित्राश्च सर्वपापप्रणाशनाः ।
एवमेव ह्यनड्वाहो दश प्रोक्ता नरेश्वर ।
ब्राह्मणो वाहयेत्तांस्तु नान्यो वर्णः कथंचन ।
न घातयेत्तु दण्डेन क्षेत्रे वाध्वनि वा द्विजः । [ 1825 ]
वाहयेद्धुंकृतेनैव शाखया वा सपत्रया ।
न दण्डेन न यष्ट्या वा न पाशेन च वा पुनः ।

---

पापं ). G1.2 प्रहरति ( for प्रदहति ). M2 दहत्यग्निरिंधनं ( for the post. half ). — ( L. 1791 ) G1.2 M2.3 च ( for the second तु ). G1 M3 ( *sup. lin.* ) प्राणान् ( for प्रातर् ). — ( L. 1793 ) M2 पूयते ( for मुच्यते ). — ( L. 1794 ) T मर्त्यः ( for भक्त्या ). M2 om. ( hapl. ) from the post. half up to the prior half of line 1796. — ( L. 1795 ) G1 त्रिंशद्वर्ष-; Kumbh. ed. and Madras ed. °द्रात्र- ( for °द्रात्रि- ). — ( L. 1796 ) T यो ( for मद्- ). T आसां; G1 यस्मात्; G2 यस्तत्; M3 यस्तु ( for यस्तां ). — ( L. 1798 ) G1.2 M3 -युक्तेन ( for -युक्तस्य ). — ( L. 1799 ) G2 M3 दशरात्रि-. G3 तत्क्षणादेव नश्यति; M2 तस्य सद्यो विनश्यति ( for the post. half ). — G3 om. lines 1800–1801. — ( L. 1800 ) T1 स्नात्वा ( for स्नायात् ). — ( L. 1801 ) T1 गंगादिपुण्यतीर्थेषु ( for the prior half ). — T om. lines 1802–1803. — ( L. 1802 ) M2 तस्याशु. Kumbh. ed. पार्थिव ( for पाण्डव ). — ( L. 1803 ) M2 यावज्जीव-; M4 दशरात्रि- ( for °रात्र- ). — ( L. 1804 ) T प्रातरुत्थाय यो भक्त्या ( for the prior half ). G1.2 M3 श्रुत्वा हुंकारनिस्वनं ( for the post. half ). — ( L. 1805 ) T G3 नरः ( for नृप ). — ( L. 1806 ) G1 M4 कपिलायाः ( for °लां यः ). — ( L. 1807 ) T G3 M4 स ( for वि- ). — ( L. 1808 ) M2 च यः ( for नरः ). — After line 1808, M4 ins.:

यस्त्वेकां कपिलां दद्यात्स तस्मात्तु विशिष्यते ।

— G3 om. lines 1809–1811. M4 om. line 1809. — ( L. 1809 ) G2 M2.3 ब्रह्मा लोक- ( for ब्रह्मलोके ). — ( L. 1810 ) G1 M2.3 [ए]वं ( for [ए]कां ). M2.3 कश्चित्. — ( L. 1811 ) T G2 नात्र कार्या ( for भवेन्नात्र ). — ( L. 1812 ) T M4 तु ( for च ). M2 श्रोत्रियायाग्निहोत्रिणे ( for the post. half ). — ( L. 1813 ) M2 ते (sic) ( for तु ). — ( L. 1814 ) G1.2 M3 वै; M2 [इ]ह ( for the first [ए]व ). — ( L. 1815 ) G3 या दद्यात्; M2 या दद्यां (sic); M4 या दत्त्वा ( for यो दद्यात् ). T2 G3 ताः ( for तत् ). — ( L. 1816 ) M2 सुवर्ण- ( hypermetric ) ( for स्वर्ण- ). Some MSS. -पिंगळा. — ( L. 1817 ) T2 M3 रत्न- ( for रक्त- ). Some MSS. गळपिंगळा. — ( L. 1818 ) G3 च सुवर्णाभा; M2 बभ्रुपिंगा स्यात्; M4 °वर्णाभ्रा. — ( L. 1819 ) G2 रत्न-; M2 कृष्ण- ( for रक्त- ). T1 सप्तमी पिंगलाक्षी च ( for the prior half ). G1 M3 त्वष्टमी. T1 मुख- ( for खुर- ). — ( L. 1820 ) M2 चैव ( for ज्ञेया ). — ( L. 1821 ) T G3 नरं ( for नरान् ). M2 तु याः ( for सदा ). — ( L. 1822 ) T मंगल्यश्च. G3 विचित्राश्च; M4 विचित्रं ( for पवित्राश्च ). — ( L. 1823 ) M2 एवं ( for एव ). T1 M2 ह्यनड्वाहा. T नराधिप; M2 मर्मापिभिः ( for नरेश्वर ). — ( L. 1824 ) T G3 कदाचन ( for कथंचन ). — ( L. 1825 ) M4 च ( for तु ). G1.2 न वाहयेच्च

न क्षुत्तृष्णाश्रमश्रान्तान्वाहयेद्विकलेन्द्रियान् ।
अतृप्तेषु न भुञ्जीयात्पिबेत्पीतेषु चोदकम् ।
शुश्रूषोर्मातरश्चैताः पितरस्ते प्रकीर्तिताः । [ 1830 ]
अह्नां पूर्वे त्रिभागे तु धुर्याणां वाहनं स्मृतम् ।
विश्रामेन्मध्यमे भागे भागे चान्ते यथासुखम् ।
यत्र वा त्वरया कृत्यं संशयो यत्र वाध्वनि ।
वाहयेत्तत्र धुर्यांस्तु न स पापेन लिप्यते ।
अन्यथा वाहयन्राजन्निरयं याति रौरवम् । [ 1835 ]
रुधिरं पातयेत्तेषां यस्तु मोहान्नराधिप ।
ब्रह्महत्यासमं पापं तस्य स्यात्पाण्डुनन्दन ।
तेन पापेन पापात्मा निरयं यात्यसंशयम् ।
नरकेषु च सर्वेषु समास्थित्वा शतं शतम् ।
इह मानुष्यके लोके बलीवर्दो भविष्यति । [ 1840 ]
तस्मात्तु मुक्तिमन्विच्छन्दद्यात्तु कपिलां नरः ।
कपिलां वाहयेद्यस्तु वृषलो लोभमोहितः ।
तेन देवास्त्रयस्त्रिंशत्पितरश्चापि वाहिताः ।
स देवैः पितृभिर्नित्यं वध्यमानः सुदुर्मतिः ।
नरकान्नरकं घोरं गच्छेदाप्रलयं नृप । [ 1845 ]
ब्रह्मा रुद्रस्तथाग्निश्च कपिलानां गतिं गताः ।
तस्मात्ते तु न हन्तव्याः पूज्यास्ते तु विशेषतः ।
निःश्वसन्ति यदा श्रान्तास्तदा हन्युश्च तत्कुलम् ।
यावन्ति तेषां रोमाणि तावद्वर्षशतं नृप ।
नरके परिपच्यन्ते तत्र तद्वाहका नराः । [ 1850 ]
कपिला सर्वयज्ञेषु दक्षिणार्थं विधीयते ।
तस्मात्ता दक्षिणा देया यज्ञेष्वेव द्विजातिभिः ।
होमार्थं चाग्निहोत्रस्य यां प्रयच्छेत्प्रयत्नतः ।
श्रोत्रियाय दरिद्राय श्रान्तायामिततेजसे ।
तेन दानेन पूतात्मा सोऽग्निलोके महीयते । [ 1855 ]
यावन्ति चैव रोमाणि कपिलाङ्गे युधिष्ठिर ।
तावद्वर्षसहस्राणि नरः स्वर्गे च वर्तते ।
सुवर्णखुरशृङ्गीं च कपिलां यः प्रयच्छति ।
विषुवे चायने वापि सोऽश्वमेधफलं लभेत् ।
तेनाश्वमेधतुल्येन मम लोकं स गच्छति । [ 1860 ]
स्वर्णशृङ्गीं रूप्यखुरां सवत्सां कांस्यदोहिनीम् ।
वस्त्रैरलंकृतां पुष्टां गन्धैर्माल्यैश्च शोभिताम् ।
पवित्रं हि पवित्राणां सुवर्णमिति मे मतिः ।

कपिलां ( for the prior half ). — ( L. 1826 ) M2 ध्वंकृतेन. M3 शाखाया. G2 परि-; M2 च स- ( for वा स- ). — ( L. 1827 ) M1 तु ( for च ). M2 न पापाणेन वा पुनः ( for the post. half ). — ( L. 1828 ) T1 G1 -श्रमाशांतान्; T2 M2, 3 -श्रमाश्रांतान्; M4 -श्रमश्रांतं. T G2 व्याकुलेंद्रियान्; M4 विकलेंद्रियं. — ( L. 1829 ) T G3 M2, 4 सुतृप्तेषु. T1 G3 च; M2 सु-; M1 तु ( for न ). T2 वा ( for च ). — ( L. 1830 ) G3 गुरवो; M2, 4 शुश्रूषेत्. M2 पापतश् ( for मातरश् ). G3 ताः ( for ते ). — ( L. 1831 ) T पूर्वत्र ( for पूर्वे त्रि- ). G1, 2 M3 अह्नां पूर्वत्रि( G2 °र्वे त्रि )भागेन; M2 अत्रं पूर्वे त्रिभागेषु ( for the prior half ). — ( L. 1832 ) T विश्रमेन्; G1 M2, 3 विश्रा- ( M3 °श्र )मो. — ( L. 1833 ) T G1 च ( for वा ). — ( L. 1834 ) G2 यत्र ( for तत्र ). — After line 1834, G1 reads line 1837. — ( L. 1835 ) M2 वाह- येद् ( for °यन् ). G3 निरयं यांति कौरव ( for the post. half ). — ( L. 1836 ) G3 M4 वाहयेत् ( for पात° ). T G1 M1 नराधमः ( for °धिप ). — ( L. 1837 ) G1 M2, 4 भ्रूण- ( for ब्रह्म- ). — ( L. 1838 ) G1, 2 M3 नरकं; M2 नरकान ( for निरयं ). T1 G M4 [अ]संशयः; M2 सर्वशः. — ( L. 1839 ) M2 स ( for च ). — ( L. 1843 ) T2 त्वितरे ( for पितरश् ). T तापिताः ( for वाहिताः ). — ( L. 1844 ) M2 अवध्यातः ( for वध्य- मानः ). G1, 2 M3 तु ( for सु- ). — ( L. 1845 ) G3 वाप्रलयं. T G3 नरः ( for नृप ). M1 गच्छे- दाप्रलयांतरं ( for the post. half ). — ( L. 1847 ) G1, 2 तेन; M2 तु ते ( by transp. ). M2 चैव ( for the second ते तु ). G1, 2 M3 पूज्याश्चैव न-संशयः ( for the post. half ). — ( L. 1748 ) T1 G2, 3 यथा ( for यदा ). T1 शांतास् ( for श्रान्तास् ). — ( L. 1850 ) M4 तत्र ( for परि° ). G1 M3 नरकेषूपपच्यंते ( for the post. half ). M2 वाहना ( for °का ). — ( L. 1852 ) G3 तु ( for ता ). M2 ज्ञेया ( for देया ). — ( L. 1853 ) G2 सोमार्थं; M2 होमार्थे. G3 [अ]पि यज्ञस्य ( for [अ]ग्निहोत्रस्य ). M2 यः प्रयच्छेत तां नरः ( for the post. half ). — ( L. 1854 ) T श्रांताय नियतात्मने; G3 M4 शांताय च यतात्मने; M2 प्रशांताय यतात्मने ( for the post. half ). — ( L. 1855 ) G1, 2 M3 मम ( for सोऽग्नि- ). — ( L. 1856 ) M2 कपिलाया ( for °लाङ्गे ). T G3 M4 कपिलाया ( T °यां ) नरेश्वर ( for the post. half ). — ( L. 1857 ) G1, 2 M3 सुखं स्वर्गे; Kumbh. ed. स्वर्गलोके ( for नरः स्वर्गे ). G1, 2 M3, 4 महीयते ( for च वर्तते ). M2 दाता स्वर्गे युधिष्ठिर ( for the post. half ). — ( L. 1858 ) T M2 यः ( for च ) and तु ( for यः ). — ( L. 1859 ) T1 विष्णवे ( for विषुवे ). M2 वा ( for च ). M3 च ( for वा ). G2 भवेत् ( for लभेत् ). — ( L. 1861 ) M2 सुवर्ण- ( hypermetric ) ( for स्वर्ण- ). G3 M2 रौप्यखुरां. T M2-4 कांस्यदोहनां ( M2 °नीं ). — ( L. 1862 ) T G3 M4 गंध-; M2 पुष्पैर् ( for

तस्मात्सुवर्णाभरणा दातव्या चाग्निहोत्रिणे ।
एवं दत्त्वा तु राजेन्द्र सप्तपूर्वान्परानपि । [ 1865 ]
तारयिष्यति राजेन्द्र नात्र कार्या विचारणा ।
अग्निष्टोमसहस्रस्य वाजपेयसमं भवेत् ।
वाजपेयसहस्रस्य अश्वमेधं च तत्समम् ।
अश्वमेधसहस्रं च राजसूयं च तत्समम् ।
कपिलानां सहस्रेण विधिदत्तेन पाण्डव । [ 1870 ]
राजसूयफलं प्राप्य मम लोके महीयते ।
न तस्य पुनरावृत्तिर्विद्यते कुरुपुंगव ।
प्रयच्छते यः कपिलां सवत्सां कांस्यदोहिनीम् ।
तैस्तैर्गुणैः कामदुघा च भूत्वा
नरं प्रदातारमुपैति सा गौः । [ 1875 ]
स्वकर्मभिश्चाप्यनुबध्यमानं
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुनीता
दत्ता हि गौस्तारयते मनुष्यम् ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व- [ 1880 ]
मासप्तमं तारयते परत्र ।
यावन्मनुष्यान्पृथिवीं बिभर्ति
तावत्प्रदातारमितोऽपरत्र ।
यथौषधं मन्त्रकृतं नरस्य
प्रयुक्तमात्रं विनिहन्ति रोगान् । [ 1885 ]
तथैव दत्ता कपिला सुपात्रे
पापं नरस्याशु निहन्ति सर्वम् ।
यथैव दृष्ट्वा भुजगाः सुपर्णं
नश्यन्ति दूराद्विवशा भयार्ताः ।
तथैव दृष्ट्वा कपिलाप्रदानं [ 1890 ]
नश्यन्ति पापानि नरस्य शीघ्रम् ।
यथा त्वचं स्वां भुजगो विहाय
पुनर्नवं रूपमुपैति पुण्यम् ।
तथैव मुक्तः पुरुषः स्वपापै-
र्विराजते वै कपिलाप्रदानात् । [ 1895 ]
यथान्धकारं भवने विलग्नं
दीप्तो हि निर्यातयति प्रदीपः ।
तथा नरः पापमपि प्रलीनं
निष्कामयेद्वै कपिलाप्रदानम् ।
यावन्ति रोमाणि भवन्ति तस्या [ 1900 ]
वत्सान्वितायाश्च शरीरजानि ।
तावत्प्रदाता युगवर्षकोटिं
स ब्रह्मलोके रमते मनुष्यः ।
यस्याहिताग्नेरतिथिप्रियस्य

---

गन्धैर्). M2 पूजिताः (for शोभिताम्). — (L. 1864) G1.2 M3 साग्नि-; M2 ह्याग्नि- (for चाग्नि-). — (L. 1867) T -सहस्रं च; M2 °स्रं तु (for °स्रस्य). G3 om. (hapl.) the post. half and the prior half of line 1868. M2 वाजपेयं च तत्समं. — (L. 1868) T1 G1.2 M3 -सहस्रं च (for °स्रस्य). T1 राजसूयं; T2 ह्यश्वमेधं; M2 [अ]प्यश्वमेधश् (for अश्वमेधं). — T1 om. lines 1869–1870, and G2 reads the same after line 1871. — (L. 1869) G3 M4 -सहस्रस्य (for °स्रं च). — (L. 1873) T सचेलां कांस्यदोहनां. — For line 1873, G3 M2.4 subst.:

प्रयच्छते यः कपिलां सवत्सां
कांस्योपदोहां कनकाग्रशृङ्गीम् ।

[(L. 1) G3 प्रयच्छति. — (L. 2) M4 सकांस्यदोहां (for कांस्योप°).]

while after line 1873, G1.2 M2 ins.:

सुवर्णखुरशृङ्गाङ्गीं सर्वालंकारशोभिताम् ।

— (L. 1874) G2 कामदुहा (for °दुघा). T M4 हि; G3 [अ]भि- (for च). — (L. 1876) M2 यत् (for स्व-). M4 [अ]थ (for [अ]नु-). — (L. 1877) T G1 महांधकारे (for तीव्रान्ध°). G1 नरकं. — (L. 1881) G1 M4 आ सप्तमात्. Kumbh. ed. and Madras ed. मनुष्यं (for परत्र). — (L. 1883) G3 M2.4 प्रदातारमते (for °मितो). G1.2 तावत्प्रदातारमृतं परत्र. — (L. 1884) T2 G3 मात्रकृतं (for मन्त्र°). — (L. 1885) G3 विनिहत्य. M2 रोगं. — (L. 1886) G3 दाने (for दत्ता). — (L. 1887) G1.3 निरस्य (for न°). G3 [अ]पि (for [आ]शु). M2 विहत्य सर्वा (sic); M4 विहंति सर्वे. — (L. 1890) G1 कपिलाप्रदानान्. — (L. 1892) G1 M3 वै (for स्वां). — (L. 1894) G2 स (for स्व-). — (L. 1895) T1 विराजिते; G1 विरज्यते; G2 विमुच्यते. M2 -प्रतानात् (sic) (for -प्रदानात्). — (L. 1896) G1 M2 यदा (for यथा). T G3 M4 नयनेषु म(G3 M4 ल)ग्नं. — (L. 1897) T G3 M2.4 दीपो. G1.2 M3 निर्यासयति; M2 विवासयितुं (for निर्यातयति). T1 प्रदीप्या; G3 प्रदीप्तः; M2 समर्थः (for प्रदीपः). — (L. 1898) T G3 M2.4 नरे (for नरः). — (L. 1899) T G3 M4 निर्यातयेद्; M2 निर्वासयद् (for निष्कामयेद्). M2 -प्रदानात्. — (L. 1901) M2 वर्णान्वितायाश् (for वत्सा°). — (L. 1902) G3 M2.4

शूद्रान्नदूरस्य जितेन्द्रियस्य । [ 1905 ]
सत्यव्रतस्याध्ययनान्वितस्य
दत्ता हि गौस्तारयते परत्र ।

Colophon.

वैशंपायन उवाच ।

एवं श्रुत्वा परं पुण्यं कपिलादानमुत्तमम् ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ।
देवदेवेश कपिला यदा विप्राय दीयते । [ 1910 ]
कथं सर्वेषु चाङ्गेषु तस्यास्तिष्ठन्ति देवताः ।
याश्चैताः कपिलाः प्रोक्ता दश चैव त्वया मम ।
तासां कति सुरश्रेष्ठ कपिलाः पुण्यलक्षणाः ।
कथं वानुगृहीतास्ताः सुरैः पितृगणैरपि ।
केन युक्ताश्च वर्णेन श्रोतुं कौतूहलं हि मे । [ 1915 ]
युधिष्ठिरेणैवमुक्तः केशवः सत्यवाक्तदा ।
गुह्यानां परमं गुह्यं वक्तुमेवोपचक्रमे ।
शृणु राजन्पवित्रं वै रहस्यं धर्ममुत्तमम् ।
ग्रहणीयं सत्यमिदं न श्राव्यं हेतुवादिनाम् ।
यदा वत्सस्य पादौ द्वौ प्रसवे शिरसा सह । [ 1920 ]
दृश्येते दानकालं तमाहुः कालविदो जनाः ।
अन्तरिक्षगतो वत्सो यावद्भूमिं न यास्यति ।
गौस्तावत्पृथिवी ज्ञेया तस्माद्देया तु तादृशी ।
यावन्ति धेन्वा रोमाणि सवत्सायाः युधिष्ठिर ।
यावन्त्यः सिकताश्चापि गर्भोदकपरिप्लुताः । [ 1925 ]
तावद्वर्षसहस्राणि दाता स्वर्गे महीयते ।
सुवर्णाभरणां कृत्वा सवत्सां कपिलां तिलैः ।
प्रच्छाद्य तां तु दद्याद्वै सर्वरत्नैरलंकृताम् ।
ससमुद्रा मही तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता नात्र कार्या विचारणा । [ 1930 ]
पृथिवीदानतुल्येन तेन दानेन मानवः ।
संसारसागरात्तीर्णो याति लोकं प्रजापतेः ।
ब्रह्महा यदि वा गोघ्नो भ्रूणहा गुरुतल्पगः ।
महापातकयुक्तोऽपि दानेनानेन शुध्यति ।
इदं पठति यः पुण्यं कपिलादानमुत्तमम् । [ 1935 ]
प्रातरुत्थाय मद्भक्त्या तस्य पुण्यफलं शृणु ।
मनसा कर्मणा वाचा मतिपूर्वं युधिष्ठिर ।
पापं रात्रिकृतं हन्यादस्याध्यायस्य पाठकः ।
इदमावर्तमानस्तु श्राद्धे यस्तर्पयेद्द्विजान् ।
तस्याप्यमृतमश्नन्ति पितरोऽत्यन्तहर्षिताः । [ 1940 ]
यश्चेदं शृणुयाद्भक्त्या मद्गतेनान्तरात्मना ।

---

युत- ( for युग- ). M2 -वीर- ( for -वर्ष- ). G3 M4 -कोटीः ( for -कोटिं ). — ( L. 1904 ) M2 यदि ( for यस्य ). — ( L. 1905 ) G1 M3 ( *sup. lin.* ) श्राद्धान्न- ( for शूद्रान्न- ). — Colophon. — *Sub-parvan :* T M2, 4 वैष्णवधर्म. — *Adhy. name :* G1, 2 M3 कपिलाप्रशंसा ; M2 कपिलादानशास्त्रे कपिलाप्रशंसा. — *Adhy. no. :* T1 93 ; T2 M4 102 ; G1, 2 92 ; G3 103 ; M2 9 ; M3 91. — ( L. 1909 ) M2 वाक्यम् ( for पुनर् ). — ( L. 1910 ) T1 G1 यथा ( for यदा ). — ( L. 1911 ) T2 M4 ( *sup. lin.* ) तथा ; G3 M4 तदा ( for कथं ). — ( L. 1912 ) M2 या ( for च ). T2 G3 M4 देव ; M2 नाम ( for चैव ). — ( L. 1913 ) T2 G3 तत्र ; M4 गतिं (sic) ( for कति ). — ( L. 1914 ) G1 M2, 3 तु ; M4 च ( for ताः ). — ( L. 1915 ) M2 [अ]पि ( for च ). — Before line 1917, MSS. ins. भगवानुवाच. — ( L. 1917 ) T तद्वक्तुं च ( for वक्तुमेव ). — ( L. 1918 ) T G3 प्रवक्ष्यामि ( for पवित्रं वै ). T पवित्रं ( for रहस्यं ). G3 M4 गुह्यम् ( for धर्मम् ). — ( L. 1919 ) G3 गोपनीयं सत्यविदा ( for the prior half ). G1, 2 M3 -वादिभिः ( for -वादिनाम् ). — ( L. 1920 ) T M4 यथा ( for यदा ). — ( L. 1921 ) T G M4 दृश्यते. M2 दान- ( for काल- ). G1, 2 M3 तमाहुर्मुनिसत्तमाः ( for the post. half ). — ( L. 1922 ) M2 अंतरिक्षे. — ( L. 1923 ) T2 G3 तत्पुण्यं चापि तादृशं ( for the post. half ). — ( L. 1924 ) T तस्यां ; G3 तानि ; M2-4 धेनु- ( M4 °नो ) ( for धेन्वा ). T1 सवत्सायां ; M3 °त्सं वा ( for °त्साया ). — ( L. 1927 ) T1 G1 M2 सुवर्णाभरणं. G3 सद्गुणां ( for कपिलां ). G3 M2, 4 तु यः ( for तिलैः ). — ( L. 1928 ) T G3 प्रच्छाद्य ( G3 कपिलां ) यदि तां दद्यात् ; M2, 4 तिलैः प्रच्छाद्य तां ( M2 तिलप्रच्छादितां ) दद्यात ( for the prior half ). T वस्त्र- ( for सर्व- ). M2 सर्वरत्नविभूषितां ( for the post. half ). — ( L. 1929 ) G1, 2 M2, 3 नदी ( for मही ). T G3 M2 सशैलद्वीपपत्तना ( G3 °ट्टणा ) ( for the post. half ). — ( L. 1930 ) M2 चतुरंतां. M2 पृथिवीं नात्र संशयः ( for the post. half ). — ( L. 1931 ) M2 माधव (sic) ( for मानवः ). — ( L. 1932 ) T G3 संसारसागरं तीर्त्वा. — ( L. 1933 ) M2 मातृहा ( for भ्रूणहा ). — ( L. 1934 ) T वा ( for ऽपि ). M2 दृश्यति (sic) ( for शुध्यति ). — ( L. 1936 ) M2 भक्तस् ( for भक्त्या ). — ( L. 1937 ) G3 वापि ( for वाचा ). — ( L. 1938 ) G3 पाठतः. T G1 अध्यायस्यास्य ( G1 °स्य तु ) पाठकः. — ( L. 1940 ) T G3 हि ( for [अ]पि ). G1, 2 M3 [ऽ]श्नंति ( for ऽत्यन्त- ). — ( L. 1942 ) M4 पापं सर्वम् ( by transp. ). G3 M2, 4 व्यपोहति ( for प्रणश्यति ). — ( L.

तस्य रात्रिकृतं सर्वं पापमाशु प्रणश्यति ।
अतः परं विशेषं तु कपिलानां ब्रवीमि ते ।
याश्चैताः कपिलाः प्रोक्ता दश राजन्मया तव ।
तासां चतस्रः प्रवराः पवित्राः पापनाशनाः । [ 1945 ]
सुवर्णकपिला पुण्या तथा रक्ताक्षिपिङ्गला ।
पिङ्गलाक्षी च या गौश्च यद्वा पिङ्गलपिङ्गला ।
एताश्चतस्रः प्रवराः पुण्याः पापप्रणाशनाः ।
नमस्कृता वा स्पृष्टा वा घ्नन्ति पापं नरस्य तु ।
यस्यैताः कपिलाः सन्ति गृहे पापप्रणाशनाः । [ 1950 ]
तत्र श्रीर्विजयः कीर्तिः स्थिता नित्यं युधिष्ठिर ।
एतासां प्रीतिमायाति क्षीरेण तु वृषध्वजः ।
दध्ना तु त्रिदशाः सर्वे घृतेन तु हुताशनः ।
पितरः पितामहाश्चैव तथैव प्रपितामहाः ।
सकृद्दत्तेन तुष्यन्ति वर्षकोटिं युधिष्ठिर । [ 1955 ]
कपिलाया घृतं क्षीरं दधि पायसमेव वा ।
श्रोत्रियेभ्यः सकृद्दत्त्वा सर्वपापैः प्रमुच्यते ।
उपवासं तु यत्कृत्वा अहोरात्रं जितेन्द्रियः ।
कपिलापञ्चगव्यं तु पीत्वा चान्द्रायणात्परम् ।
सौम्ये मुहूर्ते तत्प्राश्य शुद्धात्मा शुद्धमानसः । [ 1960 ]
क्रोधानृतविनिर्मुक्तो मद्गतेनान्तरात्मना ।
कपिलापञ्चगव्येन समन्त्रेण पृथक्पृथक् ।
यो मत्प्रतिकृतिं वापि शंकराकृतिमेव वा ।
स्नापयेद्विषुवे यस्तु सोऽश्वमेधफलं लभेत् ।
स मुक्तपापः शुद्धात्मा यानेनाम्बरशोभिना । [ 1965 ]
मम लोकं व्रजेन्मर्त्यो रुद्रलोकमथापि वा ।
ब्रह्मणा तु पुरा सृष्टा कपिला काञ्चनप्रभा ।
अग्निकुण्डात्परैर्मन्त्रैर्होमधेनुर्महाप्रभा ।
सृष्टमात्रां तु तां दृष्ट्वा देवा रुद्रादयो दिवि ।
सिद्धा ब्रह्मर्षयश्चैव वेदाः साङ्गाः सहाध्वराः । [ 1970 ]
सागराः सरितश्चापि पर्वताः सवलाहकाः ।
गन्धर्वाप्सरसो यक्षाः पन्नगाश्चाप्युपस्थिताः ।
सर्वे विस्मयमापन्नाः शिखिमध्ये महाप्रभाम् ।
मन्त्रैश्च विविधैः सर्वैस्तुष्टुवुस्तामनेकशः ।
कृताञ्जलिपुटाः सर्वे ताम्रशृङ्गीं त्रिलोचनाम् । [ 1975 ]
शिरोभिः पतिता भूमौ सवत्साममृतारणिम् ।
ऊचुः प्राञ्जलयः सर्वे चतुर्वक्त्रं पितामहम् ।
आज्ञापय महादेव किं ते कर्म प्रियं विभो ।
एवमुक्तः सुरैः सर्वैर्ब्रह्मा वचनमब्रवीत् ।

---

1943 ) $G_3$ ततः ( for अतः ), and कपिलाया ( for °लानां ). — ( L. 1944 ) $M_4$ पूर्वं ( for राजन् ). — ( L. 1945 ) $G_1$ om. ( hapl. ) from the post. half up to the prior half of line 1948. $G_2$ $M_3$ पुण्याः पापप्रणाशनाः ( for the post. half ). — ( L. 1946 ) $M_2$ रत्नाक्षि- ( for रक्ताक्षि- ). Some MSS. -पिंगळा. — ( L. 1947 ) $T_2$ $G_3$ $M_2$ गौरी ( for गौश्च ). $M_4$ पिंगाक्षी च यथा गौश्च ( for the prior half ). $M_4$ या च ( for यद्वा ). T $G_3$ या चापि मुखपिंगला ( for the post. half ). — ( L. 1948 ) T $G_3$ ताः प्रोक्ताः ( for प्रवराः ). $T_1$ -प्रणाशकाः. $G_2$ $M_3$ पवित्राः पापनाशनाः ( for the post. half ). — ( L. 1949 ) $G_{1.2}$ $M_3$ दृष्टा ( for स्पृष्टा ). $G_3$ नमस्यतां ( for नरस्य तु ). — ( L. 1950 ) T तस्य ; $M_2$ याश्च ( for यस्य ). $T_1$ -प्रणाशकाः ( for °शनाः ). — ( L. 1951 ) $M_4$ तस्य ( for तत्र ). $M_4$ स्थिरा ; Kumbh. ed. स्फीता ( for स्थिता ). — ( L. 1952 ) $G_{1.2}$ देवः सं- ( for एतासां ). $G_3$ प्रियम् ( for प्रीतिम् ). $G_3$ वृषभ- ( for तु वृष- ). — ( L. 1953 ) $G_{1.2}$ $M_{3.4}$ च ( for the first तु ). $G_2$ $M_{2-4}$ च ( for the second तु ). — ( L. 1956 ) $G_2$ $M_{2.4}$ कापिलानां. $M_4$ च ( for वा ). — ( L. 1657 ) $G_1$ $M_{2-4}$ नरः ( for सर्व- ). — ( L. 1958 ) $G_3$ कुर्याद् ( for कृत्वा ). $G_2$ $M_{2.4}$ [अ]प्यहोरात्रं ; $M_3$ ह्यहो° ( for अहो° ). — ( L. 1959 ) $T_2$ च ( for तु ). T $G_3$ पिबेत्त् ( for पीत्वा ). $T_1$ चांद्रायणं चरेत् ; $M_{2.3}$ ( *sup. lin.* ) °णं भवेत् ( for °णात्परम् ). — ( L. 1960 ) T $G_3$ हृष्ट- ( for शुद्ध- ). — ( L. 1963 ) T $G_{1.2}$ प्रीतिकृतं ( for प्रतिकृतिं ). $G_3$ च ( for the first वा ). — ( L. 1964 ) $M_2$ भक्त्या ( for यस्तु ). $T_1$ भवेत् ( for लभेत् ). — ( L. 1965 ) T $G_3$ $M_{2.4}$ पूतात्मा ( for शुद्धात्मा ). — ( L. 1966 ) $G_2$ विशेन् ( for व्रजेन् ). $G_{1.2}$ $M_{3.4}$ मुक्तो ( for मर्त्यो ). — ( L. 1968 ) $T_1$ $G_{1.3}$ $M_4$ होमधेनुं महाप्रभां. — ( L. 1969 ) $M_2$ दिशि ( for दिवि ). — ( L. 1970 ) $G_{1.2}$ $M_3$ सहाध्वरैः. — ( L. 1971 ) $G_2$ $M_{2-4}$ चैव ( for चापि ). — ( L. 1972 ) $G_3$ $M_3$( *sup. lin.* ).$_4$ पर्वताश् ( for पन्नगाश् ). — ( L. 1973 ) $G_1$ महाप्रभाः. — ( L. 1974 ) $G_1$ $M_3$ तां तु ; $G_2$ सर्वास् ( for सर्वैस् ). $M_2$ मंत्रैः स्तोत्रैश्च विविधैस् ( for the prior half ). — ( L. 1975 ) T $G_3$ संतस् ( for सर्वे ). T त्रिशृंगीं तां ; $G_1$ नातिशृंगीं ; $G_2$ $M_2$ तां त्रिशृंगीं ( for ताम्रशृङ्गीं ). — ( L. 1976 ) $M_2$ प्रणता ( for पतिता ). $G_{1.2}$ $M_3$ मूर्ध्ना प्रणम्य तां भूमौ ( for the prior half ). $G_2$ $M_{2-4}$ अमृतारणीं. — After line 1977, $M_2$ ins. :

किमिदं देवदेवेश सर्वलोकपितामह ।

— ( L. 1978 ) $G_{1.2}$ $M_3$ ते कुर्मः ; $M_2$ कुर्मस्ते ( for ते कर्म ). $M_2$ प्रभो ( for विभो ). — ( L. 1980 ) $M_2$ हि

भवन्तोऽप्यनुगृह्णन्तु दोग्ध्रीमेनां पयस्विनीम् । [1980]
होमधेनुरियं ज्ञेया ह्यग्निं संतर्पयिष्यति ।
ततोऽग्निस्तर्पितः सर्वान्भवतस्तर्पयिष्यति ।
प्रीताः क्षीरामृतेनास्या जातवीर्यपराक्रमाः ।
जयिष्यथ यथाकामं दानवान्सर्व एव तु ।
जातवीर्यबलैश्वर्याः सत्त्ववन्तो जितारयः । [1985]
असंख्येयबलाः सर्वे पालयिष्यथ वै प्रजाः ।
पालिताश्च प्रजाः सर्वा भवद्भिरिह धर्मतः ।
पूजयिष्यन्ति वो नित्यं यज्ञैर्विविधदक्षिणैः ।
एवमुक्ताः सुराः सर्वे ब्रह्मणा परमेष्ठिना ।
ततः संहृष्टमनसः कपिलायै वरं ददुः । [1990]
यस्माल्लोकहितायाद्य ब्रह्मणा त्वं विनिर्मिता ।
तस्मात्पूता पवित्रा च भव पापव्यपोहिनी ।
ये त्वां दृष्ट्वा नमस्यन्ति स्पृष्ट्वा चापि करैर्नराः ।
तेषां वर्षकृतं पापं त्वद्भक्तानां प्रणश्यति ।
अकामकृतमज्ञातमदृष्टं यच्च पातकम् । [1995]
त्वां दृष्ट्वा ये नमस्यन्ति नराः सर्वंसहेति च ।
तेषां तद्विलयं याति तमः सूर्योदये यथा ।
इत्युक्त्वास्यै वरं दत्त्वा प्रययुस्ते यथागतम् ।
लोकनिस्तारणार्थाय सा च लोकांश्चचार ह ।
तस्यामेव समुद्भूता ह्येताश्च कपिलानघ । [2000]
विचरन्ति महीमेनां लोकानुग्रहकारणात् ।
तस्मात्तु कपिला देया परत्र हितमिच्छता ।
यथा च दीयते राजन्कपिला ह्यग्निहोत्रिणे ।
तथाग्रशृङ्गयोस्तस्या विष्णुरिन्द्रश्च तिष्ठतः ।
चन्द्रवज्रधरौ चापि तिष्ठतः शृङ्गमूलयोः । [2005]
शृङ्गमध्ये तथा ब्रह्मा ललाटे गोवृषध्वजः ।
कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ ।
दन्तेषु मरुतो देवा जिह्वायां वाक्सरस्वती ।
रोमान्ते मुनयः सर्वे चर्मण्येव प्रजापतिः ।
निश्वासेषु स्थिता वेदाः सषडङ्गपदक्रमाः । [2010]
नासापुटे स्थिता गन्धाः पुष्पाणि सुरभीणि च ।
अधरे वसवः सर्वे मुखे चाग्निः प्रतिष्ठितः ।
साध्या देवाः स्थिताः कक्षे ग्रीवायां पार्वती स्थिता ।
पृष्ठे च नक्षत्रगणाः ककुद्देशे नभःस्थलम् ।
अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम् । [2015]
इष्टपुष्टमयी लक्ष्मीर्गोमये वसते सदा ।
नासिकायां सदा देवी ज्येष्ठा वसति भामिनी ।
श्रोणीतटस्थाः पितरो रमा लाङ्गूलमाश्रिताः ।
पार्श्वयोरुभयोः सर्वे विश्वे देवाः प्रतिष्ठिताः ।

---

(for ऽपि). M4 दोग्ध्रीमेतां यशस्विनीं (for the post. half). — (L. 1981) T G3 जज्ञे; M4 यज्ञे (for ज्ञेया). T1 G1.2 ह्यग्नीन्. — (L. 1982) G1 M3 अतो (for ततो). — (L. 1983) T G2.3 पीताः (for प्रीताः). — (1985) G1.2 M3 -बलैर्युक्ताः (for °श्वर्याः). M4 सत्वंतो. G1.2 M3 जितेंद्रियाः (for जितारयः). — (L. 1986) T G3 M4 अदे(M4 °दै)वमातृकाः सर्वास् (for the prior half). T तर्पयिष्यथ; G3 M4 तार° (for पाल°). — (L. 1987) T इति; G3 M4 इव (for इह). — (L. 1988) T2 G1.2 M2.3 या (for वो). G3 पूजयिष्यति सा नित्यं. — (L. 1990) M2 प्र- (for सं-). G1 M3 कपिलाया. T2 ददौ. — Before line 1991, T1 G1 M ins. देवाः; G2 देवता; G3 देवी. — (L. 1992) T त्वं हि (for पूता). G3 मम (for भव). T2 M2.4 -व्यपोहनी. — (L. 1993) G1 M3 दृष्टा (for दृष्ट्वा). T G3 M2.4 स्पृशंति च (for स्पृष्ट्वा चापि). — (L. 1995) M2 पापकं. — G1 M3 read line 1996 twice. — (L. 1996) G3 तां (for त्वां). G1 M3 (both first time) तु (for ये). G1 M3 (both second time) ये त्वां दृष्टा नमस्यंति (for the prior half). T1 सर्वं- (for सर्वं-). G3 नराः सर्वे स्तुवंति च (for the post. half). — Before line 1998, MSS. ins. श्रीभगवान्. — (L. 1999) G3 M4 लोके (for लोक-). T G1.3 -निस्तरणार्थाय; M3 -निस्तारणार्थं तु. G3 M4 निर्मिता ब्रह्मणा प्रभो (for the post. half). — (L. 2000) G3 एवं. T G3 शेषाश्; M4 ज्येष्ठाश् (for ह्येताश्). G1 नव (for [अ]नघ). — (L. 2002) M2 इच्छतां. — (L. 2003) G1.3 M4 यदा (for यथा). G3 M4 कपिला (for दीयते) G3 M4 दीयते (for कपिला). — (L. 2004) T1 G3 M4 तदा (for तथा). G1.2 M3 च; M4 तु (for [अ]ग्र-). G1 M2.3 तस्य. G1.2 M4 तिष्ठंति. — (L. 2005) T -पाश- (for -वज्र-). M4 वा (for च). G3 चक्रवज्रे च काश्येय (for the prior half). — (L. 2006) T वृषभ- (for गोवृष-). — (L. 2007) T G1.2 M3 अश्विनी-. G2 M2.3 चक्षुषी-. — (L. 2008) M2 तु; M4 च (for वाक्-). — (L. 2009) G1.2 M3 रोमकूपेषु मुनयश् (for the prior half). — (L. 2010) T1 षडंगपदविक्रमाः. — (L. 2013) T1 G1.3 M4 कक्ष्ये; G2 कुक्षौ (for कक्षे). — (L. 2014) T M3 (*sup. lin.*) 4 नभस्थितं; M2.3 यमः स्थितः (for नभःस्थलम्). — M2 om. lines 2016-2017. — (L. 2016) T अष्टैश्वर्यमयी लक्ष्मीर् (for the prior half). G1.3 वसती (sic). G1 तदा (for सदा). — (L. 2018) T2 G1.2 M3 रामा; G3 रोम-; M4 उमा (for रमा). — (L.

तस्य रात्रिकृतं सर्वं पापमाशु प्रणश्यति ।
अतः परं विशेषं तु कपिलानां ब्रवीमि ते ।
याश्चैताः कपिलाः प्रोक्ता दश राजन्मया तव ।
तासां चतस्रः प्रवराः पवित्राः पापनाशनाः । [ 1945 ]
सुवर्णकपिला पुण्या तथा रक्ताक्षिपिङ्गला ।
पिङ्गलाक्षी च या गौश्च यद्वा पिङ्गलपिङ्गला ।
एताश्चतस्रः प्रवराः पुण्याः पापप्रणाशनाः ।
नमस्कृता वा स्पृष्टा वा घ्नन्ति पापं नरस्य तु ।
यस्यैताः कपिलाः सन्ति गृहे पापप्रणाशनाः । [ 1950 ]
तत्र श्रीर्विजयः कीर्तिः स्थिता नित्यं युधिष्ठिर ।
एतासां प्रीतिमायाति क्षीरेण तु वृषध्वजः ।
दध्ना तु त्रिदशाः सर्वे घृतेन तु हुताशनः ।
पितरः पितामहाश्चैव तथैव प्रपितामहाः ।
सकृद्दत्तेन तुष्यन्ति वर्षकोटिं युधिष्ठिर । [ 1955 ]
कपिलाया घृतं क्षीरं दधि पायसमेव वा ।
श्रोत्रियेभ्यः सकृद्दत्त्वा सर्वपापैः प्रमुच्यते ।
उपवासं तु यत्कृत्वा अहोरात्रं जितेन्द्रियः ।
कपिलापञ्चगव्यं तु पीत्वा चान्द्रायणात्परम् ।
सौम्ये मुहूर्ते तत्प्राश्य शुद्धात्मा शुद्धमानसः । [ 1960 ]
क्रोधानृतविनिर्मुक्तो मद्गतेनान्तरात्मना ।
कपिलापञ्चगव्येन समन्त्रेण पृथक्पृथक् ।
यो मत्प्रतिकृतिं वापि शंकराकृतिमेव वा ।
स्नापयेद्विपुवे यस्तु सोऽश्वमेधफलं लभेत् ।
स मुक्तपापः शुद्धात्मा यानेनाम्बरशोभिना । [ 1965 ]
मम लोकं व्रजेन्मर्त्यो रुद्रलोकमथापि वा ।
ब्रह्मणा तु पुरा सृष्टा कपिला काञ्चनप्रभा ।
अग्निकुण्डात्परैर्मन्त्रैर्होमधेनुर्महाप्रभा ।
सृष्टमात्रां तु तां दृष्ट्वा देवा रुद्रादयो दिवि ।
सिद्धा ब्रह्मर्षयश्चैव वेदाः साङ्गाः सहाध्वराः । [ 1970 ]
सागराः सरितश्चापि पर्वताः सवलाहकाः ।
गन्धर्वाप्सरसो यक्षाः पन्नगाश्चाप्युपस्थिताः ।
सर्वे विस्मयमापन्नाः शिखिमध्ये महाप्रभाम् ।
मन्त्रैश्च विविधैः सर्वैस्तुष्टुवुस्तामनेकशः ।
कृताञ्जलिपुटाः सर्वे ताम्रशृङ्गीं त्रिलोचनाम् । [ 1975 ]
शिरोभिः पतिता भूमौ सवत्साममृतारणिम् ।
ऊचुः प्राञ्जलयः सर्वे चतुर्वक्त्रं पितामहम् ।
आज्ञापय महादेव किं ते कर्म प्रियं विभो ।
एवमुक्तः सुरैः सर्वैर्ब्रह्मा वचनमब्रवीत् ।

1943 ) G3 ततः ( for अतः ), and कपिलाया ( for °लानां ). — ( L. 1944 ) M1 पूर्वं ( for राजन् ). — ( L. 1945 ) G1 om. ( hapl. ) from the post. half up to the prior half of line 1948. G2 M3 पुण्याः पापप्रणाशनाः ( for the post. half ). — ( L. 1946 ) M2 रत्नाक्षि- ( for रक्ताक्षि- ). Some MSS. -पिंगळा. — ( L. 1947 ) T2 G3 M2 गौरी ( for गौश्च ). M1 पिंगाक्षी च यथा गौश्च ( for the prior half ). M1 या च ( for यद्वा ). T G3 या चापि मुखपिंगला ( for the post. half ). — ( L. 1948 ) T G3 ताः प्रोक्ताः ( for प्रवराः ). T1 -प्रणाशकाः. G2 M3 पवित्राः पापनाशनाः ( for the post. half ). — ( L. 1949 ) G1.2 M3 दृष्टा ( for स्पृष्टा ). G3 नमस्ततां ( for नरस्य तु ). — ( L. 1950 ) T तस्य; M2 याश्च ( for यस्य ). T1 -प्रणाशकाः ( for °शनाः ). — ( L. 1951 ) M1 तस्य ( for तत्र ). M1 स्थिरा; Kumbh. ed. स्फीता ( for स्थिता ). — ( L. 1952 ) G1.2 देवः सं- ( for एतासां ). G3 प्रियम् ( for प्रीतिम् ). G3 वृषभ- ( for तु वृष- ). — ( L. 1953 ) G1.2 M3.4 च ( for the first तु ). G2 M2-4 च ( for the second तु ). — ( L. 1956 ) G2 M2.4 कापिलानां. M1 च ( for वा ). — ( L. 1657 ) G1 M2-4 नरः ( for सर्व- ). — ( L. 1958 ) G3 कुर्याद् ( for कृत्वा ). G2 M2.4 [अ]प्यहोरात्रं; M3 ह्यहो° ( for अहो° ). — ( L. 1959 ) T2 च ( for तु ). T G3 पिवेच्च् ( for पीत्वा ). T1 चांद्रायणं चरेत्; M2.3 ( *sup. lin.* ) °णं भवेत् ( for °णात्परम् ). — ( L. 1960 ) T G3 हृष्ट- ( for शुद्ध- ). — ( L. 1963 ) T G1.2 प्रीतिकृतं ( for प्रतिकृतिं ). G3 च ( for the first वा ). — ( L. 1964 ) M2 भक्त्या ( for यस्तु ). T1 भवेत् ( for लभेत् ). — ( L. 1965 ) T G3 M2.4 पूतात्मा ( for शुद्धात्मा ). — ( L. 1966 ) G2 विशेन् ( for व्रजेन् ). G1.2 M3.4 मुक्तो ( for मर्त्यो ). — ( L. 1968 ) T1 G1.3 M4 होमधेनुं महाप्रभां. — ( L. 1969 ) M2 दिशि ( for दिवि ). — ( L. 1970 ) G1.2 M3 सहाध्वरैः. — ( L. 1971 ) G2 M2-4 चैव ( for चापि ). — ( L. 1972 ) G3 M3 ( *sup. lin.* ).4 पर्वताश् ( for पन्नगाश् ). — ( L. 1973 ) G1 महाप्रभाः. — ( L. 1974 ) G1 M3 तां तु; G2 सर्वास् ( for सर्वैस् ). M2 मंत्रैः स्तोत्रैश्च विविधैस् ( for the prior half ). — ( L. 1975 ) T G3 संतस् ( for सर्वे ). T त्रिशृंगीं तां; G1 भातिशृंगीं; G2 M2 तां त्रिशृंगीं ( for ताम्रशृङ्गीं ). — ( L. 1976 ) M2 प्रणता ( for पतिता ). G1.2 M3 मूर्ध्ना प्रणम्य तां भूमौ ( for the prior half ). G2 M2-4 अमृतारणीं. — After line 1977, M2 ins. :

किमिदं देवदेवेश सर्वलोकपितामह ।

— ( L. 1978 ) G1.2 M3 ते कुर्मः; M2 कुर्मस्ते ( for ते कर्म ); M2 प्रभो ( for विभो ). — ( L. 1980 ) M2 हि

भवन्तोऽप्यनुगृह्णन्तु दोग्ध्रीमेनां पयस्विनीम् । [ 1980 ]
होमधेनुरियं ज्ञेया ह्यग्निं संतर्पयिष्यति ।
ततोऽग्निस्तर्पितः सर्वान्भवतस्तर्पयिष्यति ।
प्रीताः क्षीरामृतेनास्या जातवीर्यपराक्रमाः ।
जयिष्यथ यथाकामं दानवान्सर्व एव तु ।
जातवीर्यबलैश्वर्याः सत्त्ववन्तो जितारयः । [ 1985 ]
असंख्येयबलाः सर्वे पालयिष्यथ वै प्रजाः ।
पालिताश्च प्रजाः सर्वा भवद्भिरिह धर्मतः ।
पूजयिष्यन्ति वो नित्यं यज्ञैर्विविधदक्षिणैः ।
एवमुक्ताः सुराः सर्वे ब्रह्मणा परमेष्ठिना ।
ततः संहृष्टमनसः कपिलायै वरं ददुः । [ 1990 ]
यस्माल्लोकहितायाद्य ब्रह्मणा त्वं विनिर्मिता ।
तस्मात्पूता पवित्रा च भव पापव्यपोहिनी ।
ये त्वां दृष्ट्वा नमस्यन्ति स्पृष्ट्वा चापि करैर्नराः ।
तेषां वर्षकृतं पापं त्वद्भक्तानां प्रणश्यति ।
अकामकृतमज्ञातमदृष्टं यच्च पातकम् । [ 1995 ]
त्वां दृष्ट्वा ये नमस्यन्ति नराः सर्वसहेति च ।
तेषां तद्विलयं याति तमः सूर्योदये यथा ।
इत्युक्त्वास्यै वरं दत्त्वा प्रययुस्ते यथागतम् ।
लोकनिस्तारणार्थाय सा च लोकांश्चचार ह ।
तस्यामेव समुद्भूता ह्येताश्च कपिलानघ । [ 2000 ]
विचरन्ति महीमेनां लोकानुग्रहकारणात् ।
तस्मात्तु कपिला देया परत्र हितमिच्छता ।
यथा च दीयते राजन्कपिला ह्यग्निहोत्रिणे ।
तथाग्रशृङ्गयोस्तस्या विष्णुरिन्द्रश्च तिष्ठतः ।
चन्द्रवज्रधरौ चापि तिष्ठतः शृङ्गमूलयोः । [ 2005 ]
शृङ्गमध्ये तथा ब्रह्मा ललाटे गोवृषध्वजः ।
कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ ।
दन्तेषु मरुतो देवा जिह्वायां वाक्सरस्वती ।
रोमान्ते मुनयः सर्वे चर्मण्येव प्रजापतिः ।
निश्वासेषु स्थिता वेदाः सषडङ्गपदक्रमाः । [ 2010 ]
नासापुटे स्थिता गन्धाः पुष्पाणि सुरभीणि च ।
अधरे वसवः सर्वे मुखे चाग्निः प्रतिष्ठितः ।
साध्या देवाः स्थिताः कक्षे ग्रीवायां पार्वती स्थिता ।
पृष्ठे च नक्षत्रगणाः ककुद्देशे नभःस्थलम् ।
अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम् । [ 2015 ]
इष्टतुष्टमयी लक्ष्मीर्गोमये वसते सदा ।
नासिकायां तदा देवी ज्येष्ठा वसति भामिनी ।
श्रोणीतटस्थाः पितरो रमा लाङ्गूलमाश्रिता ।
पार्श्वयोरुभयोः सर्वे विश्वे देवाः प्रतिष्ठिताः ।

(for ऽपि). $M_4$ दोग्ध्रीमेतां यशस्विनीं (for the post. half). — (L. 1981) T $G_3$ जज्ञे; $M_4$ यज्ञे (for ज्ञेया). $T_1$ $G_{1,2}$ ह्यग्नीन्. — (L. 1982) $G_1$ $M_3$ अतो (for ततो). —(L. 1983) T $G_{2,3}$ पीताः (for प्रीताः). —(1985) $G_{1,2}$ $M_3$ -बलैर्युक्ताः (for °श्वर्याः). $M_4$ सत्यवंतो. $G_{1,2}$ $M_3$ जितेंद्रियाः (for जितारयः). — (L. 1986) T $G_3$ $M_4$ अदे( $M_4$ °दै )वमातृकाः सर्वास् (for the prior half). T तर्पयिष्यथ; $G_3$ $M_4$ तार° (for पाल°). — (L. 1987) T इति; $G_3$ $M_4$ इव (for इह). — (L. 1988) $T_2$ $G_{1,2}$ $M_{2,3}$ या (for वो). $G_3$ पूजयिष्यति सा नित्यं. — (L. 1990) $M_2$ प्र- (for सं-). $G_1$ $M_3$ कपिलाया. $T_2$ ददौ. — Before line 1991, $T_1$ $G_1$ M ins. देवाः; $G_2$ देवता; $G_3$ देवी. —(L. 1992) T त्वं हि (for पूता). $G_3$ मम (for भव). $T_2$ $M_{2,4}$ -व्यपोहनी. — (L. 1993) $G_1$ $M_3$ तुष्टा (for दृष्ट्वा). T $G_3$ $M_{2,4}$ स्पृशंति च (for स्पृष्ट्वा चापि). — (L. 1995) $M_2$ पापकं. — $G_1$ $M_3$ read line 1996 twice. — (L. 1996) $G_3$ तां (for त्वां). $G_1$ $M_3$ (both first time) तु (for ये). $G_1$ $M_3$ (both second time) ये त्वां तुष्टां नमस्यंति (for the prior half). $T_1$ सर्वे- (for सर्व-). $G_3$ नराः सर्वे स्तुवंति च (for the post. half). — Before line 1999, MSS. ins. श्रीभगवान्. — (L. 1999) $G_3$ $M_4$ लोके (for लोक-). T $G_{1,3}$ -निस्तरणार्थाय; $M_2$ -निस्तारणार्थं तु. $G_3$ $M_4$ निर्मिता ब्रह्मणा प्रभो (for the post. half). — (L. 2000) $G_3$ एवं. T $G_3$ शेषाश्; $M_4$ ज्येष्ठाश् (for ह्येताश्). $G_1$ नव (for [अ]नघ). — (L. 2002) $M_2$ इच्छतां. — (L. 2003) $G_{1,3}$ $M_4$ यदा (for यथा). $G_3$ $M_4$ कपिला (for दीयते). $G_3$ $M_4$ दीयते (for कपिला). — (L. 2004) $T_1$ $G_3$ $M_4$ तदा (for तथा). $G_{1,2}$ $M_3$ च; $M_4$ तु (for [अ]ग्र-). $G_1$ $M_{2,3}$ तस्य. $G_{1,2}$ $M_4$ तिष्ठति. — (L. 2005) T -पाश- (for -वज्र-). $M_4$ वा (for च). $G_3$ चक्रवज्रे च काशेय (for the prior half). — (L. 2006) T वृषभ- (for गोवृष-). — (L. 2007 T $G_{1,2}$ $M_3$ अश्विनी-. $G_2$ $M_{2,3}$ चक्षुषी-. —(L. 2008) $M_2$ तु; $M_4$ च (for वाक्-). —(L. 2009) $G_{1,2}$ $M_3$ रोमकूपेषु मुनयश् (for the prior half). — (L. 2010) $T_1$ षडंगपदविक्रमाः. — (L. 2013) $T_1$ $G_{1,3}$ $M_4$ कक्ष्ये; $G_2$ कुक्षौ (for कक्षे). — (L. 2014) T $M_3$ (*sup. lin.*), $_4$ नभस्थितं; $M_{2,3}$ यमः स्थितः (for नभःस्थलम्). — $M_2$ om. lines 2016–2017. — (L. 2016) T अष्टैश्वर्यमयी लक्ष्मीर् (for the prior half). $G_{1,3}$ वसती (sic). $G_1$ तदा (for सदा). — (L. 2018) $T_2$ $G_{1,2}$ $M_3$ रामा; $G_3$ रोम-; $M_4$ उमा (for रमा). — (L.

तिष्ठत्युरसि तासां तु प्रीतः शक्तिधरो गुहः । [ 2020 ]
जानुजङ्घोरुदेशेषु पञ्च तिष्ठन्ति वायवः ।
खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः ।
चत्वारः सागराः पूर्णास्तस्या एव पयोधराः ।
रतिर्मेधा क्षमा स्वाहा श्रद्धा शान्तिर्धृतिः स्मृतिः ।
कीर्तिर्दीप्तिः क्रिया कान्तिस्तुष्टिः पुष्टिश्च संततिः ।[2025]
दिशश्च विदिशश्चैव सेवन्ते कपिलां सदा ।
देवाः पितृगणाश्चापि गन्धर्वाप्सरसां गणाः ।
लोका द्वीपार्णवाश्चैव गङ्गाद्याः सरितस्तथा ।
ग्रहाः पितृगणाश्चापि वेदाः साङ्गाः सहाध्वरैः ।
वेदोक्तैर्विविधैर्मन्त्रैः स्तुवन्ति हृषितास्तथा । [ 2030 ]
विद्याधराश्च ये सिद्धा भूतास्तारागणास्तथा ।
पुष्पवृष्टिं च वर्षन्ति प्रनृत्यन्ति च हर्षिताः ।
ब्रह्मणोत्पादिता देवी वह्निकुण्डान्महाप्रभा ।
नमस्ते कपिले पुण्ये सर्वदेवैर्नमस्कृते ।
कपिलेऽथ महासत्त्वे सर्वतीर्थमये शुभे । [ 2035 ]
दातारं स्वजनोपेतं ब्रह्मलोकं नय स्वयम् ।
अहो रत्नमिदं पुण्यं सर्वदुःखघ्नमुत्तमम् ।
अहो धर्मार्जितं शुद्धमिदमग्र्यं महाधनम् ।
इत्याकाशे स्थिता देवा जल्पन्ति च नमन्ति च ।
तस्याः प्रतिगृहीता च भुङ्क्ते यावद्द्विजोत्तमः । [ 2040 ]
तावद्देवगणाः सर्वे कपिलामर्चयन्ति च ।
स्वर्णशृङ्गी रौप्यखुरा गन्धैः पुष्पैश्च पूजिता ।
वस्त्राभ्यामहताभ्यां तु यावत्तिष्ठत्यलंकृता ।
तावद्यदिच्छेत्कपिला मन्त्रपूता सुसंस्कृता ।
भूलोकवासिनः सर्वान्ब्रह्मलोकं नयेत्स्वयम् । [ 2045 ]
भूरश्वः कनकं गावो रौप्यमन्नं तिला यवाः ।
दीयमानानि विप्राय प्रहृष्यन्ति दिने दिने ।
अथ त्वश्रोत्रियेभ्यो वै तानि दत्तानि पाण्डव ।
तथा निन्दन्त्यथात्मानमशुभं किं नु नः कृतम् ।
*अहो रक्षःपिशाचैश्च लुप्यमानाः समन्ततः ।* [ 2050 ]
यास्यामो निरयं शीघ्रमिति शोचन्ति तानि वै ।
एतान्यपि द्विजेभ्यो वै श्रोत्रियेभ्यो विशेषतः ।
दीयमानानि वर्धन्ते दातारं तारयन्ति च ।

युधिष्ठिर उवाच ।

देवदेवेश दैत्यघ्न कालः को हव्यकव्ययोः ।
के तत्र पूजामर्हन्ति वर्जनीयाश्च के द्विजाः । [ 2055 ]

---

2019 ) T समाश्रिताः ( for प्रतिष्ठिताः ). — ( L. 2020 ) G2 M2 तस्यास् ( for तासां ). G2 शितः ( for प्रीतः ). G3 [ऽ]नघ ; M4 गुरुः ( for गुहः ). — ( L. 2023 ) G3 तस्याम्. — ( L. 2024 ) T2 धृतिर् ( for रतिर् ). M2 स्वधा ( for क्षमा ). T धृतिर्मतिः ; G3 M2 स्मृतिर्धृतिः ( by transp. ). — ( L. 2025 ) T1 श्रिया ( for क्रिया ). G3 M4 शांतिस् ( for कान्तिस् ). G2 M3 पुष्टिस्तुष्टिश् ( by transp. ). T समुन्नतिः ( for च संततिः ). — ( L. 2026 ) G1, 2 M3 प्र- ( for वि- ). — G3 M2 read line 2027 twice. — ( L. 2027 ) T G3 ( first time ) चैव ( for चापि ). M4 गणैः. T1 सेवंते कपिलां सदा ( for the post. half ). — ( L. 2028 ) M2 लोक- ( for लोका ) and चापि ( for चैव ). T1 om. the post. half and the prior half of line 2029. T2 गंधर्वाः ( for गङ्गाद्याः ). — ( L. 2029 ) T2 देवाः ( for ग्रहाः ). T2 G2, 3 चैव ( for चापि ). M4 ( *inf. lin.* ) देवाः ( for वेदाः ). G2 M3 तथा ( for सह ). — ( L. 2030 ) M4 धर्मैः ( for मन्त्रैः ). T G1 सदा ( for तथा ). M2 स्तुवंतो हर्षितास्तथा. — ( L. 2031 ) T येपि स्वर्लोकवासिनः ( for the post. half ). — ( L. 2032 ) M2 प्रमुंचंति ( for च वर्षन्ति ). — ( L. 2033 ) M4 देवि. M2 ब्राह्मणोत्पादिते देवि. T2 G3 M2, 4 -प्रभे ; Madras ed. -प्रभो ( for -प्रभा ). — ( L. 2034 ) T G3 देवि ( for पुण्ये ). T G3 M2 -देव- ( for -देवैर् ). — ( L. 2035 ) M2 त्वं ( for ऽथ ). — ( L. 2036 ) T नयस्व मां ; G2 नयस्व तां ( sic ) ( for नय स्वयम् ). — Before line 2039, T ins. भगवान्. — ( L. 2039 ) G1 M2, 3 इत्याकाश- ; M4 शुद्धाकाशे. G1, 2 M2, 3 ते तु ( for देवा ). G1, 2 M3 स( G2 पू )र्वदेवा जपंति च ( for the post. half ). — ( L. 2040 ) T M3 द्विजोत्तमाः. — ( L. 2041 ) G3 M4 ये ; M2 वै ( for च ). — ( L. 2042 ) M2 सुवर्णशृंगी ( hypermetric ) ( for स्वर्ण° ). G1 M2, 3 रूप्यखुरा. M3 पूजितां. T G1, 3 गंधपुष्पैरलंकृता ( for the post. half ). — ( L. 2043 ) G3 M4 अहिताभ्यां ( sic ) ( for अह° ). — ( L. 2044 ) T ईप्सेत् ( for इच्छेत् ). G3 M4 स्वलंकृता ( for सुसंस्कृता ). — ( L. 2045 ) M2 ब्रह्मलोके. G M2, 3 नय ( for नयेत् ). — ( L. 2046 ) G3 रूप्यं ; M4 रूपम् ( for रौप्यम् ). G3 रूपं ( for अन्नं ). — ( L. 2048 ) T वा ( for तु ). M2 corrupt ; M4 अथ त्वश्रोत्रिये यस्तु ( for the prior half ). M4 दद्यादानानि पांडव. — ( L. 2049 ) G3 अशुभात् ( for °भं ). — ( L. 2050 ) G2 अथो ( for अहो ). — ( L. 2051 ) M2 विलयं ( for निरयं ). — ( L. 2052 ) T एतान्यथ ; M2 तथैतानि ( for एतान्यपि ). — ( L. 2053 ) T G3 M4 हृष्यंति ( G3 M4 °ते ) ( for वर्धन्ते ). — ( L. 2054 ) G2 भव्य- ( sic ) ( for हव्य- ). ( L. 2056 ) G1 देवाः ( for दैवं ). T1 पूर्वाह्निकं ( for

भगवानुवाच ।
दैवं पूर्वाह्णिकं ज्ञेयं पैतृकं चापराह्णिकम् ।
कालहीनं च यद्दानं तद्दानं राक्षसं विदुः ।
अवघुष्टं च यद्भुक्तमनृतेन च भारत ।
परामृष्टं शुना वापि तद्भागं राक्षसं विदुः ।
यावन्तः पतिता विप्रा जडोन्मत्तादयोऽपि च । [2060]
दैवे च पित्र्ये ये चापि राजन्नार्हन्ति सत्क्रियाम् ।
क्लीबः प्लीही च कुष्ठी च राजयक्ष्मान्वितश्च यः ।
अपस्मारी च यश्चापि पित्र्ये नार्हति सत्क्रियाम् ।
चिकित्सका देवलका वृथा नियमधारिणः ।
सोमविक्रयिणश्चापि श्राद्धे नार्हन्ति सत्कृतिम् । [2065]
एकोद्दिष्टस्य ये चान्नं भुञ्जते विधिवद्द्विजाः ।
चान्द्रायणमकृत्वा ते पुनर्नार्हन्ति सत्कृतिम् ।
गायका नर्तकाश्चैव प्लवका वादकास्तथा ।
कथका यौधिकाश्चैव श्राद्धे नार्हन्ति सत्कृतिम् ।
अनग्नयश्च ये विप्राः प्रेतनिर्यातकाश्च ये । [2070]
स्तेनाश्चापि विकर्मस्था राजन्नार्हन्ति सत्कृतिम् ।
अपरिज्ञातपूर्वाश्च गणपुत्राश्च ये द्विजाः ।
पुत्रिकापुत्रकाश्चापि श्राद्धे नार्हन्ति सत्कृतिम् ।
ऋणकर्ता च यो विप्रो यश्च वाणिज्यको द्विजः ।
प्राणिविक्रयवृत्तिश्च श्राद्धे नार्हन्ति सत्कृतिम् । [2075]
चीर्णव्रता गुणैर्युक्ता नित्यं स्वाध्यायतत्पराः ।
सावित्रीज्ञाः क्रियावन्तस्ते श्राद्धे सत्कृतिक्षमाः ।
श्राद्धस्य ब्राह्मणः कालः प्राप्तो दधि घृतं तदा ।
दर्भाः सुमनसः क्षेत्रं तत्काले श्राद्धदो भवेत् ।
चारित्रनियता राजन्कृशा ये कृशवृत्तयः । [2080]
अर्थिनश्चोपगच्छन्ति तेभ्यो दत्तं महत्फलम् ।
तपस्विनश्च ये विप्रास्तथा भैक्षचराश्च ये ।
अर्थिनः केचिदिच्छन्ति तेषां दत्तं महत्फलम् ।
एवं धर्मविदां श्रेष्ठ ज्ञात्वा सर्वात्मना तदा ।
श्रोत्रियाय दरिद्राय प्रयच्छानुपकारिणे । [2085]
दानं यत्ते प्रियं किंचिच्छ्रोत्रियाणां च यत्प्रियम् ।

---

पूर्वाह्णिकं ). M2 कर्म ( for ज्ञेयं ). — ( L. 2057 ) T1 om. च. M4 राजसं ( for राक्षसं ). — ( L. 2058 ) T G2 अपघुष्टं; Madras ed. अवदृष्टं. G2 भक्तम् ( for भुक्तम् ). M2 अन्नतेन ( for अनृ° ). — ( L. 2059 ) G3 M4 चापि; M2 लीढं ( for वापि ). G1, 2 M2, 3 दानं ( for भागं ). — ( L. 2060 ) M4 अदांताः ( for यावन्तः ). M2 यावंत्तपमिता विप्रा ( for the prior half ). — ( L. 2061 ) M2 वा; M4 तु ( for the first च ). T1 G1, 3 पितृिये ( for पित्र्ये ये ). M3, 4 om. ये. G2 ये राजन्; M2 ये वापि; Madras ed. ते विप्रा ( for ये चापि ). T2 दैवे च पितृकार्ये च ( for the prior half ). G2 हीना ( for राजन् ). M2 सत्कृतिं ( for सत्क्रियाम् ). — After line 2061, M2 ins. :

खादितश्चावलीढश्च कलिपूर्वं च यत्कृतम् ।
रजसा वाभिमृष्टं च तद्दानं राक्षसं विदुः ।

— G3 om. ( hapl. ) lines 2062–2063. — ( L. 2062 ) M4 ( *inf. lin.* as above ) यश्चापि ( for कुष्ठी च ). T2 तथा ( for च यः ). — ( L. 2063 ) T2 ये ( for यश्च ). M3 ( *inf. lin.* as above ), 8 [ अं ]पः ( for [ अ ]पि ). M4 राजन् ( for पित्र्ये ). G1, 2 M4 नार्हति. G1 M2, 3 सत्कृतिं. — ( L. 2064 ) M2 चिकित्सको देवलको. G1 M3 मिथ्या ( for वृथा ). T -कारिणः ( for -धारिणः ). M4 वृथा ये नामधारिणः. — ( L. 2065 ) T सत्क्रियां. — G2 om. line 2066; T1 reads the same after line 2069. — ( L. 2066 ) T1 एकोदिष्टं च; G3 M4 °ष्टे च ( for °ष्टस्य ). M4 तु ( for च ). M3 भुंजंते. M4 विधिवर्जिताः ( for °द्विजाः ). — T G2 om. line 2067. — ( L. 2068 ) M4 ये च ( for चैव ). G1 M3 गायको नर्तकश्चैव. M2 प्लाविका; M3 प्लवगा. — G3 om. ( hapl. ) lines 2069–2073. — ( L. 2069 ) G2 क्रयिका ( for कथका ). T2 G2 M4 यौधकाश्च. T सत्क्रियां ( for सत्कृतिम् ). — G2 om. line 2070. — ( L. 2070 ) T2 G1 M3 नत-; M3 मृत- ( for प्रेत- ). M4 व्रतनिर्घातकाश्च ये. — M4 om. ( hapl. ) lines 2072–2075. — ( L. 2072 ) T1 G1 ऋण- ( for गण- ). M2 and Madras ed. गण( M2 °णि )-पुत्रश्च यो द्विजः. — ( L. 2073 ) T M2 ( *sup. lin.* ) -पुत्रकश्च ( for °काश्च ). M2 पुत्रिकापूर्वपुत्राश्च ( for the prior half ). Madras ed. सत्क्रियां. — M2 om. ( hapl. ) lines 2074–2075. — ( L. 2074 ) Kumbh. ed. and Madras ed. रणकर्ता ( for ऋण° ). — ( L. 2075 ) T -विक्रयकृच्चैव ( for °वृत्तिश्च ). — ( L. 2076 ) T1 G2 चीर्णव्रत-. M2, 4 नित्य-. — ( L. 2077 ) M3 श्राद्धे सत्कृतिकाः क्षमाः ( for the post. half ). — ( L. 2078 ) Madras ed. काल- ( for कालः ). G1 श्राद्धस्य ब्राह्मणाः कालाः. T1 M2, 3 प्राप्तं. — ( L. 2079 ) G1 om. श्राद्धदो. — ( L. 2080 ) T2 चारित्रे. G1, 2 M3 -निरता; G3 -नियतो. — ( L. 2082 ) M2, 4 युक्ताश्च ( for विप्रास् ). G1 -परायणाः; G2 M3 -पराश्च ये ( for -चरा° ). — ( L. 2083 ) M2 किंचिद् ( for के° ). M2 महा- ( for महद् ). — ( L. 2084 ) Kumbh. ed. -भृतां ( for -विदां ). T1 श्रेष्ठान्; G2 श्रेष्ठं. T G3 M4 सदा ( for तदा ). — ( L. 2085 ) G3 प्रयत्नानुपकारिणे. — ( L. 2086 ) T G2 श्रोत्रियाय ( for °याणां ). G3 M4 फलं ( for

तत्प्रयच्छस्व धर्मज्ञ यदिच्छसि तदक्षयम् ।
निरयं ये च गच्छन्ति तच्छृणुष्व युधिष्ठिर ।
गुर्वर्थं वा भयार्थं वा नो चेदन्यत्र पाण्डव ।
वदन्ति येऽनृतं विप्रास्ते वै निरयगामिनः । [ 2090 ]
परदाराभिहर्तारः परदाराभिमर्शकाः ।
परदारप्रयोक्तारस्ते वै निरयगामिनः ।
सूचकाः संधिभेत्तारः परद्रव्योपजीविनः ।
अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ।
वर्णाश्रमाणां ये बाह्याः पाषण्डस्थाश्च पाण्डव । [2095]
उपासते च तान्ये तु ते सर्वे नरकालयाः ।
वेदविक्रयिणश्चैव वेदानां चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ।
रसविक्रयिणो राजन्विषविक्रयिणश्च ये ।
क्षीरविक्रयिणश्चापि ते वै निरयगामिनः । [ 2100 ]
चण्डालेभ्यस्तु ये क्षीरं प्रयच्छन्ति नराधमाः ।
अर्थार्थमथ वा स्नेहात्ते वै निरयगामिनः ।
पशूनां दमकाश्चैव तथा नासानुवेधकाः ।
पुंस्त्वस्य हिंसकाश्चैव ते वै निरयगामिनः ।
अदातारः समर्था ये द्रव्याणां लोभकारणात् । [ 2105 ]
दीनानाथान्न पश्यन्ति ते वै निरयगामिनः ।
क्षान्तान्दान्तान्कृशान्प्राज्ञान्दीर्घकालं सहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ।
बालानामथ वृद्धानां श्रान्तानां चापि ये नराः ।
अदत्त्वाश्नन्ति ये मृष्टं ते वै निरयगामिनः । [ 2110 ]
एते पूर्वर्षिभिः प्रोक्ता नरा निरयगामिनः ।
ये स्वर्गं समनुप्राप्तास्तान्शृणुष्व युधिष्ठिर ।
दानेन तपसा चैव सत्येन च दमेन च ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ।
शुश्रूषयाप्युपाध्यायाच्छ्रुतमादाय पाण्डव । [ 2115 ]
ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगामिनः ।
मधुमांसासवेभ्यस्तु निवृत्ता व्रतवत्तु ये ।
परदारनिवृत्ताश्च ते नराः स्वर्गगामिनः ।
मातरं पितरं चैव शुश्रूषन्ति च ये नराः ।
भ्रातृणामपि सस्नेहास्ते नराः स्वर्गगामिनः । [ 2120 ]

---

प्रियम् ). — ( L. 2087 ) T1 M4 यदि ( for यद् ). T G3 M4 महत्फलं ( for तदक्षयम् ). — ( L. 2088 ) T तु ( for च ) and तान् ( for तत् ). — ( L. 2089 ) T1 G3 M4 corrupt; T2 तवार्थे ( for भयार्थं ). M4 न ( for नो ). — ( L. 2090 ) G3 उपासते च तान्ये तु ( for the prior half ). — ( L. 2091 ) G3 M4 परदारापहर्तारः ( for the prior half ). — After line 2091, M2 ins. :

अनाथामप्रदां बालां वृद्धां क्षीणां तपस्विनीम् ।
वञ्चयन्ति नरा ये च ते वै निरयगामिनः ।

— ( L. 2094 ) G3 M4 विप्राणां; M2 विप्रा वै ( for मित्राणां ). — M2 om. lines 2095–2096. — ( L. 2095 ) G1.2 M3 पाषंडाश्चैव पापिनः ( for the post. half ). — ( L. 2096 ) T उपासितांश् ( for °सते ). G1 M3 एव ( for ये तु ). G2 छिन्नं ( for सर्वे ). T G3 ते वै निरयगामिनः ( for the post. half ). — ( L. 2097 ) M4 चापि ( for the second चैव ). — ( L. 2098 ) T1 लेखिताश्; T2 G3 लेखिनश् ( for लेखकाश् ). G3 चापि ( for चैव ). M4 वेदावलेपिनश्चापि ( for the prior half ). M2 सर्वे ( for ते वै ). — M2 om. ( hapl. ) lines 2099–2104. — ( L. 2099 ) G3 मेष- ( for विष- ). — ( L. 2103 ) M4 नाम्यनु- ( for नासानु- ). — ( L. 2104 ) G1.2 M3 पुंस्त्वहिंस( Kumbh. ed. and Madras ed. °सा )काश्चैव ( for the prior half ). — ( L. 2105 ) M2 आदातारः ( for अ° ) and द्रव्याढ्यं ( for °णां ). — ( L. 2106 ) M4 दीनानंधान् ( for °नाथान् ). — After line 2106, M2 ins. :

ब्राह्मणानां गवां चैव कन्यानां च युधिष्ठिर ।
येऽन्तरं यान्ति कार्येषु ते वै निरयगामिनः ।
उपाध्यायांश्च भृत्यांश्च भ्रातॄंश्च भरतर्षभ ।
ये त्यजन्ति सभार्यांश्च ते वै निरयगामिनः ।

— ( L. 2107 ) M4 दांतान्क्षांतान् ( by transp. ). T1 om. कृशान्. Madras ed. -काल- ( for -कालं ). — ( L. 2108 ) T वै ( for ये ). — ( L. 2109 ) M4 चैव; Madras ed. अपि ( for अथ ). M2 चैव ( for चापि ). — ( L. 2110 ) G2 damaged. G1 M3 मृष्टान्नं; M2 ते लोके ( for ये मृष्टं ). — M4 om. ( hapl. ) lines 2111–2116. — ( L. 2111 ) G1 ये पूर्वमृषिभिः प्रोक्ता; G2 ** च ऋषिभिः प्रोक्ता ( for the prior half ). G2 om. नरा. — ( L. 2112 ) T उपभुंजंति; G3 * समासाद्य; M2.3 तु नरा यांति ( for समनुप्राप्तास् ). — ( L. 2115 ) G2 damaged. T G3 शुश्रूषाभिरुपाध्यायात्; M2.3 शुश्रूषुरप्यु° ( for the prior half ). — After line 2116, M2 ins. :

प्रतिपादा[पन्नः] स दाता च श्रद्धयाश्रद्धयापि वा ।
दातारश्चापि विद्यानां ते नराः स्वर्गगामिनः ।
क्षमावन्तश्च धीराश्च धर्मकार्येषु प्रार्थिताः ।
मङ्गलाचारयुक्ताश्च ते नराः स्वर्गगामिनः ।

— ( L. 2117 ) T1 वृत्तपूर्वया; T2 वृत्तपूर्तये; G3 वृत्तवंतये; M4 व्रतिनश्च ये ( for व्रतवत्तु ये ). — ( L. 2118 ) G1 M3 ये ( for च ). — ( L. 2121 ) T1 M2.4 -कालेषु

ये तु भोजनकाले तु नियताश्चातिथिप्रियाः ।
द्वाररोधं न कुर्वन्ति ते नराः स्वर्गगामिनः ।
वैवाहिकं तु कन्यानां दरिद्राणां च ये नराः ।
कारयन्ति च कुर्वन्ति ते नराः स्वर्गगामिनः ।
रसानामथ बीजानामोषधीनां तथैव च । [ 2125 ]
दातारः श्रद्धयोपेतास्ते नराः स्वर्गगामिनः ।
क्षेमाक्षेमं च मार्गेषु समानि विषमाणि च ।
अर्थिनां ये च वक्ष्यन्ति ते नराः स्वर्गगामिनः ।
पर्वद्वये चतुर्दश्यामष्टम्यां संध्ययोर्द्वयोः ।
आर्द्रायां जन्मनक्षत्रे विषुवे श्रवणे तथा । [ 2130 ]
ये ग्राम्यधर्मविरतास्ते नराः स्वर्गगामिनः ।
हव्यकव्यविधानं च नरकस्वर्गगामिनौ ।
धर्माधर्मौ च कथितौ भूयः किं श्रोतुमिच्छसि ।

Colophon.

युधिष्ठिर उवाच ।

इदं मे तत्त्वतो देव वक्तुमर्हस्यशेषतः ।
हिंसामकृत्वा यो मर्त्यो ब्रह्महत्यामवाप्नुयात् । [ 2135 ]

भगवानुवाच ।

ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिनम् ।
ब्रूयान्नास्तीति यः पश्चात्तमाहुर्ब्रह्मघातकम् ।
मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धिस्तमाहुर्ब्रह्मघातकम् ।
गोकुलस्य तृषार्तस्य जलान्ते वसुधाधिप । [ 2140 ]
उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम् ।
यः प्रवृत्तां श्रुतिं सत्यां शास्त्रं वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञो यस्तं विद्याद्ब्रह्मघातकम् ।
आश्रमे वा वने वापि ग्रामे वा नगरेऽपि वा ।
अग्निं यः प्रक्षिपेत्क्रुद्धस्तमाहुर्ब्रह्मघातकम् । [ 2145 ]
चक्षुषा वापि हीनस्य पङ्गोर्वापि जडस्य च ।
हरेद्वै यस्तु सर्वस्वं तं विद्याद्ब्रह्मघातकम् ।
क्रोधाद्वा यदि वा द्वेषादाक्रुष्टस्तर्जितोऽपि वा ।
ऋतौ स्त्रियं वा नोपेयात्तमाहुर्ब्रह्मघातकम् ।

---

( for -काले तु ). Madras ed. निर्याताश्. — ( L. 2123 ) G3 M2.4 तु ( for च ). — After line 2124, M2 ins. :

> तापसानां तु ये दाने ये स्वशक्त्या नरेश्वर ।
> धर्मोपदेशं कुर्वन्ति ते नराः स्वर्गगामिनः ।
> दानानामुपदेशं च तपसो नियमस्य च ।
> व्रतानामपि ये कुर्युस्ते नराः स्वर्गगामिनः ।
> ये च मार्गोपदेष्टारस्तथा संक्रमकारिणः । [ 5 ]
> मार्गशुद्धिकरा ये च ते नराः स्वर्गगामिनः ।
> सायं प्रातः सदा संध्यां नित्यं ये चाप्युपासते ।

— M2 om. (hapl.) lines 2125–2131. — ( L. 2127 ) G1.2 M3 क्षोभं क्षे( G2 °भक्षे )मं ( for क्षेमाक्षेमं ). — G3 om. ( ? hapl. ) lines 2128–2131. — ( L. 2128 ) M3 अंधानां ये; M4 येनिथिनां ( for अर्थिनां ये ). — M4 om. lines 2129–2132. — ( L. 2130 ) Madras ed. [ऽ]थ वा ( for तथा ). — ( L. 2131 ) T G1 -निरताम् ( for -वि° ). — ( L. 2132 ) G3 -निदानं ( for -विधानं ). G2.3 -गामिनः ( for °नौ ). — ( L. 2133 ) G1.2 M2.3 श्रोतुं किम् ( by transp. ). — Colophon. — *Sub-parvan :* T2 G2 M2.4 वैष्णवधर्म. — *Adhy. name :* M2 सर्वधर्मविधिः. — *Adhy. no. :* T1 94; T2 M4 103; G1.2 93; G3 104; M2 10; M3 92. — ( L. 2136 ) T1 आगम्य ( for आहूय ). G3 दीक्षार्थं; M2 भिक्षुकं ( for भिक्षार्थे ). G1.2 M3 भिक्षार्थे वृत्तिकर्षितं ( for the post. half ). — ( L. 2137 ) M2 विद्याद् ( for आहुर् ). — ( L. 2138 ) T1 G2 दरिद्रस्य ( for मध्यस्थस्य ). — ( L. 2139 ) M2 विद्याद् ( for आहुर् ). — After line 2139, G1.2 M3 read lines 2144–2145. — ( L. 2140 ) T G3 जलार्थमभिधावतः ( for the post. half ). — ( L. 2141 ) T विघ्नं करोति यो मर्त्यस् ( for the prior half ). M2 विद्याद् ( for आहुर् ). — M4 om. (hapl.) lines 2142–2145. — ( L. 2142 ) G2 damaged. G1 M3 प्रवृत्ता वा श्रुतिः सम्यक्; M2 यः प्रवृत्तं श्रुतं सम्यक्. T1 तां ( for वा ). — ( L. 2143 ) T [अ]विधेयोज्ञस्; Madras ed. [अ]नभिज्ञाय ( for °ज्ञो यस् ). M2 दूषयेत्परमार्थं वा ( for the prior half ). T G3 आहुर् ( for विद्याद् ). — M2 transp. lines 2144 and 2145. — ( L. 2144 ) G2 च ( for वा ). G1.2 M3 [आ]लये ( for वने ). M2 ग्रामेषु ( for ग्रामे वा ). — ( L. 2145 ) M2 विद्याद् ( for आहुर् ). — ( L. 2146 ) M2 विप्र- ( for वापि ). T G3 मत्तस्य च; G1.2 पंकोर्वापि; M3 संकुलस्य; M4 मूकस्य च ( for पङ्गोर्वापि ). Some MSS. जळस्य. M2 वा ( for च ). — ( L. 2147 ) T आहुर् ( for विद्याद् ). — After line 2147, G1.2 M3 ins. :

> गुरुं त्वंकृत्य हुंकृत्य अतिक्रम्य च शासनम् ।
> वर्तते यस्तु मूढात्मा तमाहुर्ब्रह्मघातकम् ।

— ( L. 2148 ) M2 आक्रुष्टं ( for °ष्टस् ). — After line 2148, M2 ins. :

54

यावत्सारो भवेद्धीरस्तन्नाशे यस्य दुःस्थितिः । [ 2150 ]
तत्सर्वस्वं हरेद्यो वै तमाहुर्ब्रह्मघातकम् ।

युधिष्ठिर उवाच ।

सर्वेषामपि दानानां यत्तु दानं विशिष्यते ।
अभोज्यान्नाश्च ये विप्रास्तान्ब्रवीहि सुरोत्तम ।

भगवानुवाच ।

अन्नमेव प्रशंसन्ति देवा ब्रह्मपुरःसराः ।
अन्नेन सदृशं दानं न भूतं न भविष्यति । [ 2155 ]
अन्नमूर्जस्करं लोके अन्नात्प्राणाः प्रतिष्ठिताः ।
अभोज्यान्नानिमान्राजन्वक्ष्यमाणान्निबोध मे ।
दीक्षितस्य कदर्यस्य बद्धस्य निकृतस्य च ।
अभिशस्तस्य षण्डस्य पाकभेदकरस्य च ।
चिकित्सकस्य सर्वस्य तथा चोच्छिष्टभोजिनः । [ 2160 ]
उग्रान्नं सूतकान्नं च शूद्रोच्छेषणमेव च ।
द्विषदन्नं न भोक्तव्यं पतितान्नं च यच्छ्रुतम् ।
तथा च पिशुनस्यान्नं यज्ञविक्रयिणस्तथा ।
शैलूषतन्तुवायान्नं कृतघ्नस्यान्नमेव च ।
अम्बष्ठस्य निषादस्य रङ्गावतरकस्य च । [ 2165 ]
सुवर्णकर्तुर्वेणस्य शस्त्रविक्रयिणस्तथा ।
सूतानां शौण्डिकानां च वैद्यस्य रजकस्य च ।
स्त्रीजितस्य नृशंसस्य तथा माहिषिकस्य च ।
अनिर्दशानां प्रेतानां गणिकानां तथैव च ।
वन्दिनो द्यूतकर्तुश्च तथा द्यूतविदामपि । [ 2170 ]
परिवित्तस्य यच्चान्नं परिवेत्तुस्तथैव च ।
यश्चाग्रदिधिषुर्विप्रो दिधिषूपपतिस्तथा ।
तयोरप्युभयोरन्नं राज्ञश्चापि विवर्जयेत् ।
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः । [ 2175 ]
गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति ।
आयुश्चिकित्सकस्यान्नं शुक्लं तु वृषलीपतेः ।
विष्ठा वार्धुषिकस्यान्नं तस्मात्तत्परिवर्जयेत् ।
तेषां त्वगस्थिरोमाणि भुङ्क्ते योऽन्नं तु भक्षयेत् ।
अमात्यान्नमथैतेषां भुक्त्वा तु त्रियहं क्षिपेत् । [ 2180 ]

---

मातरं पितरं वापि तथादत्तभयं सुतम् ।
त्यजेच्च तरुणीं भार्यां तं विद्याद्ब्रह्मघातकम् ।

— ( L. 2149 ) $M_2$ च ( for वा ). $G_1$ $M_{2-4}$ विद्याद् ( for आहुर् ). — $G_3$ $M_2$ om. ( hapl. ) lines 2150–2151. — ( L. 2150 ) $M_3$ विश्नं ( sic ); $M_4$ दीनस् ( for धीरस् ). $M_3$ नाशयेद् ( for तन्नाशे ). $M_4$ दुःस्थितः. — ( L. 2151 ) $M_{3.4}$ विद्याद् ( for आहुर् ). — ( L. 2152 ) $G_3$ $M_{2.4}$ एव ( for अपि ). — ( L. 2153 ) $M_2$ अभोज्यान्नं च विप्राणां ( for the prior half ). $M_2$ तन्मे ब्रूहि ( for तान्ब्रवीहि ). $G_3$ नरोत्तम ( for सुरो° ). — ( L. 2154 ) $G_3$ देवा ब्रह्मर्षयः सुराः ( for the post. half ). — ( L. 2156 ) Kumbh. ed. and Madras ed. ह्यन्नात् $M_3$ ( *sup. lin.* as above ) अन्नं. — ( L. 2157 ) $G_{1.2}$ $M_3$ मया ( for इमान् ). $M_2$ सर्वान् ( for राजन् ). $G_1$ $M_3$ निबोधत. — ( L. 2158 ) $G_{1.2}$ $M_2$ ( also as above ). $_3$ क्रुद्धस्य ( for ब° ). T $G_3$ $M_4$ निगळेन तु ( for निकृतस्य च ). $M_2$ तु ( for च ). — ( L. 2159 ) $G_{1.2}$ $M_3$ अभिशप्तस्य ( for °शस्तस्य ). $G_2$ दंडस्य ( for षण्डस्य ). $M_2$ -भेदतरस्य ( for °करस्य ). $G_1$ तु ( for च ). — ( L. 2160 ) $G_2$ damaged. $G_1$ $M_{3.4}$ दूतस्य ( for सर्वस्य ). — $G_3$ om. from the post. half of line 2161 up to the prior half of line 2166. $G_1$ om. ( hapl. ) lines 2162–2164. — ( L. 2162 ) T नटस्यान्नं; $M_2$ न गर्ह्यान्नं ( for न भोक्तव्यं ). $T_2$ om. च. $T_1$ यदश्रुतं; $M_{2.3}$ अनर्चितं ( for च यच्छ्रुतम् ). — $M_2$ om. ( hapl. ) lines 2164–2166. — ( L. 2165 ) $G_1$ $M_3$ अंबष्ठकनिषादाभ्यां ( for the prior half ); T रंगावतरणस्य च ( for the post. half ). — ( L. 2166 ) T $G_3$ शास्त्र- ( for शस्त्र- ). — ( L. 2167 ) $G_{1.2}$ $M_3$ शौंडकानां. T $G_3$ $M_4$ चेलनिर्णेजकस्य च; $M_2$ वेलनिन्नयकस्य च ( for the post. half ). — ( L. 2169 ) $G_3$ अनिर्दिशानां. $M_2$ अनिर्दशान्नं प्रेतान्नं ( for the prior half ). $M_2$ गणिकान्नं. — ( L. 2170 ) $G_3$ वंदिनां. T वंदिनां दू( $T_2$ द्य )तकर्तॄणां ( for the prior half ). — ( L. 2171 ) $G_2$ $M_4$ -वित्तेश्च ( for -वित्तस्य ). — ( L. 2172 ) T $M_3$ [अ]ग्रे ( for [अ]ग्र- ). — ( L. 2173 ) $M_2$ अन्न ( for अन्नं ). $G_1$ $M_3$ राज्ञां; $M_2$ अन्नं ( for राज्ञश् ). — After line 2173, $M_{2.3}$ ins. :

गोळकस्य च कुण्डस्य राजान्नं चापि वर्जयेत् ।

— ( L. 2175 ) $M_2$ तेजश् ( for यशश् ). $M_2$ om. from र्मावकृन्तिनः up to लोकेभ्यः in line 2176. — ( L. 2176 ) $G_3$ गणिकानां. $G_{1.2}$ $M_3$ -कीर्तितं ( for -कृन्तति ). — ( L. 2177 ) $G_2$ पूयं; $G_3$ $M_2$ पूयश्; $M_4$ मूत्रं ( for आयुश् ). $G_1$ च; $M_2$ तं; $M_3$ तत् ( for तु ). — ( L. 2178 ) $G_2$ damaged T विधा ( for विष्ठा ). $M_2$ विष्ठां वार्ध्युशिकायान्नं ( for the prior half ). T तान्; $G_3$ तु ( for तत् ). $M_2$ पातयेत्कुंडगोळयोः ( for the post. half ). — ( L. 2179 ) $T_1$ येषां ( for तेषां ). — ( L. 2180 ) $M_2$ तथा ( for अथ ). $G_3$ अमर्त्यान्नं च वै

मत्या भुक्त्वा सकृद्वापि प्राजापत्यं चरेद्द्विजः ।
दानानां च फलं यद्वै शृणु पाण्डव तत्त्वतः ।
जलदस्तृप्तिमाप्नोति सुखमक्षयमन्नदः ।
तिलदस्तु प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ।
भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः । [ 2185 ]
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ।
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।
अनडुहः श्रियं जुष्टां गोदश्च ब्रध्नविष्टपम् ।
यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसाम्यताम् । [2190]
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
हिरण्यभूगवाश्वाजवस्त्रशय्यासनादिषु ।
योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव च ।
तावुभौ गच्छतः स्वर्गं नरकं च विपर्यये ।
अनृतं न वदेदिष्ट्वा तपस्तप्त्वा न विस्मयेत् । [ 2195 ]
नार्तोऽप्यपवदेद्विप्रान्न दत्त्वा परिकीर्तयेत् ।
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानं तु परिकीर्तनात् ।
एकः प्रजायते जन्तुरेक एव प्रमीयते ।
एकोऽनुभुङ्क्ते सुकृतमेकश्चाप्नोति दुष्कृतम् । [ 2200 ]
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुवर्तते ।
अनागतानि कार्याणि कर्तुं गणयते मनः ।
शरीरकं समुद्दिश्य स्मयते नूनमन्तकः ।
तस्माद्धर्मसहायोऽस्तु धर्मं संचिनुयात्सदा । [ 2205 ]
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ।
येषां तटाकानि बहूदकानि
सभाश्च कूपाश्च प्रतिश्रयाश्च ।
अन्नप्रदानं मधुरा च वाणी
यमस्य ते निर्विषया भवन्ति । [ 2210 ]

Colophon.

युधिष्ठिर उवाच ।

अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किंलक्षणोऽसौ भवति तन्मे ब्रूहि जनार्दन ।

भगवानुवाच ।

शृणु राजन्समासेन धर्मशौचविधिक्रमम् ।
अहिंसा सत्यमस्तेयमानृशंस्यं दमः शमः ।

---

तेषां; $M_4$ अमात्यान्नमतस्तेषां ( for the prior half ). T $M_4$ ऽयहं ( submetric ) ( for त्रियहं ). $M_3$ क्षपेत्. $G_2$ भुक्त्वा तूपवसेऽयहं; $M_2$ भुक्त्वा तुद्यमहं क्षिपेत्; $M_4$ ( *inf. lin.* ) भुक्त्वा तु ऽयक्षरं जपेत् ( for the post. half ). —(L. 2181) $G_1$ भक्त्या; $G_3$ $M_3$ मर्त्यो; $M_2$ भुक्त्वा ( for मत्या ). $G_3$ च ( for वा ). — ( L. 2182 ) $M_2$ चान्यत् ( for यद्वै ). $G_3$ -नंदन ( for तत्त्वतः ). —(L. 2183) $M_2$ वारिदस् ( for जलदस् ). T G अक्षय्यम्. — After line 2183, $T_1$ reads lines 2188-2189; $T_1$ om. lines 2185-2186. — ( L. 2185 ) $M_3$ भूतिम् ( for भूमिम् ). — After line 2185, $T_2$ $G_3$ read lines 2190-2191. — ( L. 2186 ) Some MSS. ग्रहदो ( for गृ° ). —(L. 2187) $M_2$ अर्क- ( for अश्वि- ). $T_1$ अश्वदः सूर्यलोकगः ( for the post. half ). — ( L. 2188 ) Madras ed. श्रयं ( for श्रियं ). $G_{1,2}$ $M_3$ गोदो गोलोकमश्नुते; $G_3$ गोप्रदश्च त्रिविष्टपं; $M_2$ गोदो ब्रध्नस्य विष्टपं ( for the post. half ). — $T_1$ om. line 2190-2191. — ( L. 2190 ) $G_{1,2}$ -सौम्यतां ( for -साम्यताम् ). — ( L. 2191 ) $G_3$ $M_{2,4}$ तु प्र- ( for एव ). — ( L. 2192 ) $M_4$ -शय्यासनादिव. — ( L. 2193 ) $G_{1,3}$ $M_4$ [ऽ]र्चितः. T $M_4$ वा ( for च ). — ( L. 2194 ) $G_3$ उभौ तु ( for तावुभौ ). $G_3$ $M_{2,4}$ तु ( for च ). — ( L. 2195 ) $G_1$ विद्वांस् ( for इष्ट्वा ). — ( L. 2196 ) $G_2$ $M_3$ [अ]भिभवेद् ( for [अ]पवदेद् ). $M_3$ विप्रं ( for विप्रान् ), — ( L. 2197 ) $M_2$ क्षितवस् ( for the first क्षरति ). — ( L. 2199 ) $M_2$ प्रसूयते ( for प्रजा° ). T $M_2$ प्रलीयते ( for प्रमी° ). — ( L. 2200 ) T $G_3$ हि ( for ऽनु- ). $M_4$ एव च ( for चाप्नोति ). — ( L. 2202 ) Madras ed. -गच्छति ( for -वर्तते ). — ( L. 2203 ) T $G_3$ $M_2$ जनः; $M_4$ नरः ( for मनः ). — ( L. 2204 ) T समुद्वीक्ष्य; $M_4$ परं वीक्ष्य ( for समुद्दिश्य ). $G_3$ शरीरकंपमुद्वीक्ष्य; $M_2$ साशिरःकंपमुद्वीक्ष्य ( for the prior half ). — ( L. 2205 ) $M_4$ धर्मः ( for धर्म- ). $G_2$ $M_3$ तु; $M_4$ [ऽ]स्ति ( for ऽस्तु ). $G_2$ धर्मान् ( for धर्मं ). T धर्मसंचयवान्सदा ( for the post. half ). — ( L. 2207 ) $M_2$ सभाः प्रपाश्च ( for बहूदकानि ). — ( L. 2208 ) $M_2$ कूपाश्च यूपाश्च ( for सभाश्च कूपाश्च ). $G_{1,2}$ शुभाः प्रपा- ( $G_1$ °भा ग्रहा )श्च; $M_4$ शुभाः प्रतिश्रयाः ( for प्रतिश्रयाश्च ). —(L. 2210) $M_4$ निर्वचना ( for निर्विषया ). — Colophon. — *Sub-parvan :* T G $M_4$ वैष्णवधर्म. — *Adhy. name :* $M_2$ भोज्याभोज्यविधिः. — *Adhy. no.* : $T_1$ 95; $T_2$ $G_{1,2}$ 94; $G_3$ 105; $M_2$ 11; $M_3$ 93; $M_4$ 104. — ( L. 2211 ) $M_2$ अनेकं तं बहुविधं. — ( L. 2212 ) $M_4$ तं ( for तन् ). $M_2$ सुरेश्वर ( for जनार्दन ). — ( L. 2215 ) $M_2$ नियतं ( for निश्चितं ). $G_1$ $M_3$ निर्मलस्य च लक्षणं ( for the post. half ). — ( L. 2216 ) T G

आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् । [ 2215 ]
ब्रह्मचर्यं तपः क्षान्तिर्मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितिश्चैव शमः शौचस्य लक्षणम् ।
बाल्ये विद्यां निषेवेत यौवने दारसंग्रहम् ।
वार्धक्ये मौनमातिष्ठेत्सर्वदा धर्ममाचरेत् ।
ब्राह्मणान्नावमन्येत गुरून्परिवदेन्न च । [ 2220 ]
यतीनामनुकूलः स्यादेष धर्मः सनातनः ।
यतिर्गुरुर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेव गुरुः स्त्रीणां सर्वेषां पार्थिवो गुरुः ।
यद्गृहस्थार्जितं पापं ज्ञानतोऽज्ञानतोऽपि वा ।
निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः । [ 2225 ]
दुर्वृत्ता वा सुवृत्ता वा ज्ञानिनोऽज्ञानिनोऽपि वा ।
गृहस्थैर्यतयः पूज्याः परत्र हितकाङ्क्षिभिः ।
एकदण्डी त्रिदण्डी वा शिखण्डी मुण्डितोऽपि वा ।
काषायदण्डधारोऽपि यतिः पूज्यो युधिष्ठिर ।
अपूजितो गृहस्थैर्वा तथा चाप्यवमानितः । [ 2230 ]
यतिर्वाप्यतिथिर्वापि नरके पातयिष्यतः ।
तस्मात्तु यत्नतः पूज्या मद्भक्ता मत्परायणाः ।
मयि संन्यस्तकर्माणः परत्र हितकाङ्क्षिभिः ।
प्रहरेन्न द्विजान्प्राज्ञो गां न हन्यात्कदाचन ।
भ्रूणहत्यासमं चैतदुभयं यो निषेवते । [ 2235 ]
नाग्निं मुखेनोपधमेन्न च पादौ प्रतापयेत् ।
नाधः कुर्यात्कदाचित्तु न पृष्ठं परितापयेत्।
नान्तरागमनं कुर्यान्न चामेध्यं विनिक्षिपेत् ।
उच्छिष्टो न स्पृशेदग्निमाशौचस्थो न जातुचित् ।
श्वचण्डालादिभिः स्पृष्टो नाङ्गमग्नौ प्रतापयेत् । [ 2240 ]
सर्वदेवमयो वह्निस्तस्माच्छुद्धः सदा स्पृशेत् ।
प्राप्तमूत्रपुरीषस्तु न स्पृशेद्वह्निमात्मवान् ।
यावत्तु धारयेद्वेगं तावदप्रयतो भवेत् ।
पचनाग्निं न गृह्णीयात्परवेश्मनि जातुचित् ।
तेन पक्केन चान्नेन यत्कर्म कुरुते शुभम् । [ 2245 ]
तच्छुभस्य फलस्यार्धमग्निदस्य भवेन्नृप ।
तस्माच्छुभतरं कर्म प्रकुर्यादविनाशितम् ।
प्रमादाद्यदि वाज्ञानात्तस्य नाशो भविष्यति ।
गृह्णीयात्तु मथित्वा वा श्रोत्रियागारतोऽपि वा ।

युधिष्ठिर उवाच ।

कीदृशाः साधवो विप्राः केभ्यो दत्तं महत्फलम् । [2250]
कीदृशेभ्यो हि दातव्यं तन्मे ब्रूहि जनार्दन ।

भगवानुवाच ।

अक्रोधनाः सत्यपरा धर्मनित्या जितेन्द्रियाः ।

---

मांसवि- ( for -मांसस्य ). —( L. 2217 ) T G1. 3 स्थितश्. T1 सदा; G1. 2 M2. 3 शमं ( for शमः ). — ( L. 2218 ) M2 -संग्रहः ( for °हम् ). —(L. 2219) G3 M4 वार्धके; M2 स्थाविर्ये ( for वार्धक्ये ). M2 मोक्षम् ( for मौनम् ). T1 G1. 3 सर्वथा ( for °दा ). — ( L. 2220 ) M2 सः ( for च ). —T1 om. (hapl.) line 2223. —(L. 2223) M1 ब्राह्मणो ( for पार्थिवो ). —(L. 2225) G3 द्विजः ( for यतिः ). —( L. 2226 ) G3 दुर्वृत्तं वा सुवृत्तं वा. — After the prior half of line 2227, T reads the post. half of line 2232 and the prior half of line 2233. G1 om. line 2228. —( L. 2228 ) Kumbh. ed. शिखी वा; Madras ed. शिखितो ( for शिखण्डी ). M2 शिखी मुंडी तथैव च ( for the post. half ). — ( L. 2229 ) T1 -मात्रधारो; T2 -मात्रदंडो; G3 -दंडमात्रो; M2. 4 -मात्रसारो ( for -दण्डधारो ). G1. 2 न संशयः ( for युधिष्ठिर ). —( L. 2231 ) G1. 2 पातयिष्यति. —(L. 2232) Madras ed. यतयः ( for यत्नतः ). —(L. 2234 ) G1. 2 M3 विप्रो ( for प्राज्ञो ). —( L. 2235 ) G2 M3 चैव; M2. 3 (*inf. lin.*) पापम् ( for चैतद् ). — ( L 2236 ) M2 [अ]ग्निर् (sic) ( for [अ]ग्निं ). — ( L 2237 ) M2 न च पृष्ठं प्रतापयेत् ( for the post. half ).
— M2 om. (hapl.) lines 2238–2240. —( L. 2241 ) M4 सर्ववेदमयो ह्यग्निस् ( for the prior half ). G3 तदा ( for सदा ). M2. 3 तस्माच्छुद्धकरः स्पृशेत्. —( L. 2242 ) T न स्पृशेद्वह्निगो द्विजान् ( for the post. half ). — T2 om. line 2243. —( L. 2243 ) M2 वारयेद् ( for धार° ). G3 M4 अग्निं ( for वेगं ). G3 M4 तावत्तु प्रयतो भवेत् ( for the post. half ). —( L. 2244 ) M4 पचनाग्नीन्. —( L. 2245 ) G1. 2 M3 तस्मिन् ( for तेन ). —( L. 2246 ) M2–4 फलं च ( for फलस्य ). G2 तत्कर्मणः शुभस्यार्धम् ( for the prior half ). —( L. 2247 ) T2 G3 शुभकरं. G1. 2 M2. 3 तस्माद्गृह( M2 °च्चूली )गतं वह्निं ( for the prior half ). M2 अविनाशनं. —(L. 2248 ) G3 भुंजानस् ( for वाज्ञानात् ). —( L. 2249 ) M4 प्रगृह्णात् ( sic ) ( for गृह्णीयात् ). M2 तं ( for तु ). —( L. 2250 ) M3 तेभ्यो. G1. 2 M3 महा- ( for महत् ). —( L. 2251 ) T G3 कीदृग्भ्यो हि प्रदातव्यं ( for the prior half ). —( L. 2252 ) G2 M2 दमे रताः ( for जितेन्द्रियाः ). —( L. 2253 ) G1 M2 महा- ( for महत् ). —( L. 2254 ) G3 अमानिताः ( for °नः ). M2 अदृष्टार्था ( for दृष्टार्था वि- ). — After line 2254, T1 reads lines 2258–2259. —(L. 2255 ) G1 महा- ( for महत् ). — G2

तादृशाः साधवो विप्रास्तेभ्यो दत्तं महत्फलम् ।
अमानिनः सर्वसहा दृष्टार्था विजितेन्द्रियाः ।
सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महत्फलम् । [ 2255 ]
अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः ।
स्वधर्मनिरता ये तु तेभ्यो दत्तं महत्फलम् ।
साङ्गांश्च चतुरो वेदान्योऽधीयीत दिने दिने ।
शूद्रान्नं यस्य देहे न तत्पात्रमृषयो विदुः ।
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः । [ 2260 ]
तारयेत्तत्कुलं सर्वमेकोऽपीह युधिष्ठिर ।
गामश्वमन्नं वित्तं वा तद्विधे प्रतिपादयेत् ।
निशम्य च गुणोपेतं ब्राह्मणं साधुसंमतम् ।
दूरादाहृत्य सत्कृत्य तं प्रयत्नेन पूजयेत् ।

युधिष्ठिर उवाच ।

धर्माधर्मविधिर्देव मम भीष्मेण भाषितः । [ 2265 ]
भीष्मवाक्यात्सारभूतं वद धर्मं सुरेश्वर ।

भगवानुवाच ।

अन्नेन धार्यते सर्वं जगदेतच्चराचरम् ।
अन्नात्प्रभवति प्राणः प्रत्यक्षं नास्ति संशयः ।
कलत्रं पीडयित्वापि देशे काले च शक्तितः ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता । [ 2270 ]
विप्रमध्वपरिश्रान्तं बालं वृद्धमथापि वा ।
अर्चयेद्गुरुवत्प्रीतो गृहस्थो गृहमागतम् ।
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अर्चयेदतिथिं प्रीतः परत्र हितभूतये ।
अतिथिं नावमन्येत नानृतां गिरमीरयेत् । [ 2275 ]
न पृच्छेद्गोत्रचरणं नाधीतं वा कदाचन ।
चण्डालो वा श्वपाको वा काले यः कश्चिदागतः ।
अन्नेन पूजनीयः स परत्र हितमिच्छता ।
पिधाय तु गृहद्वारं भुङ्क्ते ह्येकः प्रहृष्टवत् ।
स्वर्गद्वारपिधानं वै कृतं तेन युधिष्ठिर । [ 2280 ]
पितॄन्देवानृषीन्विप्रानतिथींश्च निराश्रयान् ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ।
कृत्वापि पापं बहुशो यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण सर्वपापैः प्रमुच्यते ।
अन्नदः प्राणदो लोके प्राणदः सर्वदो भवेत् । [ 2285 ]
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ।
अन्नं ह्यमृतमित्याहुरन्नं प्रजननं स्मृतम् ।
अन्नप्रणाशे सीदन्ति शरीरे पञ्च धातवः ।
बलं बलवतो नश्येदन्नहीनस्य देहिनः ।
तस्मादन्नं प्रदातव्यं श्रद्धयाश्रद्धयापि वा । [ 2290 ]
आदत्ते हि रसं सर्वमादित्यः स्वगभस्तिभिः ।
वायुस्तस्मात्समादाय रसं मेघेषु धारयेत् ।
तत्तु मेघगतं भूमौ शक्रो वर्षति तादृशम् ।

$M_1$ om. (hapl.) lines 2256–2257. —(L. 2257) T $M_3$ च (for तु). $G_1$ महा- (for महत्). —(L. 2258) $M_3$ तु (for च). Kumbh. ed. and Madras ed. [ऽ]धीयेत (for °यीत). —(L. 2259) $G_2$ $M_{2,3}$ नो देहे (for देहे न). T $G_1$ $M_2$ तं (for तत्). —(L. 2260) T $G_3$ transp. वृत्तेन and शीलेन. $G_3$ समचेतनः; $M_2$ च दमेन च (for च समन्वितः). —(L. 2261) $M_2$ च (for तत्). $G_{1,2}$ स; $M_{2,3}$ हि (for [इ]ह). —(L. 2262) T अन्नमश्वं (by transp.). $T_2$ $G_{2,3}$ तद्विदे (sic). —(L. 2263) $G_{1,2}$ $M_{2,3}$ तु (for च). $M_2$ गुणोपेतो. $G_1$ $M_2$ साधु( $M_2$ °र )संमितं. —(L. 2264) $M_{2-4}$ आहूय (for आहृत्य). —(L. 2265) $M_4$ सर्वधर्म- (for धर्मा°). $G_1$ त्वेवं; $M_{2,3}$ कृत्स्नो (for देव). $G_{1,2}$ भीमं (for मम). $G_{1,2}$ $M_{2,3}$ भाषितं. —(L. 2267) $M_4$ अनेन (for अन्नेन). —(L. 2268) $M_{2-4}$ अन्नाद्भवंति हि प्राणाः (for the prior half). $M_4$ [अ]त्र (for [अ]स्ति). —(L. 2269) $G_1$ $M_{2,3}$ तु; $G_2$ यो (for [अ]पि). $G_{1,3}$ $M_{2,3}$ देश- (for देशे). $G_3$ [ऽ]पि; $M_2$ तु (for च). —(L. 2271) T $G_{1,3}$ विप्रमध्यपरिश्रांतं. $M_1$ दृढम् (for वृद्धम्). —(L. 2273) $G_3$ सुशीती (sic) (for °लो). —(L. 2274) T $G_1$ विप्रः (for प्रीतः). $M_{2,3}$ [इ]ह च (for हित-). $M_4$ परत्र हितमिच्छता. —(L. 2275) T शुष्कां (for [अ]नृतां). $G_3$ शुद्धां गिरसमीरयेत् (sic) (for the post. half). —(L. 2276) $M_3$ -चरणे; $M_3$ °णौ. $T_1$ नातिधीतं; $T_2$ $G_3$ अतिथिं वा (for नाधीतं वा). —(L. 2277) $T_1$ $M_3$ चांडालो. —(L. 2278) $G_2$ स्यात्; $M_2$ च (for स). $G_1$ $M_3$ अन्नेन पूजनीयाः स्युः. —(L. 2279) $M_3$ यः पिधाय (for पिधाय तु). Madras ed. योन्नं (for ह्येकः). $G_2$ $M_{2,3}$ प्रहृष्टवान्. —(L. 2282) $M_2$ यो रहः (for यो नरः). $M_3$ शृणु (for महत्). $M_4$ तस्य पुण्यं महत्फलं. —(L. 2283) $G_2$ $M_3$ तु (for [अ]पि). $G_3$ $M_4$ ददाति (for दद्याद्). — $M_2$ om. (hapl.) lines 2286–2289. —(L. 2286) $G_3$ $M_4$ प्रयत्नेन (for विशेषेण). —(L. 2287) $M_4$ परं (for स्मृतम्). —(L. 2290) $G_{1,2}$ विशेषेण (for प्रदातव्यं). —(L. 2291) $G_1$ आदित्यस्य; $M_2$ °त्यः स्वैर् (for °त्यः स्व-). —(L. 2292) $M_3$ रसं मेघे निधापयेत् (for the post. half). —(L. 2293) $G_3$ तं; $M_2$ यत् (for तत्). T $G_3$ वै रसं;

तेन दिग्धा भवेद्देवी मही प्रीता च पाण्डव ।
तस्यां सस्यानि रोहन्ति यैर्जीवन्त्यखिलाः प्रजाः । [2295]
मांसमेदोस्थिमज्जानां संभवस्तेभ्य एव हि ।
एवं सूर्यश्च पवनो मेघः शक्रस्तथैव च ।
एक एव स्मृतो राशिर्यतो भूतानि जज्ञिरे ।
भवनानि च दिव्यानि दिवि तेषां महात्मनाम् ।
नानासंस्थानरूपाणि नानाभूतयुतानि च । [2300]
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ।
अनेकशतसंख्यानि सान्तर्जलवनानि च ।
तत्र पुष्पफलोपेताः कामदाः सुरपादपाः ।
वाप्यो वीथ्यः सभाः कूपा दीर्घिकाश्च सहस्रशः । [2305]
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ।
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च ।
क्षीरस्रवन्त्यः सरितस्तथा चैवान्नपर्वताः ।
प्रासादाः पाण्डराः शुभ्राः शय्याश्च कनकोज्ज्वलाः ।
अन्नदास्तत्र तिष्ठन्ति तस्मादन्नप्रदो भवेत् । [2310]

Colophon.

युधिष्ठिर उवाच ।

अन्नदानफलं श्रुत्वा प्रीतोऽस्मि मधुसूदन ।
भोजनस्य विधिं वक्तुं देवदेव त्वमर्हसि ।

भगवानुवाच ।

भोजनस्य द्विजातीनां विधानं शृणु पाण्डव ।
स्नातः शुचिः शुचौ देशे निर्जने हुतपावकः ।
मण्डलं कारयित्वा तु चतुरश्रं द्विजोत्तमः । [2315]
क्षत्रियश्चेत्ततो वृत्तं वैश्योऽर्धेन्दुसमाकृतिम् ।
आर्द्रपादस्तु भुञ्जीयात्प्राङ्मुखश्चासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ।
नैकवासास्तु भुञ्जीयान्न चान्तर्धाय वा द्विजः ।
न भिन्नपात्रे भुञ्जीत पर्णपृष्ठे तथैव च । [2320]
अन्नं पूर्वं नमस्कुर्यात्प्रहृष्टेनान्तरात्मना ।
नान्यदालोकयेदन्नान्न जुगुप्सेत तत्परः ।
जुगुप्सितं च यच्चान्नं राक्षसा एव भुञ्जते ।
पाणिना जलमुद्धृत्य कुर्यादन्नं प्रदक्षिणम् ।
अपेयं तद्विजानीयात्पीत्वा चान्द्रायणं चरेत् । [2325]
परिवेषजलादन्यत्पेयमेतत्तु मन्त्रवत् ।

---

M2 वासवः; M3.4 तद्रसं (for तादृशम्). —(L. 2294) G3 दीप्ता; M2.3 स्निग्धा (for दिग्धा). M4 एव (for देवी). M2 मम (for मही). T G3 पार्थिव; Kumbh. ed. भारत (for पाण्डव). —(L. 2297) M2.4 एवमन्नं च सूर्यश्च पवनः शक्र एव च. —(L. 2298) G1 स्थितो (for स्मृतो). — After line 2298, M2.3 ins.:

> प्राणान्ददाति भूतानां तेजश्च भरतर्षभ ।
> अन्नदानेन संप्रीता देवाश्च पितृभिः सह ।
> तस्मात्तेजो यशो वीर्यं बलायुर्धृतयः सदा ।
> श्रद्धयान्नं प्रदातव्यमिति पौराणिकी श्रुतिः ।
> अन्नदानात्तु ये लोकास्ताञ्शृणुष्व युधिष्ठिर । [5]

[(L. 4) M3 श्रद्धदानं (sic) (for °यान्नं).]

—(L. 2299) M2 पावनानि (for भव°). —(L. 2300) G2 -संस्थानि (for -संस्थान-). G1 नानास्थितानि भूतानि (for the prior half). G2 M4 -भूति-; M2.3 -भूमि- (for -भूत-). G1 M3 -गतानि (for -युतानि). —(L. 2304) G1 ततः (for तत्र). —(L. 2305) T2 दिव्याः; G2 विध्यः (sic) (for वीथ्यः). T2 सरः; G2 सदा (for सभाः). T1 वाप्यो वीर्याप्सरः कूपा; G1 वाप्योपेयुः सभां कूपां (sic) (for the prior half). M2.4 [ए]व सर्वशः (for च सहस्रशः). — After line 2305, G1.2 M3 read lines 2307–2308. —(L. 2306) M4 च (for [अ]थ). —(L. 2309) G1.2 प्रासाद-. G1.2 M2.3 प्रस्तरा: (for पाण्डराः). M4 भ्रात्राः (sic) (for शुभ्राः). —(L. 2310) M2 अन्नदानांस्तु तिष्ठंति. G1.2 ह्यन्नदान- (for तस्मादन्न-). T1 M4 भव (for भवेत्). — Colophon. — *Sub-parvan :* T G3 M2.4 वैष्णवधर्म. — *Adhy. name :* M2 अन्नविशेषः. — *Adhy. no. :* T1 96; T2 105; G1.2 M4 95; G3 106; M2 12; M3 94. —(L. 2311) M2 [अ]सुर- (for मधु-). —(L. 2314) G2 शुद्धः (for शुचिः). —(L. 2315) G1.2 M3 च (for तु). —(L. 2316) M2 वैश्यस्यार्धेंदुसंनिभं; M4 वैश्यश्चेन्मुसलाकृतिं (for the post. half). —(L. 2319) M2.4 नानंतर्धाय (for न चान्त°). M2 वै (for वा). T G3 M4 पुनः (for द्विजः). —(L. 2320) M2.4 -भांडे (for -पात्रे). —(L. 2322) T [अ]न्यम् (for [अ]न्यद्). T अन्नं; G3 अश्नन् (for अन्नान्). M2 वा पुनः; M3.4 तत्पुनः (for तत्परः). —(L. 2323) M2 तु तच् (for च यच्). —(L. 2325) G2 आपोशनं तु तत्पीत्वा (for the prior half). G2 द्विजश्; M3.4 भुक्त्वा (for पीत्वा). —(L. 2326) M2.4 परिषेक- (for °वेष-). G1.2 अन्यत्; M2 एवं; M3.4 एव (for एतत्). T2 मंत्रवित्. —(L. 2327) M4 चैव (for कुर्याद्). T समंत्रास्. M2 च (for तु). —(L. 2328) M4 प्राणाहुतेर्. —(L. 2329) G2 समाहितं. T M4 प्राणाहुतिर्.

पञ्च प्राणाहुतीः कुर्यात्सम ' ' तु पृथक्पृथक् ।
यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ।
तथा समाहितः कुर्यात्प्राणाहुतिमतन्द्रितः ।
विदित्वान्नमथान्नादं पञ्च प्राणांश्च पाण्डव । [2330]
यः कुर्यादाहुतीः पञ्च तेनेष्टाः पञ्च वायवः ।
अतोऽन्यथा तु भुञ्जानो ब्राह्मणो ज्ञानदुर्बलः ।
तेनान्नेनासुरान्प्रेतान्राक्षसांस्तर्पयिष्यति ।
वक्त्रप्रमाणान्पिण्डांश्च ग्रसेदेकैकशः पुनः ।
वक्त्राधिकं तु यत्पिण्डमात्मोच्छिष्टं तदुच्यते । [2335]
पिण्डावशिष्टमन्यच्च वक्त्रनिःसृतमेव च ।
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ।
स्वमुच्छिष्टं तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभोजनम् ।
चान्द्रायणं चरेत्कृच्छ्रं प्राजापत्यमथापि वा ।
पिबतः पतिते तोये भोजने मुखनिःसृते । [2340]
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ।
पीतशेषं तु तन्नाम न पेयं पाण्डुनन्दन ।
पिबेद्यदि हि तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ।
पानीयानि पिबेद्येन तत्पात्रं द्विजसत्तमः ।
अनुच्छिष्टं भवेत्तावद्यावद्भूमौ न निक्षिपेत् । [2345]
मौनी वाप्यथ वामौनी प्रहृष्टः संयतेन्द्रियः ।
भुञ्जीत विधिवद्विप्रो न चोच्छिष्टं प्रदापयेत् ।
सदा चात्याशनं नाद्यान्नातिहीनं च कर्हिचित् ।
यथान्नेन व्यथा न स्यात्तथा भुञ्जीत नित्यशः ।
उदक्यामपि चण्डालं श्वानं वा रुरुमेव वा । [2350]
भुञ्जानो यदि वा पश्येत्तदन्नं च परित्यजेत् ।
भुञ्जानो ह्यत्यजन्मोहाद्द्विजश्चान्द्रायणं चरेत् ।
केशकीटावपन्नं च मुखमारुतवीजितम् ।
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ।
उत्थाय च पुनः स्पृष्टं पादस्पृष्टं च लङ्घितम् । [2355]
अन्नं तद्राक्षसं विद्यात्तस्मात्तत्परिवर्जयेत् ।
राक्षसोच्छिष्टभुग्विप्रः सप्त पूर्वान्परानपि ।
निरये रौरवे घोरे स्वपितॄन्पातयिष्यति ।
तस्मिन्नाचमनं कुर्याद्यस्मिन्पात्रे स भुक्तवान् ।
यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः । [2360]

---

2330 ) M2–4 विदित्वा चान्नमन्नादं. —( L. 2333 ) T G3 [अं]तेन ( for [अ]न्नेन ). —( L. 2334 ) T G3 M2 -प्रमाण- ( for °णान् ). M2 -पिंडानि ( for पिण्डांश्च ). —( L. 2335 ) M2 वक्त्रातिरिक्तं ( for °धिकं तु ). M2 om. from यत्पिण्डम् up to स्वमुच्छिष्टं तु in the prior half of line 2338. —( L. 2336 ) G1.2 M3 अन्नं च; M4 अन्यच्चेद् ( for अन्यच्च ). G1.2 M3 वक्त्रान्निःसृतमेव वा ( M3 च ). —( L. 2338 ) G2 स्वयमुष्णं ( for स्वमुच्छिष्टं ). G3 om. one यो भुङ्क्ते. G1 मुंडिभोजनं; G3 कांस्यभाजने; M3 मुक्तवाजने (sic); M4 मुक्तभाजनं ( *inf. lin.* °मोदनं ) ( for °भोजनम् ). —After line 2339, G1.2 M3 ins.:

स्त्रीपात्रभुङ्नरः पापः स्त्रीणामुच्छिष्टभुक्तथा ।
तया सह च यो भुङ्क्ते स भुङ्क्ते मद्यमेव हि ।
न तस्य निष्कृतिर्दृष्टा मुनिभिस्तत्त्वदर्शिभिः ।

—( L. 2340 ) G1.2 पिबतस्तु तथा तोयं ( for the prior half ). —( L. 2341 ) M2 भवेदन्नं ( for विजानीयाद् ). —M2.4 om. ( hapl. ) lines 2342–2343. —( L. 2342 ) T तत्तोयम् ( for तन्नाम ) and अपेयं ( for न पेयं ). —( L. 2343 ) G1.2 M3 [इ]ह ( for हि ). —G3 om. lines 2344–2345. —( L. 2344 ) M4 पानीयादि ( for °यानि ) and पात्रेण ( for तत्पात्रं ). —( L. 2345 ) M4 यावत्तावद् ( by transp. ). T वि- ( for न ). —( L. 2346 ) M4 हि ( for [अ]पि ). G3 भुंजन्; Kumbh. ed. and] Madras ed. भूमौ ( for [अ]मौनी ). G1.2 M3 नावलोक्या ( M3 न वालोक्य ) दिशस्तथा ( for the post. half ). —( L. 2347 ) T G3 M2.4 न चोच्छिष्टानि चापयेत् ( M2 धापयेत; M4 वापयेत् ) ( for the post. half ). —( L. 2348 ) G1 M2.3 चात्यशनं; M4 चात्यशितं. G3 नात्यहीनं ( for नाति° ). M3 न ( for च ). —( L. 2349 ) T1 यदा चेच्छा ****; T2 यथा चेच्छा यथा पथ्यं; G1 यथार्थेन विधानस्य; G3 M4 यदा( M4 °था )न्नेच्छा यदा ( M4 °था ) न स्यात्; M2 यथा देहव्यथा न स्यात्; M3 यथान्नेच्छा यदा न स्यात् ( for the prior half ). —( L. 2350 ) M2.4 अथ ( for अपि ). T1 वा शूद्रम्; G1.2 सूकरम्; M2 कुक्कुटम् ( for वा रुरुम् ). M3 च ( for the second वा ). —( L. 2351 ) T2 G3 M2.4 पश्येत्तु ( for वा पश्येत् ). M2 तदा ( for तद् ). M2 तु ( for च ). —( L. 2352 ) M2 न त्यजन् ( for ह्यत्य° ). —( L. 2353 ) T G2.3 -कीटोपपन्नं; M2 -कीटाभि° ( for -कीटाव° ). M2 -वीजितः. —( L. 2354 ) G1 तद्भोज्यं. M2 द्विजातीनां ( for विजानीयाद् ). —( L. 2355 ) G3 तु ( for the first च ). M2 भुक्तं ( for स्पृष्टं ). T G1.3 पदास्पृष्टं ( for पाद° ). M2 न पादस्पृष्टलंघितं. —( L. 2357 ) G1.2 M4 पूर्वापरान्. T दश पूर्वान्दशापरान् ( for the post. half ). —( L. 2358 ) G1.2 M3 नरके ( for निरये ). M4 रौरवे नरके घोरे. T G1.2 स ( for स्व- ). —( L. 2359 ) G2 तस्मान् ( for तस्मिन् ). T2 M2.4 भांडे ( for पात्रे ). —( L. 2360 ) T G1 यद् ( for यदि ).

स्नानं सद्यः प्रकुर्वीत सोऽन्यथाप्रयतो भवेत् ।
युधिष्ठिर उवाच ।
तृणमुष्टिविधानं च तृणमाहात्म्यमेव च ।
इक्षोः सोमसमुद्भूतिं वक्तुमर्हसि मानद ।
भगवानुवाच ।
पितरो वृषभा ज्ञेया गावो लोकस्य मातरः ।
तासां तु पूजया राजन्पूजिताः पितृमातरः । [2365]
सभा प्रपा गृहं चापि देवतायतनानि च ।
शुध्यन्ति शकृदा यासां किं पूतमधिकं ततः ।
ग्रासमुष्टिं परगवे दद्यात्संवत्सरं तु यः ।
अकृत्वा स्वयमाहारं व्रतं तत्सार्वकालिकम् ।
गावो मे मातरः सर्वाः पितरश्चैव गोवृषाः । [2370]
ग्रासमुष्टिं मया दत्तां प्रतिगृह्णन्तु मातरः ।
इत्युक्त्वानेन मन्त्रेण सावित्र्या वा समाहितः ।
अभिमन्त्र्य ग्रासमुष्टिं तस्य पुण्यफलं शृणु ।
यत्कृतं दुष्कृतं तेन ज्ञानतोऽज्ञानतोऽपि वा ।
तस्य नश्यति तत्सर्वं दुःस्वप्नं च विनश्यति । [2375]
तिलाः पवित्राः पापघ्ना नारायणसमुद्भवाः ।
तिलाञ्श्राद्धे प्रशंसन्ति दानमेतदनुत्तमम् ।
तिलान्दद्यात्तिलान्भक्ष्यात्तिलान्प्रातरुपस्पृशेत् ।
तिलं तिलमिति ब्रूयात्तिलाः पापहरा हि ते ।
क्रीताः प्रतिगृहीता वा न विक्रेया द्विजातिभिः । [2380]
भोजनाभ्यञ्जनाद्दानाद्योऽन्यत्तु कुरुते तिलैः ।
कृमिर्भूत्वा श्वविष्ठायां पितृभिः सह मज्जति ।
तिलान्न पीडयेद्विप्रो यन्त्रचक्रे स्वयं नृप ।
पीडयन्हि द्विजो मोहान्नरकं याति रौरवम् ।
इक्षुवंशोद्भवः सोमः सोमवंशोद्भवा द्विजाः । [2385]
इक्षून्न पीडयेत्तस्मादिक्षुघात्यात्मघातकः ।
इक्षुदण्डसहस्राणामेकैकेन युधिष्ठिर ।
ब्रह्महत्यामवाप्नोति ब्राह्मणो यन्त्रपीडकः ।
तस्मान्न पीडयेदिक्षून्यन्त्रचक्रे द्विजोत्तमः

Colophon.

युधिष्ठिर उवाच ।
समुच्चयं तु धर्माणां भोज्याभोज्यं तथैव च । [2390]
श्रुतं मया त्वत्प्रसादादापद्धर्मं ब्रवीहि मे ।
भगवानुवाच ।
दुर्भिक्षे राष्ट्रसंबाधे त्वाशौचे मृतसूतके ।
धर्मकालेऽध्वनि तथा नियमो नैव लुप्यते ।
दूराध्वगमनात्खिन्नो द्विजालाभेऽथ शूद्रतः ।
अकृतान्नं च यत्किंचिद्गृह्णीयादात्मवृत्तये । [2395]
आतुरो दुःखितो वापि भयार्तो वा बुभुक्षितः ।

---

$M_4$ यद्युच्छिष्टस्त्वनाचांतो भुक्त्वा पात्रात्ततः स्वयं. —(L. 2361) T $G_1$ पतितो (for [अ]प्रयतो). —(L. 2362) $T_1$ $M_2$ तिल- (for तृण-). —(L. 2363) $G_2$ $M_4$ -समुद्भूतं. T माधव (for मानद). —(L. 2364) $M_2$ मातरं. —(L. 2365) $G_{1,2}$ -देवताः (for -मातरः). —(L. 2366) $M_2$ सदा (for सभा). T $G_2$ $M_2$ गृहांश् (for गृहं). —(L. 2367) $M_3$ तासां. $T_1$ $G_{1,2}$ $M_{3,4}$ भूतम् (for पूतम्). —(L. 2368) T गवे दद्यात्; $G_3$ परं गावे (for परगवे). T परं (for दद्यात्). —(L. 2369) $G_{1,2}$ $M_2$ प्रातस्तत् (for व्रतं तत्). T -लोकदं (for -कालिकम्). —(L. 2370) $M_4$ वै (for मे). —(L. 2371) $G_{1,2}$ दत्तं. $G_3$ ग्रासमुष्टिर्मया दत्ता. $G_{1,2}$ -गृह्णीत. —(L. 2372) $M_2$ [अ]नेनापि (for [उ]क्त्वानेन). Kumbh. ed. गायत्र्या (for सावित्र्या). —(L. 2373) $M_2$ दद्यात्तु ग्रासमुष्टिं यस् (for the prior half). $M_4$ दद्यात्तस्य (for तस्य पुण्य-). —(L. 2375) $T_2$ दुःस्वप्नश्. — $G_3$ om. (hapl.) line 2377. —(L. 2377) $M_2$ च तद् (for एतद्). —(L. 2378) $G_2$ $M_4$ तिलं (for the second तिलान्). $G_3$ भक्ष्येत्; $M_{2,3}$ दद्यात् (for भक्ष्यात्). —(L. 2379) T $G_3$ तिलास्तिला; $M_4$ तिलांस्तिलान् (for तिलं तिलम्). $G_3$ ब्रूयुस् (for ब्रूयात्). —(L. 2380) $G_{1,2}$ $M_3$ (*inf. lin.* as above) कृत्वा ($G_2$ क्रीत्वा) प्रतिगृहीत्वा वा. —(L. 2381) $M_4$ अन्यत्र (for योऽन्यत्तु). —(L. 2384) T पीडयेत्तु; $M_2$ °यापि; $M_4$ °या हि (for °यन्हि). —(L. 2385) $G_2$ $M_4$ सोमवंशोद्भवो द्विजः. —(L. 2386) $M_{2,3}$ इक्षुं. $M_4$ घातयेत् (for पीड°). $T_2$ $G_3$ $M_{2-4}$ इक्षुघाता- ($M_4$ °तो)त्मघातकः (for the post. half). —(L. 2387) T नराधिप (for युधिष्ठिर). —(L. 2388) Kumbh. ed. द्विजश्चेद् (for ब्राह्मणो). $T_1$ $G_1$ $M_{2,3}$ -पीडितः; $M_4$ -पीडनः. —(L. 2389) $G_{1,2}$ $M_{2,3}$ इक्षुं. — Colophon. — *Sub-parvan :* $G_3$ $M_{2-4}$ वैष्णव- ($M_3$ विष्णु)धर्म. — *Adhy. name :* $M_3$ भोजनविधिः. — *Adhy. no. :* $T_1$ 97; $T_2$ 106; $G_{1,2}$ $M_4$ 96; $G_3$ 107; $M_2$ 13; $M_3$ 95. —(L. 2390) $G_{2,3}$ $M_{2,4}$ च (for तु). Madras ed. च केशव (for तथैव च). —(L. 2392) $G_{1,2}$ [ऽ]प्याशौचे; $M_3$ आशौचे (for त्वाशौचे). —(L. 2393) $G_1$ येन (for नैव). $G_{2,3}$ $M_{2,4}$ नियमोर्थो ($M_2$ °मस्थो) न लु($M_4$ लि)प्यते. —(L. 2394) $M_2$ तु (for ऽथ). —(L. 2395) $G_3$

भुञ्जन्नविधिना विप्रः प्रायश्चित्तीयते न च ।
निमन्त्रितस्तु यो विप्रो विधिवद्धव्यकव्ययोः ।
मांसान्यपि च भुञ्जानः प्रायश्चित्तीयते न च ।
अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः । [ 2400 ]
हविर्ब्राह्मणकामाय गुरोर्वचनमौषधम् ।
अशक्तो विधिवत्कर्तुं प्रायश्चित्तानि यो नरः ।
विदुषां वचनेनापि दानेनापि विशुध्यति ।
अनृतावृतुकाले वा दिवा रात्रौ तथापि वा ।
प्रोषितस्तु स्त्रियं गच्छेत्प्रायश्चित्तीयते न च । [ 2405 ]

युधिष्ठिर उवाच ।

प्रशस्याः कीदृशा विप्रा निन्द्याश्चापि सुरेश्वर ।
अष्टकायाश्च कः कालस्तन्मे कथय सुव्रत ।

भगवानुवाच ।

सत्यसन्धं द्विजं दृष्ट्वा स्थानाद्वेपति भास्करः ।
एष मे मण्डलं भित्त्वा याति ब्रह्म सनातनम् ।
कुलीनः कर्मकृद्वैद्यस्तथा चाप्यानृशंस्यवान् । [ 2410 ]
ह्रीमानृजुः सत्यवादी पात्रं सर्वे इमे द्विजाः ।
एते चाग्रासनस्थास्तु भुञ्जानाः प्रथमं द्विजाः ।
तस्यां पङ्क्त्यां च ये चान्ये तान्पुनन्त्येव दर्शनात् ।
मद्भक्ता ये द्विजश्रेष्ठा मद्गता मत्परायणाः ।
तान्पङ्क्तिपावनान्विद्धि पूज्यांश्चैव विशेषतः । [ 2415 ]
निन्द्यान्शृणु द्विजान्राजन्नपि वा वेदपारगान् ।
ब्राह्मणच्छद्मना लोके चरतः पापकारिणः ।
अनग्निरनधीयानः प्रतिग्रहरुचिस्तु यः ।
यत्र कुत्र तु भुञ्जानस्तं विद्यात्पङ्क्तिदूषकम् ।
मृतसूतकपुष्टाङ्गो यश्च शूद्रान्नभुग्द्विजः । [ 2420 ]
अहं चापि न जानामि गतिं तस्य नराधिप ।
शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः ।
जपतो जुह्वतो वापि गतिरूर्ध्वा न विद्यते ।
आहिताग्निश्च यो विप्रः शूद्रान्नान्न निवर्तते ।
पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः ।[ 2425 ]
शूद्रप्रेषणकर्तुश्च ब्राह्मणस्य विशेषतः ।
भूमावन्नं प्रदातव्यं श्वसृगालसमो हि सः ।
प्रेतभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ।
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् । [ 2430 ]
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ।
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजोत्तमाः ।
पदे पदेऽश्वमेधस्य फलं ते प्राप्नुवन्ति हि ।
न तेषामशुभं किंचित्पापं वाशुभकर्मणाम् ।
जलावगाहनादेव सद्यः शौचं विधीयते । [ 2435 ]

अकृत्वार्थं. G M3 तु ( for च ). G1 अनु- ( for आत्म- ). —( L. 2396 ) T तथार्तो; G2 तृषार्तो ( for भयार्तो ). —( L. 2397 ) G2.3 M3.4 भुंजानो ( for भुञ्जन् ). —After line 2397, M2 ins.:

यत्किंचिदपि कुर्वाणो विद्वद्गुरुनियोगतः ।
तेषां वचनसामर्थ्यात्प्रायश्चित्तीयते न च ।

—M1 reads lines 2398-2399 after line 2405. —( L. 2398 ) M1 निमंत्रयंस्. —( L. 2399 ) G1.2 M2.4 मांसादीन्यपि भुंजानः. —( L. 2401 ) Kumbh. ed. and Madras ed. -काम्या च ( for -कामाय ). —( L. 2402 ) G1 आपत्तो ( for अशक्तो ). —( L. 2403 ) M2 च ( for the second [अ]पि ). M4 युधिष्ठिर ( for विशुध्यति ). —M1 om. lines 2404-2405. —( L. 2404 ) T G1 रात्रौ वा यदि वा दिवा ( for the post. half ). —( L. 2405 ) M2 प्रोषितं तु प्रियां गच्छेत्. —( L. 2406 ) M2.3 प्रशस्ताः. —( L. 2407 ) T G3 M3 यः ( for कः ). —( L. 2408 ) M2 सत्यसंधान्द्विजान्. G3 चलति ( for वेपति ). —( L. 2410 ) G1 M4 वा ( for च ). —( L. 2412 ) M1 च; Madras ed. ते ( for तु ). —( L. 2413 ) G1.2 M2.3 तु ( for the first च ). —( L. 2414 ) G1.3 मद्भक्ता ( for मद्गता ).
—( L. 2416 ) G2 निधानपि शृणुष्वेमान् ( for the prior half ). G2 M4 वेदांत- ( for वा वेद- ). G3 अविवादेन पारगाः. —( L. 2417 ) M2.3 ब्राह्मणान्. T काले ( for लोके ). G1.2 M4 चरंतः. G3 -चारिणः ( for -का° ). T यश्चरन्पापकारकः ( for the post. half ). —( L 2418 ) T द्विजः; G3 च यः ( for तु यः ). —T2 om. ( hapl. ) lines 2419-2420. —( L. 2419 ) G3 M4 तत्र ( for कुत्र ). T1 G3 M2 च ( for तु ). Kumbh. ed. यतस्ततस्तु भुंजानस्. G1 ब्रह्म- ( for पङ्क्ति- ). —( L. 2420 ) G1 M2 तु ( for च ). —T1 ins. after line 2420 : T2 after 2418 :

असूयालुर्दम्भपरो महानहमिति ब्रुवन् ।

—( L. 2422 ) T2 om.; G2 [ऽ]पि ( for हि ). G1.2 हि ( for ऽपि ). —( L. 2423 ) M4 भुंजतो ( for जुह्वतो ). G ऊर्ध्वं. —( L. 2424 ) M2 तु ( for च ). T G2 विप्रो यः ( by transp. ). M2 शूद्रान्नं नाभिवर्तते. —( L. 2426 ) M2 युधिष्ठिर ( for विशेषतः ). —( L. 2427 ) T भूम्यां पिंडं; G2.3 M4 भूम्यामन्नं. —( L. 2428 ) G3 M3 ( *sup. lin.* ) -दुर्लभः ( for -दुर्बलः ). —( L. 2429 ) T2 M2.3 -गच्छन् ( for -गच्छेन् ). —( L. 2434 ) M4 यद् ( for न ). —( L. 2437 ) T1 न

शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निर्वृतेन न भोक्तव्यं विद्धि शूद्रान्नमेव तत् ।
विप्राणां भोक्तुकामानामत्यन्तं चान्नकाङ्क्षया ।
यो विघ्नं कुरुते मर्त्यस्ततो नान्योऽस्ति पापकृत् ।
सर्वे च वेदाः सह षड्भिरङ्गैः [ 2440 ]
सांख्यं पुराणं च कुले च जन्म ।
नैतानि सर्वाणि गतिर्भवन्ति
शीलव्यपेतस्य नृप द्विजस्य ।
ग्रहोपरागे विषुवेऽयनान्ते
पित्र्ये मघासु स्वसुते च जाते । [ 2445 ]
गयेषु पिण्डेषु च पाण्डुपुत्र
दत्तं भवेन्निष्कसहस्रतुल्यम् ।
वैशाखमासस्य च या तृतीया
नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे [ 2450 ]
त्रयोदशी पञ्चदशी च माघे ।
उपप्लवे चन्द्रमसो रवेश्च
श्राद्धस्य कालो ह्ययनद्वये च ।
यस्त्वेकपङ्क्त्यां विषयं ददाति
स्नेहाद्भयाद्वा यदि वार्थहेतोः । [ 2455 ]
क्रूरं दुराचारमनात्मवन्तं
ब्रह्मघ्नमेनं मुनयो वदन्ति ।
इहैवैकस्य नामुत्र अमुत्रैकस्य नो इह ।
इह चामुत्र चैकस्य नामुत्रैकस्य नो इह ।
धनानि येषां विपुलानि सन्ति [ 2460 ]
नित्यं रमन्ते परलोकमूढाः ।
तेषामयं शत्रुवरघ्नलोको
नान्यः सदा देहसुखे रतानाम् ।
ये योगयुक्तास्तपसि प्रसक्ताः
स्वाध्यायशीला जरयन्ति देहम् । [ 2465 ]
जितेन्द्रिया भूतहिते निविष्टा-
स्तेषामसौ नायमरिघ्नलोकः ।
ये धर्ममेव प्रथमं चरन्ति
धर्मेण लब्ध्वापि धनानि काले ।
दारानवाप्य क्रतुभिर्जयन्ते [ 2470 ]
तेषामयं चैव परश्च लोकः ।
ये नैव विद्यां न तपो न दानं
न चापि मूढाः प्रजने यतन्ते ।

---

वृत्तेन; T2 निवृत्तेन; G3 निवर्तेन; M2 निहतेन (for निर्वृतेन). G2 तु (for न). —(L. 2438) G1. 2 M3 चान्न( M3 भोक्तु )कांक्षिणां. —(L. 2439) M2 विघ्नं तु (for यो विघ्नं) and [ऽ]न्यो न (by transp.). —(L. 2440) T G2. 3 हि (for च). —(L. 2441) M4 सांगं (for सांख्यं). —(L. 2444) M4 [ऽ]यने च (for °नान्ते). —(L. 2445) M2 [ऽ]प- (for च). —(L. 2446) T G3 M4 पद्मेषु; Madras ed. सर्वेषु (for पिण्डेषु). —M2. 4 om. lines 2448–2449. —(L. 2449) Madras ed. अनवद्यासौ (for नवम्यसौ). —(L. 2450) G2 तु (for च). —M2 om. from line 2453 up to the prior half of line 2488. —(L. 2453) M3 [ऽ]पि (for हि). —After line 2453, T1 G1 M3 ins.:

पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात्पितृभ्यः प्रयतो मनुष्यः ।

This is followed by lines 2460–2461 in G1 and by lines 2460–2463 in M3. —G2 ins. after line 2453: G1 after line 2461: M3 after line 2463:

श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत्पितरो वदन्ति ।

—(L. 2454) M4 -पंक्तौ. —(L. 2456) M4 दुरात्मानम् (for °चारम्). —(L. 2457) M4 स्वात्मोपघातं (for ब्रह्मघ्नमेनं). G1. 2 कवयो (for मुनयो). —After line 2457, M3 reads lines 2464–2471. G2 reads lines 2458–2459 after line 2471. —(L. 2458) G1 चैवास्य; G2 चैकस्य (for [ए]वैकस्य). M4 (*sup. lin.*) बहु (for इह). —(L. 2459) T1 lacuna. G2 partly damaged. T2 अमुत्रेह न कस्यचित् (for the post. half). —G2 reads lines 2460–2463 after line 2475. —(L. 2461) G3 -लोकमुत्तमाः (for -लोकमूढाः). —(L. 2462) G2 -गणघ्न- (for -वरघ्न-). —(L. 2463) Madras ed. नान्यत् (for नान्यः). T G1 सुखं (for सदा). M4 देहसौख्ये. —(L. 2464) G1. 2 M3 चैव मुक्तास् (for योगयुक्तास्). G2. 3 M3 प्रयुक्ताः (for प्रसक्ताः). —(L. 2466) M4 विप्रास्तथा (for जितेन्द्रिया). —(L. 2467) G1 चापि परश्च; M4 नाम रिपुघ्न- (for नायमरिघ्न-). —(L. 2468) T1 om. ये. —(L. 2469) G3 धर्माणि (for धर्मेण). G1. 2 लब्धानि (for लब्ध्वापि). —(L. 2471) G3 [ऽ]पि (for the second च). —G1 om. lines 2472–2520. —(L. 2472) G2 M4 ये( M4 ए )वं न

न चापि गच्छन्ति सुखानि भोगां-
स्तेषामयं चैव परश्च नास्ति । [ 2475 ]

युधिष्ठिर उवाच ।

नारायण पुराणेश योगावास नमोऽस्तु ते ।
श्रोतुमिच्छामि कार्त्स्न्येन धर्मसारसमुच्चयम् ।

भगवानुवाच ।

धर्मसारं महाराज मनुना प्रोक्तमादितः ।
प्रवक्ष्यामि मनुप्रोक्तं पौराणं श्रुतिसंहितम् ।
अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः । [ 2480 ]
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत तान्सदा ।
गौरेकस्यैव दातव्या न बहूनां युधिष्ठिर ।
सा गौर्विक्रयमापन्ना दहत्यासप्तमं कुलम् ।
बहूनां न प्रदातव्या गौर्वस्त्रं शयनं स्त्रियः ।
तादृग्भूतं तु तद्दानं दातारं नोपतिष्ठति । [ 2485 ]
आक्रम्य ब्राह्मणैर्भुक्तमनार्याणां तु वेश्मनि ।
गोसिश्च पुण्यं तत्तेषां राजसूयाद्विशिष्यते ।
मा ददात्विति यो ब्रूयाद्गव्यग्नौ ब्राह्मणेषु च ।
तिर्यग्योनिशतं गत्वा चण्डालेषूपजायते ।
ब्राह्मणस्वं तु देवस्वं दरिद्रस्य च यद्धनम् । [ 2490 ]
गुरोश्चापि हृतं राजन्स्वर्गस्थमपि पातयेत् ।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।
द्वितीयं धर्मशास्त्राणि तृतीयं लोकसंग्रहः ।

आ समुद्राच्च यत्पूर्वादा समुद्राच्च पश्चिमात् ।
हिमवद्विन्ध्ययोर्मध्यमार्यावर्तं प्रचक्षते । [ 2495 ]
सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तद्देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ।
यस्मिन्देशे य आचारः पारंपर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ।
कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसेनयः । [ 2500 ]
एते ब्रह्मर्षिदेशास्तु ब्रह्मावर्तादनन्तराः ।
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चारित्रं तु गृह्णीयुः पृथिव्यां सर्वमानवाः ।
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विशसनादपि ।
प्रत्यगेव प्रयागात्तु मध्यदेशः प्रकीर्तितः । [ 2505 ]
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो याज्ञियो देशो म्लेच्छदेशस्ततः परम् ।
एतान्विज्ञाय देशांस्तु संश्रयेयुर्द्विजातयः ।
शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्शितः ।
आचारप्रभवो धर्मो ह्यहिंसा सत्यमेव च । [ 2510 ]
दानं चैव यथाशक्ति नियमाश्च यमैः सह ।
वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ।
गार्भैर्होमैर्जातकर्मनामचौलोपनायनैः ।
स्वाध्यायैस्तद्व्रतैश्चैव विवाहस्नातकव्रतैः । [ 2515 ]
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।

---

(for ये नैव). — (L. 2473) T2 यजंते (for यतन्ते). — (L. 2474) M3 भोगं. M4 ये चापि गच्छंति परस्य मार्यां. — (L. 2475) M4 तेषामयं नैव परश्च लोकः. — (L. 2476) G2 M3 लोकावास (for योगा°). — (L. 2479) T वक्ष्यामि मनुना प्रोक्तं (for the prior half). G2 M4 पुराण-. M4 -संमितं (for -संहितम्). — (L. 2486) G2 M3 च (for तु). — (L. 2487) M4 पुण्यवत् (for पुण्यं तत्). — (L. 2488) G2 M3 गोषु च; M2 गोरग्नि-; M4 गवां तु (for गव्यग्नौ). Kumbh. ed. ब्राह्मणेषु च गोषु च (for the post. half). — (L. 2489) M2 ब्रह्मयोनि- (for तिर्यग्योनि-). M2 देवत्वमधिगच्छति (for the post. half). — (L. 2490) T च (for तु). M2 तु (for च). — (L. 2491) G2 स्वर्गस्थान् (for °स्थम्). M4 स्वर्गाच्च नरकं नयेत् (for the post. half). — (L. 2492) T प्रथमं; G3 अपरं (for परमं). — (L. 2493) T G2, 3 लोकसंग्रहं. — (L. 2494) M2, 3 आसमुद्रा(M2 °द्र)श्च. M3, 4 वै (for यत्). M2 आसमुद्रश्च पश्चिमात् (for the post. half). — (L. 2495) G2 M2, 3 मध्ये (for मध्यम्). G2 मध्यावर्तं (for आर्या°). — (L. 2496) T सारावती- (for सरस्वती-). — (L. 2497) M3, 4 तं (for तद्). M2, 3 -निर्जितं (for -निर्मितं). — (L. 2499) M2 सदाचारः स उच्यते. — (L. 2500) M2 मत्स्यश्च; M3 मत्स्यानां. M2 शूरसेनकाः. — (L. 2501) M2 अनंतरं. — (L. 2502) M4 अग्र्य- (for अग्र-). — (L. 2503) T G2 स्व- (for स्वं). M2 चरित्रं. G2 M4 च (for तु). T तु गृह्णीयात्; M2 निरीक्षंति. — (L. 2504) T M2 मध्ये. — (L. 2505) M2 च (for तु). — (L. 2506) T सरते; G3 चरते. — (L. 2507) M2, 3 याज्ञिको (for °यो) and स्वतः (for ततः). — (L. 2508) G2 M2, 3 संश्रयेरन् (for °येयुर्). — (L. 2509) M2, 3 निविशेद् (for निवसेद्). — (L. 2510) G2, 3 आचारः (for °र-). M3 -प्रथमो (for -प्रभवो). — (L. 2511) M2 [अ]पि (for [ए]व) and नियमानि (for °माश्च). — (L. 2512) G3 क्रतुभिः (for कर्मभिः). — (L. 2513) M2 कुर्युः (for कार्यः). — (L. 2514) M2

धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
विद्या तस्मिन्न वक्तव्या शुभं बीजमिवोषरे ।
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा ।
यस्माज्ज्ञानमिदं प्राप्तं तं पूर्वमभिवादयेत् । [ 2520 ]
सव्येन सव्यं संगृह्य दक्षिणेन तु दक्षिणम् ।
न कुर्यादेकहस्तेन गुरोः पादाभिवादनम् ।
निषेकादीनि कर्माणि यः करोति यथाविधि ।
अध्यापयति चैवैनं स विप्रो गुरुरुच्यते ।
कृत्वोपनयनं वेदान्योऽध्यापयति नित्यशः । [ 2525 ]
सकल्पान्सरहस्यांश्च स चोपाध्याय उच्यते ।
साङ्गांश्च वेदानध्याप्य शिक्षयित्वा व्रतानि च ।
विवृणोति च मन्त्रार्थानाचार्यः सोऽभिधीयते ।
उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता ।
पितुः शतगुणं माता गौरवेणातिरिच्यते । [ 2530 ]
तस्मात्तेषां वशे तिष्ठेत्तच्छुश्रूषापरो भवेत् ।
अवमानाद्धि तेषां तु नरकं स्यादसंशयः ।
हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान् ।
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत् ।
शपता यत्कृतं पुण्यं शप्यमानं तु गच्छति । [ 2535 ]
शप्यमानस्य यत्पापं शपन्तमनुगच्छति ।
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषं दम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत् ।

Colophon.

युधिष्ठिर उवाच ।

भगवंस्तव भक्तस्य मम धर्मजनप्रिय ।
धर्मं पुण्यतमं देव पृच्छतः कथयस्व मे । [ 2540 ]

भगवानुवाच ।

यदेतदग्निहोत्रं वै सृष्टं वर्णत्रयस्य तु ।
मन्त्रवद्धुतं सम्यग्विधिना चाप्युपासितम् ।
आहिताग्निं नयत्यूर्ध्वं सपत्नीकं सबान्धवम् ।

युधिष्ठिर उवाच ।

कथं तद्ब्राह्मणैर्देव होतव्यं क्षत्रियैः कथम् ।
वैश्यैर्वा देवदेवेश कथं वा सुहुतं भवेत् । [ 2545 ]
कस्मिन्कालेऽथ वा कस्य आधेयोऽग्निः सुरोत्तम ।
आहितस्य कथं वापि सम्यगाचरणं भवेत् ।
कत्यग्नयः किमात्मानः स्थानं किं कस्य वा विभो ।

---

गर्भैर्; M4 गार्ह- (for गर्भ-). M2 जातकर्मैर्. —(L. 2515) T G2 तु; M2 च (for तद्). G2 M3 तपोभिश्च (for व्रतैश्चैव). —(L. 2517) G2 यदि; G3 M4 यस्य (for यत्र). T च (for वा). —(L. 2518) M4 अवक्तव्या (for न वक्त°). M2 न तत्र विद्या वक्तव्या (for the prior half). —(L. 2520) M3 समाज्ञानम् (for यस्माज्ज्ञा°). M2 ततो ज्ञानागमप्राप्तं (for the prior half). T2 M2 तत् (for तं). —(L. 2521) T G3 M4 सव्येन सव्यः स्प्रष्टव्यो (for the prior half) and दक्षिणः (for °णम्). —(L. 2522) T पादाभिवंदनं. —(L. 2523) G3 कार्याणि (for कर्माणि). M4 कुर्यात्तु (for करोति). M2 विधानतः; M3 यथा विधिः. — M4 om. (hapl.) lines 2525–2526. —(L. 2525) M3 कृतोपनयनाद्वेदान्. G3 transp. वेदान् and यो. M2 om. यो. —(L. 2526) T सकलान्; G3 सकल्पं. —(L. 2527) M2 सांगान्वेदान्य अध्याप्य (for the prior half). M4 क्षपयित्वा (for शिक्ष°). —(L. 2528) G2 सोपजायते (for सोऽभिधी°). —(L. 2529) G3 आचार्यान्तु (for °र्याणां). T2 शतान् (for शतं). —(L. 2530) M2.4 दशतमा (for शतगुणं). —After line 2530, G2 and Kumbh. ed. ins.:

एतेषामपि सर्वेषां गरीयाञ्ज्ञानदो गुरुः ।
गुरोः परतरं किंचिन्न भूतं न भविष्यति ।

—(L. 2531) G1.2 M3 शुश्रूषापरमो भवेत्. —(L. 2532) G3 तु (for हि). T अथैतेषां (for हि तेषां तु). G1.3 नरकं स्यान्न संशयः; M2 °कान्याति सर्वशः; M4 °कान्यात्यसंशयं (for the post. half). —(L. 2533) M3 वयोतिगान् (for °धिकान्). —(L. 2534) M4 corrupt for the prior half. G3 M4 न वाचा त्वाक्षिपेद्बुधः. —(L. 2535) M4 शप्तस्य (for शपता). T1 G1 च; G3 हि (for तु). M2 उपैति वै (for तु गच्छति). —(L. 2537) M4 निंदनं (for कुत्सनम्). —(L. 2538) G3 दंभं (for दम्भं). M4 मौनं (for मानं). G1.2 M3 वि- (for the third च). —Colophon. —*Sub-parvan :* T M2 वैष्णवधर्म; M3 विष्णुधर्म. —*Adhy. no. :* T1 98; T2 107; G1.2 M4 97; G3 108; M2 14; M3 96. —(L. 2539) G1.2 M3 स्वभक्तस्य हृषीकेश धर्मार्थ (M3 मम ध)- र्ममजानतः. —(L. 2541) M2 तद् (for यद्). T2 G2 दृष्टं (for सृष्टं). T1 तत् (for तु). —(L. 2542) G2 M2.4 विधानाच्च (for विधिना). —(L. 2543) M3 नयामि (for नयति). —(L. 2546) G1.2 कथं; M3 तथा (for ऽथ वा). G3 तस्य; Madras ed. तस्मिन् (for कस्य). T G1 ह्याधेयो; M2 चा° (for आ°). —(L. 2548) M2.3 त्यक्ताग्नयः (for कत्य°). G2 आत्मा स (for आत्मानः). M4 तस्य (for कस्य). — G3 om. line 2549. —(L. 2549) G2 कं (for

कतरस्मिन्हुते स्थाने किं व्रजेदाग्निहोत्रिकः ।
अग्निहोत्रनिमित्तं च किमुत्पन्नं पुरानघ । [ 2550 ]
कथमेवाथ हूयन्ते प्रीयन्ते च सुराः कथम् ।
विधिवन्मन्त्रवद्भक्त्या पूजितास्त्वग्नयः कथम् ।
कां गतिं वदतां श्रेष्ठ नयन्ति ह्यग्निहोत्रिणः ।
दुर्हुताश्चापि भगवन्नविज्ञातास्त्रयोऽग्नयः ।
किमाहिताग्नेः कुर्वन्ति दुश्चीर्णा वापि केशव । [ 2555 ]
उत्सन्नाग्निस्तु पापात्मा कां योनिं देव गच्छति ।
एतत्सर्वं समासेन भक्त्या ह्युपगतस्य मे ।
वक्तुमर्हसि सर्वज्ञ सर्वावास नमोऽस्तु ते ।

भगवानुवाच ।

शृणु राजन्महापुण्यमिदं धर्मामृतं परम् ।
यत्तु तारयते युक्तान्ब्राह्मणानग्निहोत्रिणः । [ 2560 ]
ब्रह्मत्वेनासृजं लोकानहमादौ महाद्युते ।
सृष्टोऽग्निर्मुखतः पूर्वं लोकानां हितकाम्यया ।
यस्मादग्रे स भूतानां सर्वेषां निर्मितो मया ।
तस्मादग्नीत्यभिहितः पुराणज्ञैर्मनीषिणः ।
यस्मात्तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते । [ 2565 ]
आहुतिर्दीप्यमानाय तस्मादग्नीति कीर्त्यते ।
यस्माच्च नयति ह्यग्र्यां गतिं विप्रान्सुपूजितः ।
तस्माच्च नयनाद्राजन्वेदेष्वग्नीति कीर्त्यते ।
यस्माच्च दुर्हुतः सोऽयमलं भक्षयितुं क्षणात् ।
यजमानं नरश्रेष्ठ क्रव्यादोऽग्निस्ततः स्मृतः । [ 2570 ]
सर्वभूतात्मको राजन्देवानामेष वै मुखम् ।
प्रथमं मन्मुखात्सृष्टो लोकार्थे पचनः प्रभुः ।
सृष्टमात्रो जगत्सर्वमत्तुमैच्छत्पुरा खलु ।
ततः प्रशमितः सोऽग्निरुपास्यैव मया पुरा ।
सततोपासनात्सोऽयमौपासन इति स्मृतः । [ 2575 ]
आहुतिः सर्वमाख्यातं तस्मिन्वसति सोऽनलः ।
आवसथ्य इति ख्यातस्तेनासौ ब्रह्मवादिभिः ।
तस्मिन्पञ्च महायज्ञा वर्तन्ते यस्य धर्मतः ।
सोममण्डलमध्येन गतिस्तस्य द्विजन्मनः ।
ते च सप्तर्षयः सिद्धाः संयतेन्द्रियबुद्धयः । [ 2580 ]
गता ह्यमरसायुज्यमेकाग्र्यर्चनतत्पराः ।
अपरे चावसथ्यं च पचनाग्निं प्रचक्षते ।
तस्मिन्पञ्च महायज्ञा वैश्वदेवश्च वर्तते ।
स्थालीपाकं च गार्ह्यं च सर्वे ह्यस्मिन्प्रतिष्ठिताः ।

किं ). T2 पृच्छेद् ( for व्रजेद् ). T G2 -होत्रकः. —( L. 2550 ) M2 अग्नित्रय- ( for °होत्र- ). —( L. 2551 ) M4 सुरैः. —( L. 2552 ) T1 च ; T2 G3 हि ( for तु ). —( L. 2553 ) M2 के नयंति ( for नयन्ति हि ). T2 M3.4 -होत्रिणं. —( L. 2554 ) G2 सुहुताश्च ; M4 अकृ° ( for दुर्हु° ). M2 [अ]वधूताश्च ( for [अ]पि भगवन् ) and तथा ( for त्रयो ). —M4 om. line 2555. —( L. 2555 ) G2 दुश्चीर्णं. —( L. 2556 ) T विच्छिन्नाग्निस्तु पापात्मा ; G3 M3 उच्छि( M3 °त्स )न्नाग्निस्तु पा° ( for the prior half ). M2 यास्यति ( for गच्छ° ). T कां योनिमधिगच्छति. —( L. 2557 ) M3 [अ]भ्युप- ( for ह्युप- ). —( L. 2558 ) G1.2 सर्वेषां च ; Kumbh. ed. सर्वाधिकं ; Madras ed. °त्मक ( for °वास ). —( L. 2559 ) T1 महाभाग ; G2 यथापुण्यम् ( for महापुण्यम् ). M2 इमं ( for इदं ). M2 महत् ; M3 वरं ( for परम् ). —( L. 2560 ) M2 कारयते ( for तार° ). G2 यज्ञान् ( for युक्तान् ). —( L. 2561 ) M2.3 [अ]सृजत् ( for [अ]सृजं ). T महीपते ( for महाद्युते ). —( L. 2562 ) T1 सृष्टाग्नि- ; T2 सृष्टोग्नि- ; G3 सृष्टाग्निं ( for सृष्टोऽग्निर् ). —( L. 2564 ) M4 अग्निस्तु ( for अग्नीति ). T2 [अ]भिहितं. T G3 M4 महर्षिभिः ; M2.3 महात्मभिः ( for मनीषिणः ). —M4 om. lines 2566–2568. —( L. 2566 ) T आहुतिं ; G2 आहुतीं ( for °तिर् ). T अग्निश्च ; G1.2 M3 चा( G2 त्व )ग्नीति ( for अग्नीति ). G1.2 कथ्यते ; M2 चोच्यते ( for कीर्त्यते ). —M2 om. ( hapl. ) lines 2567–2568. —( L. 2567 ) G1.2 तु नयति ; G3 M2 नयतीति ( for °ति हि ). T G1 [अ]ग्र्यं. M3 विप्रः. G2 सुपूजितान्. —( L. 2568 ) Madras ed. यस्मात् ( for त° ). G1.2 कथ्यते ( for कीर्त्य° ). —( L. 2569 ) M4 तु ( for च ). T दुर्हृतः ; G3 दुर्हृदः ( sic ) ; M2.3 जुहुतं ( for दुर्हुतः ). —( L. 2571 ) M2.3 एव ( for एष ). —( L. 2572 ) T पावकः प्रभुः ; G3 पचनात्प्रभोः ; M2.3 पावनः प्रभुः ; M4 वंचन- ( *sup. lin.* पचन )प्रदः. —( L. 2573 ) G3 सृष्टमात्रे. M2 हर्तुम् ( for अत्तुम् ). G3 [अ]खिलं ( for खलु ). —( L. 2574 ) M4 आहुत्या ( for ततः प्र- ). G3 M4 उपास्यत ( for °स्यैव ). T उपासा( T2 °सी )नो मया पुनः ( for the post. half ). —( L. 2575 ) M4 पूर्वम् ( for सोऽयम् ). G2 औपासनमिति स्मृतं ( for the post. half ). —( L. 2576 ) M2 पूर्वम् ( for सर्वम् ). T आख्याता ; G1.2 °ति. —( L. 2577 ) T1 अवधार्य ( for आवसथ्य ). —( L. 2580 ) Madras ed. तेन ( for ते च ). —( L. 2581 ) G1 गत्वा ( for गता ). —( L. 2582 ) T2 तं ; M4 तु ( for the second च ). —( L. 2583 ) M3.4 वैश्वदेवं ( for °देवश् ). —( L. 2584 ) T2 G2 M3 गार्ह्यं. M2.4 स्थालीपाकश्च गृ( M2 °कादिगृ )ह्याश्च ( for the prior half ). T G1 [s]पि ;

गृह्यकर्मवहो यस्मात्तस्माद्गृहपतिस्तु सः। [ 2585 ]
औपासनं चावसथ्यं सभ्यं पचनपावकम्।
आहुर्ब्रह्मविदः केचिन्मतमेतन्ममापि च।
अग्निहोत्रप्रकारं तु शृणु राजन्समाहितः।
त्रयाणां गुणनामानि वह्नीनामुच्यते मया।
गृहाणां हि पतित्वं हि गृहपत्यमिति स्मृतम्। [ 2590 ]
गृहपत्यं तु यस्यासीत्तस्यासीद्गार्हपत्यता।
यजमानं तु यस्मात्तु दक्षिणां तु गतिं नयेत्।
दक्षिणाग्निं तमाहुस्तं दक्षिणायतनं द्विजाः।
आहुतिः सर्वमाख्यातं हवनं हव्यवाहनम्।
सर्वहव्यवहो वह्निर्गतश्चाहवनीयताम्। [ 2595 ]
यस्त्वावसथ्यं जुहुयान्मूलाग्निं विधिवद्द्विजः।
आवसथ्यं तु ये चाग्निं पचनाग्निं प्रचक्षते।
तेषां स भागतो वह्निः सभ्य इत्यभिधीयते।
आवसथ्यस्तु यो वह्निः प्रथमः स प्रजापतिः।
ब्रह्मा च गार्हपत्योऽग्निस्तस्मादेव तु सो भवेत्। [ 2600 ]
दक्षिणाग्निस्त्वयं रुद्रः क्रोधात्मा चण्ड एव सः।
अहमाहवनीयोऽग्निरा होमाद्यस्य वै मुखे।
सभ्योऽग्निः पञ्चमो यस्तु स्कन्द एव नराधिप।
पृथिवी गार्हपत्योऽग्निरन्तरिक्षं च दक्षिणः।
स्वर्ग आहवनीयोऽग्निरेवमग्नित्रयं स्मृतम्। [ 2605 ]
वृत्तो हि गार्हपत्योऽग्निर्यस्माद्वृत्ता च मेदिनी।
अर्धचन्द्राकृतिः खं वै दक्षिणाग्निस्तथा भवेत्।
चतुरश्रं ततः स्वर्गं निर्मलं यन्निरामयम्।
तस्मादाहवनीयोऽग्निश्चतुरश्रो भवेन्नृप।
जुहुयाद्गार्हपत्यं यो भुवं जयति स द्विजः। [ 2610 ]
जुहोति दक्षिणाग्निं यः स जयत्यन्तरिक्षकम्।
पृथिवीमन्तरिक्षं च दिवं चर्षिगणैः सह।
जयत्याहवनीयं यो जुहुयाद्भक्तिमान्द्विजः।
आभिमुख्येन होमस्तु यस्य यज्ञेषु वर्तते।
तेनाप्याहवनीयत्वं गतो वह्निर्महाद्युतिः। [ 2615 ]
आ होमाद्योऽग्निहोत्रेषु यज्ञे वा यत्र सर्वशः।
यस्मादस्मिन्प्रवर्तन्ते ततो ह्याहवनीयता।
यस्त्वावसथ्यं जुहुयान्मूलाग्निं विधिवद्द्विजः।
स तु सप्तर्षिलोकेषु सपत्नीकः प्रमोदते।
यश्चाप्युपासते सभ्यं विधिवत्प्रयतात्मवान्। [ 2620 ]

---

$G_2$ $M_3$ च ( for हि ). —( L. 2585 ) T $G_1$ -कर्मवशो; $M_4$ °सहो ( for °वहो ). T $G_1$ स्मृतः ( for तु सः ). —( L. 2586 ) T गार्ह्यं; $G_3$ सह्यं; $M_2$ गृह्यं ( for सभ्यं ). —( L. 2588 ) $G_2$ -प्रकारं च; $G_3$ -प्रमाणं तु; $M_3$ -प्रकरणं. —( L. 2589 ) T $G_1$ सदा ( for मया ). —( L. 2590 ) $M_2$ गार्हपत्यम् ( for गृह° ). —( L. 2591 ) T [अ]स्ति ( for [आ]सीत् ). $G_1$ तस्मा*द्; $G_2$ तस्मात्तद्; $M_{2.4}$ तस्य तद्; $M_3$ स तस्माद्; Madras ed. तत्तस्माद् ( for तस्यासीद् ). —( L. 2592 ) T यश्चाग्निर् ( for यस्मात्तु ). $M_4$ यजमानस्य यस्माद्धि ( for the prior half ). —( L. 2593 ) $M_2$ तद् ( for तम् ). T $G_2$ तद्; $M_4$ तु; Madras ed. ते ( for the second तं ). $M_{2.3}$ ( *sup. lin.* as above ) दाक्षिणत्वाच्च तद्विदः ( for the post. half ). —( L. 2594 ) $T_1$ आख्याता; $T_2$ $G_2$ °ति. $G_2$ पचनं; $M_{2.3}$ वहनं ( for हवनं ). Madras ed. हव्यं वै वहनं स्मृतं ( for the post. half ). — After line 2595, $M_2$ reads lines 2614–2617. $M_{2-4}$ om. line 2596. —( L. 2596 ) $G_2$ यद्वा ( for यस्तु ). — $G_3$ om. ( hapl. ) lines 2597–2618. —( L. 2597 ) T आवसथ्ये. $T_1$ यश्चापि; $T_2$ $G_2$ यश्चाग्निः ( $G_2$ °ग्निं ); Madras ed. तं चाग्निं. $M_2$ पाचनाग्निं. —( L. 2598 ) $G_{1.2}$ सभ्यम्. —( L. 2600 ) $M_2$ वै; $M_4$ तु ( for च ). $G_{1.2}$ तस्मिन् ( for तस्माद् ). $G_{1.2}$ $M_2$ हि ( for तु ). $T_1$ $G_1$ $M_4$ [ऽ]भवत् ( for भवेत् ). —( L. 2601 ) $G_1$ $M_{2.3}$ स्वयं ( for त्वयं ). $M_4$ च ( for सः ). —( L. 2603 ) $M_{2.4}$ सभ्याग्निः. $T_2$ [ऽ]ग्निस् ( for यस् ). —( L. 2604 ) $G_2$ दक्षिणं; $M_3$ °णा. —( L. 2605 ) $G_{1.2}$ $M_{2-4}$ स्वर्गम्. —( L. 2606 ) $G_2$ [ऽ]यं; $M_2$ वै; $M_4$ च ( for हि ). —( L. 2607 ) T द्यौर् ( for खं ). —( L. 2608 ) $M_{2.3}$ ( *inf. lin.* ) भवेत् ( for ततः ). Madras ed. तु ( for यन् ). $M_3$ निराश्रयं ( for °मयम् ). T चतुरश्रो यतः स्वर्गो निर्मितोयं निरामयः. —( L. 2609 ) T विधीयते ( for भवेन्नृप ). —( L. 2610 ) T जुहुयाद्गार्हपत्याग्नौ यो भुवं जयते द्विजः. —( L. 2611 ) $M_2$ जुहुयाद् ( for जुहोति ). T जुहोति दक्षिणं यस्तु ( for the prior half ). —( L. 2612 ) $G_{1.2}$ ऋषिगणैः ( for चर्षि° ). —( L. 2613 ) T [आ]हवनीयो. $M_2$ भक्तितो; $M_4$ शक्तिमान् ( for भक्ति° ). $G_1$ नरः; $M_2$ मयि ( for द्विजः ). —( L. 2615 ) T $M_4$ हि ( for [अ]पि ). $M_3$ [आ]हवनीयस्तु ( for °यत्वं ). $G_1$ महात्मनः ( for °द्युतिः ). —( L. 2616 ) $G_2$ अग्नि- ( for योऽग्नि- ). $M_3$ यज्ञो वा; $M_4$ यज्ञा ये; Madras ed. यज्ञैर्वा ( for यज्ञे वा ). —( L. 2617 ) $M_3$ अग्नि ( for अस्मिन् ). $T_1$ मुखाग्नि-स*; $T_2$ तेन ( for ततो ). —( L. 2618 ) T मुखाग्नि- ( $T_2$ °ग्निं ) ( for मूलाग्निं ). —( L. 2619 ) $M_2$ वै ( for तु ). T -लोके तु ( for -लोकेषु ). $M_3$ स सप्त- ऋषिलोकेषु. —( L. 2620 ) $M_2$ [अ]भ्युपासते. —( L.

जयेत्स वाङ्मयं सर्वं तथा त्वृषिसभामपि ।
अग्नीनामथ वाग्नेस्तु यस्य होमः प्रदीयते ।
इष्टो भवति सर्वाग्निरग्निहोत्रं च तद्भवेत् ।
त्रयाणां यजमानस्य चातुर्होत्रमिति स्मृतम् ।
हो इत्येव विषादो वै विषादो दुःखमुच्यते । [ 2625 ]
दुःखं तापत्रयं प्रोक्तं तापं हि नरकं विदुः ।
तस्माद्वै त्रायते दुःखाद्यजमानं हुतोऽनलः ।
तस्मात्तु विधिवत्प्रोक्तमग्निहोत्रमिति श्रुतौ ।
तदग्निहोत्रं सृष्टं वै ब्रह्मणा लोककर्तृणा ।
वेदाश्चाप्यग्निहोत्रार्थं जज्ञिरे स्वयमेव तु । [ 2630 ]
अग्निहोत्रफला वेदा शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दानभोगफलं धनम् ।
त्रिवेदमन्त्रसंयोगादग्निहोत्रं प्रवर्तते ।
ऋग्यजुःसामभिः पुण्यैः स्थाप्यते सूत्रसंयुतैः ।
वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप । [ 2635 ]
वसन्तो ब्राह्मणः प्रोक्तो वेदयोनिः स उच्यते ।
अग्न्याधेयं तु येनाथ वसन्ते क्रियते नृप ।
तस्य श्रीर्ब्रह्मवृद्धिश्च ब्राह्मणस्य विवर्धते ।
क्षत्रियस्याग्निराधेयो ग्रीष्मे श्रेष्ठः स वै नृप ।
येनाधानं तु वै ग्रीष्मे क्रियते तस्य वर्धते । [ 2640 ]
श्रीः प्रजाः पशवश्चैव वित्तं तेजो बलं यशः ।
शरद्रात्रेऽथ वैश्यस्य ह्याधानीयो हुताशनः ।
शरद्रात्रं स्वयं वैश्यो वैश्ययोनिः स उच्यते ।
शरद्याधानमेवं वै क्रियते येन पाण्डव ।
तस्यापि श्रीः प्रजायुश्च पशवोऽर्थश्च वर्धते । [ 2645 ]
पशवः सर्व एवैते त्रिभिर्वेदैरलंकृताः ।
अग्निहोत्रात्प्रवर्तन्ते यैरिदं ध्रियते जगत् ।
ग्राम्यारण्याश्च पशवस्तथा वृक्षास्तृणानि च ।
फलान्योषधयश्चापि ह्यग्निहोत्रकृते हि ताः ।
रसाः स्नेहास्तथा गन्धा रत्नानि मणयस्तथा । [ 2650 ]
काञ्चनानि च लोहानि ह्यग्निहोत्रकृतेऽभवन् ।
आयुर्वेदो धनुर्वेदो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं च तत्सर्वमग्निहोत्रकृते कृतम् ।
छन्दः शिक्षाश्च कल्पाश्च तथा व्याकरणं नृप ।

---

2621 ) $G_2$ $M_{2-4}$ स जयेद् ( by transp. ); $G_3$ स जयो. $M_{2,3}$ यामयं; $M_4$ दुर्जयं ( for वाङ्मयं ). $G_2$ अपि ( for सर्वं ). $G_{1,2}$ तथा ऋषि-; $M_2$ तथाप्यृषि-; $M_3$ तथा चर्षि- ( for तथा त्वृषि° ). —( L. 2622 ) $M_2$ यतो ( for यस्य ). $M_{3,4}$ प्रतीयते ( for प्रदी° ). — $G_1$ om. lines 2623–2625. —( L. 2623 ) $G_2$ $M_{2-4}$ सर्वा( $M_4$ °र्वो )ग्निर्. —( L. 2624 ) $G_2$ त्राणाद्वै; $M_2$ त्रासाद्वै; $M_3$ (*sup. lin.* as above) त्रासनाद्वै ( hypermetric ); Madras ed. त्राणाय ( for त्रयाणां ). $M_{2-4}$ चाग्निहोत्रम् ( for चातुर्हो° ). $M_2$ अतिस्मृतः ( for इति स्मृतम् ). —( L. 2625 ) $G_{2,3}$ $M_4$ हो इत्येष; Kumbh. ed. हो इज्येषु. $G_3$ विवादो ( for विषादो ). —( L. 2626 ) T $G_{1,2}$ तावत्रयं ( for तापत्रयं ). $M_4$ च ( for हि ). —After line 2626, $G_{1,2}$ $M_3$ ins.:

आध्यात्मिकं चाधिदैवमाधिभौतिकमेव च ।
एतत्तापत्रयं प्रोक्तमात्मविद्भिः परंतप ।
[ ( L. 1 ) $G_2$ आधिभूतिकम्. ]

—( L. 2627 ) $G_{1,2}$ $M_3$ यस्माद्. —( L. 2628 ) $G_3$ स्रुतं. —(L. 2630) $G_1$ -होत्राश्च ( sic ); $G_2$ -होत्रं च; $G_3$ होत्रात्तु; $M_3$ (*sup. lin.*) -होत्रं तु ( for -होत्रार्थं ). —( L. 2632 ) $G_3$ $M_{2-4}$ नारी ( for दारा ). $T_1$ धानाभोग-; $G_{1,2}$ दत्तभुक्त-; $M_4$ दानहोम- ( for °भोग- ). —( L. 2633 ) $G_3$ $M_{2,3}$ प्रचक्षते ( for प्रवर्तते ). —( L. 2635 ) T $G_2$ [आ]दाव् ( for स्याद् ). —( L. 2636 ) $G_{1,2}$ $M_3$ ज्ञेयो ( for प्रोक्तो ). $M_{2,3}$ ब्रह्म- ( for वेद- ). —( L. 2637 ) $M_2$ अग्निर्धानं ( sic ); $M_4$ अग्न्याधानं ( for °धेयं ). $G_{1,2}$ [ऽ]नघ ( for नृप ). —( L. 2638 ) $M_2$ -पुष्टिश् ( for -वृद्धिश् ). $G_3$ ब्राह्मणं स ( for °णस्य ). —( L. 2639 ) $T_2$ $G_{1,3}$ श्रेष्ठे. T तथैव च; $M_2$ स उच्यते ( for स वै नृप ). —( L. 2640 ) $M_3$ योऽग्न्याधानं ( for येना° ). —( L. 2641 ) T $G_3$ $M_3$ ( *sup. lin.* ) प्रज्ञा ( for प्रजाः ). —( L. 2642 ) $T_2$ शरद्रात्रौ; $G_{1,2}$ °द्रुतौ; $G_3$ °त्प्राप्ते ( for °द्रात्रे ). T $G_{1,2}$ तु ( for ऽथ ). T $G_1$ [अ]पि ( for हि ). $G_1$ [आ]धानयो ( sic ); $M_4$ [अ]ग्न्याधेयो ( for [आ]धानीयो ). —( L. 2643 ) $T_1$ $M_1$ शरद्रात्रः; $T_2$ °द्रात्रिः; $G_3$ °द्रात्रीः ( for °द्रात्रं ). —( L. 2644 ) $M_4$ चैव ( for येन ). —( L. 2645 ) $G_{2,3}$ $M_3$ [आ]युः ( for [अ]पि ). $G_3$ $M_3$ प्रजापुष्टिः; $M_2$ °श्चायुः ( for °युश्च ). T चैव ( for ऽर्थश्च ). —( L. 2647 ) $T_2$ तैरेव ( for यैरिदं ). $G_3$ यैरिंद्रियगतैर्जगत्; $M_2$ यैरिदं प्रीयते ज° (for the post. half). —( L. 2648 ) $M_2$ वृक्ष- ( for वृक्षास् ). —( L. 2649 ) $M_{3,3}$ [औ]षधयश्. $M_4$ फलानि च बहून्यासन् ( for the prior half ). $G_1$ $M_4$ अग्नि-; $M_{2,3}$ चाग्नि- ( for ह्यग्नि- ). $M_3$ -होत्रे. $G_2$ हविः; $G_3$ च ताः; $M_2$ कृतं; $M_3$ च हि ( for हि ताः ). —( L. 2651 ) $M_2$ कांचनाद्यानि ( for °नि च ). $M_{2,3}$ च ( for हि ). $T_2$ $G_3$ $M_2$ भवेत्; $G_1$ कृतं ( for ऽभवन् ). — $M_2$ om. lines 2652–2653. —( L. 2652 ) Lacuna in $G_1$ for the prior half. $M_4$ वेदाश्चैव च सर्वशः ( for the post. half ). —( L. 2654 ) $T_2$ $G_1$ $M_{3,4}$ शिक्षा. $T_2$ कल्पश्; $G_1$ कल्पं. $G_{1,2}$ तथा व्याकर-

शास्त्रं ज्योतिर्निरुक्तं चाप्यग्निहोत्रकृते कृतम् । [ 2655 ]
इतिहासपुराणं च गाथाश्चोपनिषत्तथा ।
आथर्वणानि कर्माणि चाग्निहोत्रकृते कृतम् ।
यच्चैतस्यां पृथिव्यां हि किंचिदस्ति चराचरम् ।
तत्सर्वमग्निहोत्रस्य कृते सृष्टं स्वयंभुवा ।
अग्निहोत्रस्य दर्शस्य पौर्णमासस्य चाप्यथ । [ 2660 ]
यूपेष्टिपशुबन्धानां सोमपानक्रियावताम् ।
तिथिनक्षत्रयोगानां मुहूर्तकरणात्मनाम् ।
कालस्य वेदनार्थं तु ज्योतिर्ज्ञानं कृतं पुरा ।
ऋग्यजुःसाममन्त्राणां श्लोकतत्त्वार्थचिन्तनात् ।
प्रत्यापत्तिविकल्पानां छन्दो ज्ञानं प्रकल्पितम् । [ 2665 ]
वर्णाक्षरपदार्थानां संधिलिङ्गं विवक्षितम् ।
नामधातुविवेकार्थं पुरा व्याकरणं कृतम् ।
यूपवेद्यध्वरार्थं तु प्रोक्षणश्रवणाय तु ।
यज्ञदैवतयोगार्थं शिक्षाज्ञानं प्रकल्पितम् ।
यज्ञपात्रपवित्रार्थं द्रव्यसंभारणाय च । [ 2670 ]
सर्वयज्ञविकल्पाय पुराकल्पं प्रकल्पितम् ।
नामधातुविभक्तीनां तत्त्वार्थनियमाय च ।
सर्ववेदनिरुक्तानां निरुक्तमृषिभिः कृतम् ।
वेद्यर्थं पृथिवी सृष्टा संभारार्थं तथैव च ।
इध्मार्थमथ यूपार्थं ब्रह्मा चक्रे वनस्पतिम् । [ 2675 ]
ग्राम्यारण्याश्च पशवो जायन्ते यज्ञकारणात् ।
मन्त्राणां विनियोगं च प्रोपिता श्रावणं तथा ।
अनूयाजप्रयाजांश्च मरुतां शंसिनस्तथा ।
उद्गातृंश्चैव साम्नां वै बलिप्रस्थानमेव च ।
विष्णुक्रमाणां क्रमणं दक्षिणावभृथं तथा । [ 2680 ]
त्रिकालमर्चनं चैव स्थानेपूपहृतं तथा ।
देवताग्रहणं मोक्षं हविषां श्रवणं तथा ।
नावबुध्यन्ति ये विप्रा निन्दन्ति च पशोर्वधम् ।
ते यान्ति नरकं घोरं रौरवं तमसावृतम् ।
शतवर्षसहस्राणि तत्र स्थित्वा नराधमाः । [ 268
क्रिमिभिर्भक्ष्यमाणाश्च तिष्ठेयुः पूयशोणिते ।
यूपास्तु मन्त्रसंस्कारैरेषां वै पशवस्तथा ।
यजमानेन सहिताः स्वर्गं यान्ति नरेश्वर ।
यावत्कालं हि यज्वा वै स्वर्गलोके महीयते ।
तावत्कालं प्रमोदन्ते पशवो ह्यध्वरे हताः । [ 269

णानि च. — ( L. 2655 ) Lacuna in G1. T2 G3 M2 ज्योतिर्ज्ञानं; M4 ज्योतिःशास्त्रं. T हि; M2 om. ( for [अ]पि ). M2 भवेत् ( for कृतम् ). — ( L. 2656 ) M3.4 इतिहासः. T1 G1 M2 -पुराणाश्. M3 वा ( for the second च ). — ( L. 2657 ) G1.3 अथर्वणानि. M2 भवेत् ( for कृतम् ). — ( L. 2658 ) T [ए]तत्स्यात्; G1 M4 तस्यां ( for [ए]तस्यां ). G3 तु ( for हि ). — ( L. 2660 ) M3 पूर्णमासस्य. — ( L. 2662 ) G1 -करणात्मिकः; G2 °णात्मकं. — ( L. 2663 ) M2 कालसं- ( for कालस्य ). T तज् ( for तु ). M4 om. (hapl.) from the post. half up to the prior half of line 2668. G1 ज्योतिर्ज्ञानि- ( for °र्ज्ञानं ); — ( L. 2665 ) M2 -विकल्पार्थं. T शब्द- ( for छन्दो ). — After line 2665, T reads lines 2670–2672. — ( L. 2666 ) M3 संधि. G2 -लिंग-. T2 संधिलिंगविवक्षवः; G1 °गविवक्षितां; M2 °गविभक्तितः ( for the post. half ). — ( L. 2667 ) T -विकल्पार्थम्; M2 -विधेयार्थं ( for -विवेकार्थं ). T इदं ( for पुरा ). G1.2 पुराणकरणं स्मृतं ( for the post. half ). — ( L. 2668 ) M2 यूपवेदाध्वरार्थं तु; M3 °वैद्यस्वरार्थं तु ( for the prior half ). T M2 प्रोक्षणश्रा- ( M2 °णं श्रा )वणाय तु; G1 °णाश्रवणादिकं; G3 M3 °णाश्रवणाय तु. — ( L. 2670 ) G2.3 M4 -संभरणाय. — ( L. 2671 ) M2 -विकल्पार्थं ( for °ल्पाय ). — ( L. 2672 ) G1 नानाधातु- ( for नाम° ). G1.2 -विकल्पानां; M3 -विभक्तानां. M4 तत्त्वार्थं. G1 -नियमानि ( for °माय — ( L. 2674 ) G3 विद्धि तां; M3 पृथिवीं. G3 M4 सृ — ( L. 2675 ) T स्रुगर्थम्; G1 M4 इज्यार्थम् ( for इध्मा° G3 सर्व- ( for अथ ). M2.4 वनस्पतीन्. — ( L. 2676 M2 सूयंते ( for जा° ). M4 याग- ( for यज्ञ- ). — ( L. 2677 ) T1 प्रेषितं श्रवणं; T2 M3.4 प्रेषिताश्रा( M3 °श्र वणं; G1.2 प्रेक्षितश्राप( G2 °व )कं; Madras ed. प्रेषि श्रवणं. — ( L. 2678 ) T1 G3 अनुज्याजांश्च मरुतां G1 अनूज्याजाश्च प्रयाजाश्च ( hypermetric ) ( for th prior half ). T M4 शंसनं ( for शंसिनस् ). — ( L. 2679 ) M3 उद्गात्रं; M4 उद्गातुश् ( for °तॄंश् ). M उद्गातृत्वं च साम्नां वै ( for the prior half ). G2 प्रवि ( for बलि- ). — After line 2679, T1 reads lines 2682–2684, repeating lines 2683–2684 after line 2681. — ( L. 2680 ) G3 क्रमणाद् ( for °णं ). M4 दक्षिणावभृथस्. — ( L. 2681 ) M4 [उ]पभृतं ( for °हृतं ). — ( L. 2682 ) M2 -श्रवणं ( for -ग्रहणं ). T1 चैव ( for मोक्षं ). G1 M4 श्रपणं ( for श्रवणं ). — ( L. 2685 ) G1 शतं. M3 तत्र ( for स्थित्वा ). — ( L. 2686 ) T ते ( for च ). — After line 2686, G1.2 read lines 2690–2695. — ( L. 2687 ) M2 ओषध्या; M3 रक्षां वै ( for एषां वै ). — ( L. 2688 ) T G1 सहितः. — ( L. 2689 ) T1 यज्या. M4 स्वर्गे ( for -स्वर्ग ). — After line 2689, G1.2 ins. :

वृक्षा यूपत्वमिच्छन्ति पशुत्वं पशवस्तथा ।
तृणानीच्छन्ति दर्भत्वमोषध्यश्च हविष्यताम् ।
सोमत्वं च लताः सर्वा वेदित्वं वै वसुंधरा ।
यस्मात्पशुत्वमिच्छन्ति पशवः स्वर्गलिप्सया ।
तस्मात्पशुवधे हिंसा नास्ति यज्ञेषु पाण्डव । [ 2695 ]
अहिंसा वैदिकं कर्म ब्रह्मकर्मेति तत्स्मृतम् ।
वेदोक्तं ये न कुर्वन्ति हिंसाबुद्ध्या क्रतुं द्विजाः ।
सद्यः शूद्रत्वमायान्ति प्रेत्य चण्डालतामपि ।
गावो यज्ञार्थमुत्पन्ना दक्षिणार्थं तथैव च ।
सुवर्णं रजतं चैव पात्री कुम्भार्थमेव च । [ 2700 ]
दर्भाः संस्तरणार्थं तु रक्षसां रक्षणाय च ।
यजनार्थं द्विजाः सृष्टास्तारका दिवि देवताः ।
क्षत्रिया रक्षणार्थं तु वैश्या वार्तानिमित्ततः ।
शुश्रूषार्थं त्रयाणां तु शूद्राः सृष्टाः स्वयंभुवा ।
एवमेतज्जगत्सर्वमग्निहोत्रकृते कृतम् । [ 2705 ]
नावबुध्यन्ति ये चैतन्नरास्तु तमसा वृताः ।
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम् ।
रौरवाद्विप्रमुक्तास्तु क्रिमियोनिं व्रजन्ति ते ।
यथोक्तमग्निहोत्राणां शुश्रूषन्ति च ये द्विजाः ।
तैर्दत्तं सुहुतं चेष्टं दत्तमध्यापितं भवेत् । [ 2710 ]
एवमिष्टं च पूर्तं च यद्विप्रैः क्रियते नृप ।
तत्सर्वं सम्यगाहृत्य चादित्ये स्थापयाम्यहम् ।
मया स्थापितमादित्ये लोकस्य सुकृतं हि तत् ।
धारयेत्तत्सहस्रांशुः सुकृतं ह्यग्निहोत्रिणाम् ।
यावत्कालं तु तिष्ठन्ति लोके चाप्यग्निहोत्रिणः । [ 2715 ]
तावत्तेषां हि पुण्येन दीप्यन्ते रविणाम्बरे ।
स्वर्गे स्वर्गं गतानां तु वीर्याद्भवति वीर्यवान् ।
तत्र ते ह्युपयुञ्जन्ति ह्यग्निहोत्रस्य यत्फलम् ।
समानरूपा देवानां तिष्ठन्त्याभूतसंप्लवम् ।
वृथाग्निना च ये केचिद्दह्यन्ते ह्यग्निहोत्रिणः । [ 2720 ]
न तेऽग्निहोत्रिणां लोकं मनसापि व्रजन्ति वै ।
वीरघ्नास्ते दुराचाराः सुदरिद्रा नराधमाः ।
विकला व्याधिताश्चापि जायन्ते शूद्रयोनिषु ।
तस्मादप्रोषितैर्नित्यमग्निहोत्रं द्विजातिभिः ।
होतव्यं विधिवद्राजन्नूर्ध्वमिच्छन्ति ये गतिम् । [ 2725 ]
आत्मवत्तत्र मन्तव्यमग्निहोत्रं युधिष्ठिर ।
न त्याज्यं क्षणमप्येतद्गृहीतव्यं द्विजातिभिः ।
वृद्धत्वेऽप्यग्निहोत्रं वै गृह्णन्ति विधिवद्द्विजाः ।
शूद्रान्नाद्विरता दान्ताः संयतेन्द्रियबुद्धयः ।
पञ्चयज्ञपरा नित्यं क्रोधलोभविवर्जिताः । [ 2730 ]
द्विकालमतिथींश्चैव पूजयन्ति च भक्तितः ।
तेऽपि सूर्योदयप्रख्यैर्विमानैर्वायुवेगिभिः ।

---

तावत्कालं वसेयुस्ते पशवश्चापि हर्षिताः ।

—(L. 2690) $M_4$ हि (for प्र-). —(L. 2692) $G_{1,2}$ बर्हिस्त्वम्; Madras ed. बर्हिष्ट्वम् (for दर्भत्वम्). T वै (for च). —(L. 2693) T सर्वे (sic). $G_3$ $M_4$ च (for वै). —(L. 2696) $G_{1,2}$ तत्कृतं (for तत्स्मृतम्). —(L. 2698) Some MSS. चंडाळताम्. —(L. 2700) $M_4$ [अ]पि (for [ए]व). $G_3$ पात्र- (for पात्री). —(L. 2701) $G_1$ om. (-hapl.) from the post. half up to the prior half of line 2703. —(L. 2702) $M_3$ भुवि (for दिवि). —(L. 2705) T $G_3$ एव (for एतज्). —(L. 2706) T ना(T2 अ)वजानंति (for °बुध्यन्ति). $M_4$ यच् (for ये). T $G_3$ वेदान्; $G_1$ चैव; $G_2$ चैतं (sic) (for चैतन्). —(L. 2707) T प्र- (for ते). —(L. 2709) $M_2$ -होत्राणि. —(L. 2710) T तु तच्च; $G_3$ $M_{3,4}$ तु दत्तं (for दत्तं सु-). —(L. 2712) T $G_3$ तु समाहृत्य (for सम्यगा°) and आदित्ये (for चा°). —(L. 2713) $T_2$ $M_4$ हि यत्; $G_2$ हितं; $M_{2,3}$ कृतं (for हि तत्). —(L. 2714) $T_2$ $G_3$ स (for तत्). —(L. 2715) T $G_3$ हि (for तु). T $G_3$ $M_3$ लोकाग्र् (for लोके). —(L. 2716) T तेजोस्य; $G_1$ ते वह्नि-; $G_2$ [ए]व हि; $G_3$ $M_4$ ते बाह्य- (for तेषां हि). $M_{2,3}$ रविरंबरे. —(L. 2717) T $G_3$ $M_3$ न ते; $M_2$ स्वर्गात् (for स्वर्गे). T $G_3$ स्वर्ग- (for स्वर्गं). T नित्याद् (for वीर्याद्). —(L. 2718) $M_4$ [ऽ]प्युप- (for ह्युप-). $G_{1,2}$ -भुंजंति; $G_3$ -भुंजीत; $M_2$ -युज्यंति. $M_2$ च (for हि). $G_{1,2}$ तत् (for यत्). —(L. 2719) $M_2$ वेदानां (for देवानां). —(L. 2720) T $G_3$ वयं (sic) (for च ये). T वा; $G_3$ च (for हि). —(L. 2721) $M_{2,3}$ हि (for ते). $G_1$ लोके. $M_{2,3}$ ते (for वै). —(L. 2722) T विरक्तास् (for वीरघ्नास्). T मदोद्रिक्ता; $G_{1,2}$ दरिद्रास्तु (for सुदरिद्रा). —(L. 2724) $T_1$ चाप्रोपितैर् (for अप्रो°). T $G_{2,3}$ ह्यग्नि- (for अग्नि-). —(L. 2725) $M_{2,3}$ चेद् (for ये). $T_1$ ऊर्ध्वां गच्छंति ये गतिं (for the post. half). —(L. 2726) $G_{1,2}$ आत्मवन्नावमंतव्यम्; $M_{2,3}$ °जं सत्रमेतत्स्याद् (for the prior half). —(L. 2727) T एतद्धि; $G_{1,2}$ इत्येतद् (for अप्येतद्). $G_1$ प्रगृहीतं; $G_{2,3}$ $M_4$ ग्रहीतव्यं. —(L. 2728) $G_1$ पृथक्त्वे; $M_{2,3}$ वार्धक्ये (for वृद्धत्वे). $G_{1,2}$ $M_{2,3}$ ये (for वै). T पृथक्त्वे त्वग्निहोत्राण्यै. —(L. 2729) T शूद्रान्न- (for °न्नाद्). —(L. 2730) $T_2$ $G_3$ -रता (for -परा). $G_{1,2}$ लोभ

मम लोके प्रमोदन्ते दृष्ट्वा मां च युधिष्ठिर ।
मन्वन्तरं च तत्रैकं मोदित्वा द्विजसत्तमाः ।
इह मानुष्यके लोके जायन्ते द्विजसत्तमाः । [ 2735 ]
बालाहिताग्नयो ये च शूद्रान्नाद्विरताः सदा ।
क्रोधलोभविनिर्मुक्ताः प्रातःस्नानपरायणाः ।
यथोक्तमग्निहोत्रं वै जुह्वते विजितेन्द्रियाः ।
आतिथेयाः सदा सौम्या द्विकालं मत्परायणाः ।
ते यान्त्यपुनरावृत्तिं भित्त्वा चादित्यमण्डलम् । [ 2740 ]
मम लोकं सपत्नीका यानैः सूर्योदयप्रभैः ।
तत्र बालार्कसंकाशाः कामगाः कामरूपिणः ।
ऐश्वर्यगुणसंपन्नाः क्रीडन्ति च यथासुखम् ।
इत्येषा ह्याहिताग्नीनां विभूतिः पाण्डुनन्दन ।
ये च देवश्रुतिं केचिन्निन्दमाना ह्यबुद्धयः । [ 2745 ]
प्रमाणं न च कुर्वन्ति ते यान्ति ह्यक्षयं तमः ।
प्रमाणमितिहासं च वेदान्कुर्वन्ति ये द्विजाः ।
ते यान्त्यमरसायुज्यं नित्यमास्तिक्यबुद्धयः ।

Colophon.

युधिष्ठिर उवाच ।
चक्रायुध नमस्तेऽस्तु देवेश गरुडध्वज ।
चान्द्रायणविधिं पुण्यमाख्याहि भगवन्मम । [ 2750 ]
भगवानुवाच ।
शृणु पाण्डव तत्त्वेन सर्वपापप्रणाशनम् ।
पापिनो येन शुध्यन्ति तत्ते वक्ष्यामि सर्वशः ।
ब्राह्मणः क्षत्रियो वापि वैश्यो वा चरितव्रतः ।
यथावत्कर्तुकामो यस्तस्येयं प्रथमा क्रिया ।
शोधयेत्तु शरीरं स्वं पञ्चगव्येन यन्त्रितः । [ 2755 ]
शरीरं कक्षपक्षान्तं ततः कुर्वीत पावनम् ।
शुद्धवासाः शुचिर्भूत्वा मौञ्जीं बध्नीत मेखलाम् ।
पालाशदण्डमादाय ब्रह्मचारिव्रते स्थितः ।
कृतोपवासः पूर्वं तु शुक्लप्रतिपदि द्विजः ।
नदीसंगमतीर्थेषु शुचौ देशे गृहेऽपि वा । [ 2760 ]
गोमयेनोपलिप्तेऽथ स्थण्डिलेऽग्निं निधापयेत् ।
आघारावाज्यभागौ च प्रणवं व्याहृतीस्तथा ।
वारुणैश्चापि पञ्चैव हुत्वा सर्वान्यथाक्रमम् ।
सत्याय विष्णवे चेति ब्रह्मर्षिभ्योऽथ ब्रह्मणे ।

---

क्रोध-. — ( L. 2731 ) G3 M2.3 अतिथिं. T1 भोजयंति ( for पूज° ). M2.3 स ( for च ). G2 भक्षितः; M2.3 शक्तितः ( for भक्तितः ). — ( L. 2734 ) T1 G2 मोदिता; G1 मुदिता; M4 मोदंते. — M4 om. ( hapl. ) line 2735. — ( L. 2735 ) T G3 M2 भवंति ( for जायन्ते ). M3 -पुंगवाः ( for -सत्तमाः ). — ( L. 2736 ) T शीलाहिताग्नयो ( for बाला° ). — ( L. 2737 ) G2 व्रत- ( for प्रातः- ). — ( L. 2738 ) G1 जुह्वंति. M2.3 संयतेंद्रियाः ( for विजि° ). M4 ये जुह्वंति जितेंद्रियाः. — ( L. 2739 ) G1 अतिथेयाः. T सम्यग्; G3 सौख्या ( sic ) ( for सौम्या ). T1 नारायणपरायणाः; T2 चांद्रायण° ( for the post. half ). — ( L. 2740 ) G2 सूर्यस्य ( for चादित्य- ). — ( L. 2742 ) T G3 -चारिणः ( for -रूपिणः ). — ( L. 2743 ) T G3 -सुख- ( for -गुण- ). T क्रीडंते. — ( L. 2744 ) M4 श्रुतैषा ( for इत्येषा ). T1 G1 इत्येषाम्या( G1 °मा )हिताग्नीनां. — ( L. 2745 ) G1.2 श्रुतिं केचिन्निंद( G2 °द्य )माना श्रुतिं दूष्यंत्यबुद्धयः. — ( L. 2746 ) T प्र- ( for च ). T2 ये ( for ते ). M3 [ह्य]ह ( for हि ). G1.2 ते यांती-ह्यपि दुर्गतिं ( for the post. half ). — ( L. 2747 ) G1 सर्वांश्च; G2 सर्वान्हि ( for कुर्वन्ति ). M2.3 वेदान्वि-प्रांस्तथाध्वरान् ( for the post. half ). — Colophon. — *Sub-parvan :* T M2.4 श्री( T1 om. श्री )वैष्णवधर्म-शास्त्र; G3 धर्मशास्त्र; M3 विष्णुधर्म. — *Adhy. name :* M2-4 अग्निहोत्रप्रशंसा( M3 °शंसनं ). — *Adhy. no. :* T1 99; T2 108; G1.2 M4 98; G3 109; M2 15; M3 97. — ( L. 2749 ) T योगेश ( for देवेश ). — ( L. 2750 ) M4 चंद्रायण-. T पुरुषोत्तम ( for भगवन्मम ). — ( L. 2751 ) M3 सत्येन ( for तत्त्वेन ). — ( L. 2753 ) M2.3 वैश्यः शूद्रो ( for वापि वैश्यो ). — ( L. 2754 ) T2 [s]यं ( for यस् ). T2 यन्मन्ये ( for तस्येयं ). T प्रथम- ( for °मा ). — ( L. 2755 ) T1 शोधयेत्स्वं शरीरं तु; T2 °त्स्वशरीरे त्वत् ( for the prior half ). M3 मंत्रितः. G3 पंचगव्यैरतंत्रितः. — ( L. 2756 ) G2 सशिरः ( for शरीरं ). T G3 कक्षपक्षौ ( G3 °रक्षां ) ततः कुर्वन्; G1 M4 Madras ed. सशिरः कृष्णपक्षांते ( G1 °क्षौ तु; M4 [ *inf. lin.* ] °क्षस्य; Madras ed. °क्षे तु ( for the prior half ). M2.3 कुर्यात्तु ( for कुर्वीत ). G2 M4 ( *sup. lin.* ) वापन ( for पावनम् ). T G3 शिरसो वपनं तथा ( for the post. half ). — ( L. 2757 ) G1.2 शुक्लवासाः ( for शुद्ध° ). — ( L. 2758 ) M3 पलाश-; M4 पालाशं. G1 M4 ब्रह्मचारी. — ( L. 2759 ) M2-4 -प्रतिपदं. T द्विजाः. — ( L. 2760 ) G3 -देशेषु ( for -तीर्थेषु ). T नदीषु समदेशेषु ( for the prior half ). — ( L. 2761 ) G3 -लिप्तेन ( for -लिप्तेऽथ ). — ( L. 2762 ) T M2-4 प्रणव-. T G3 M4 व्याहृतिं. — ( L. 2763 ) G1.2 M3.4 वारुणं ( M4 °णां ) ( for °णैश् ). M2.3 [अ]थ; M4 [प]वं ( for [प]व ). — ( L. 2764 ) T M2.3

विश्वेभ्यश्चैव देवेभ्यः प्रजापतय एव च। [ 2765 ]
षट्कृत्वो जुहुयात्पश्चात्प्रायश्चित्ताहुतिं द्विजः।
ततः समापयेदग्निं शान्तिं कृत्वाथ पौष्टिकम्।
प्रणम्याग्निं च सोमं च भस्म धृत्वा तथात्मनि।
नदीं गत्वा विविक्तात्मा सोमाय वरुणाय च।
आदित्याय नमस्कृत्वा ततः स्नायात्समाहितः। [ 2770 ]
उत्तीर्योदकमाचम्य त्वासीनः पूर्वतोमुखः।
प्राणायामं ततः कृत्वा पवित्रैरभिषेचनम्।
आचान्तस्त्वभिवीक्षेत चोर्ध्वबाहुर्दिवाकरम्।
कृताञ्जलिपुटः पश्चात्कुर्याच्चैव प्रदक्षिणम्।
नारायणं वा रुद्रं वा ब्रह्माणमथ वापि वा। [ 2775 ]
वारुणं मन्त्रसूक्तं वा प्राग्भोजनमथापि वा।
वीरघ्नमृषभं वापि तथा चाप्यघमर्षणम्।
गायत्रीं मम वा देवीं सावित्रीं वा जपेत्ततः।
ततश्चाष्टादशं वापि सहस्रमथ वापरम्।
ततो मध्याह्नकाले वै पायसं यावकं हि वा। [ 2780 ]
पाचयित्वा प्रयत्नेन प्रयतः सुसमाहितः।
पात्रं तु सुसमादाय सौवर्णं राजतं तु वा।
ताम्रं वा मृन्मयं वापि औदुम्बरमथापि वा।
वृक्षाणां याज्ञियानां तु पर्णैरार्द्रैरकुत्सितैः।
पुटकेन तु शुभेन चरेद्भैक्षं समाहितः। [ 2785 ]
ब्राह्मणानां गृहाणां तु सप्तानां नापरं व्रजेत्।
गोदोहमात्रं तिष्ठेत्तु वाग्यतः संयतेन्द्रियः।
न हसेच्च न वीक्षेच्च नाभिभाषेत वा स्त्रियम्।
दृष्ट्वा मूत्रं पुरीषं च चण्डालं वा रजस्वलाम्।
पतितं च तथा श्वानमादित्यमवलोकयेत्। [ 2790 ]
यो हि पादुकमारुह्य सर्वदा प्रचरेद्द्विजः।
तं दृष्ट्वा पापकर्माणमादित्यमवलोकयेत्।
ततस्त्वावसथं प्राप्तो भिक्षां निक्षिप्य भूतले।
प्रक्षाल्य पादावा जान्वोर्हस्तावाकूर्परं पुनः।
आचम्य वारिणा तेन वह्निं विप्रांश्च पूजयेत्। [ 2795 ]
पञ्च सप्ताथ वा कुर्याद्भागान्भैक्षस्य तस्य वै।
तेषामन्यतमं पिण्डमादित्याय निवेदयेत्।
ब्रह्मणे चाग्नये चैव सोमाय वरुणाय च।
विश्वेभ्यश्चैव देवेभ्यो दद्यादन्नं यथाक्रमम्।
अवशिष्टमथैकं तु वक्त्रमात्रं प्रकल्पयेत्। [ 2800 ]
अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्या चाभिमन्त्रयेत्।
अङ्गुलीभिस्त्रिभिः पिण्डं प्राश्नीयात्प्राङ्मुखः शुचिः।

---

[ए]व ( for [इ]ति ). T $G_{3}$ [ऽ]पि ( for ऽथ ). —( L. 2765 ) $M_{2.3}$ [अ]पि ( for [ए]व ). $G_{1.2}$ $M_{4}$ [ऽ]थ प्रजापतये तथा; $M_{2.3}$ स प्रजापतयेपि च ( for the post. half). —(L. 2766) $G_{1}$ $M_{2.3}$ षट्कृत्वा; $M_{4}$ षड्हुत्वा. T $M_{4}$ प्रायश्चिताहुतीर्. T $G_{1}$ $M_{3}$ द्विजाः. —( L. 2767 ) $G_{2}$ अग्नौ. $G_{3}$ $M_{4}$ पौष्टिकीं. —( L. 2768 ) $G_{1.2}$ चाग्निं ( by transp. ). $G_{1.2}$ $M_{3}$ दिग्ध्वा; $G_{3}$ $M_{4}$ दत्त्वा; $M_{2}$ दिग्धं ( for धृत्वा ). $G_{1.2}$ यथात्मानि; $G_{3}$ [अ]थ वर्त्मनि. —( L. 2769 ) $G_{1.2}$ विशुद्धात्मा; $G_{3}$ विविक्तांतां; $M_{2.3}$ °क्तांता; $M_{4}$ विमुक्ताय ( *sup. lin.* °त्मा ) ( for विविक्तात्मा ). —(L. 2770) $M_{4}$ समावृतः ( for °हितः ). —( L. 2771 ) $G_{1}$ चासीनः; $M_{2-4}$ स्वा° ( for त्वा° ). $M_{4}$ पूर्वतोमुखं. —( L. 2773 ) $G_{1}$ om. च. —( L. 2774 ) $G_{1.2}$ स्थित्वा ( for पश्चात् ). —( L. 2775 ) $G_{1}$ च ( for the third वा ). T $G_{3}$ स्वाध्यायं ( $T_{1}$ ब्रह्माणं ) ब्राह्मणं तथा; $M_{4}$ [अ]प्यथ स्वाध्यायमेव वा ( for the post. half ). —( L. 2776 ) $M_{2-4}$ आरणं ( $M_{4}$ °ण्यं ) ( for वारुणं ). T यम-; $G_{3}$ $M_{4}$ मम ( for मन्त्र- ). T $M_{2.3}$ च ( for the first वा ). $M_{2.3}$ om. the post. half and the prior half of line 2777. —( L. 2777 ) $G_{3}$ वीरस्तम् ( for °घ्नम् ). T च ( for वा ). —( L. 2778 ) $G_{1.2}$ $M_{4}$ देवीं वा ( by transp. ). $M_{2.3}$ ततो जपेत् ( by transp. ). —( L. 2779 ) $G_{1.2}$ $M_{4}$ शते वा ( $M_{4}$ च ) ( for ततश्च ). $M_{4}$ च ( for the first वा ). $T_{2}$ च ( for the second वा ). —( L. 2780 ) $M_{2.3}$ वा ( for वै ). —(L. 2781) T $G_{3}$ तु ( for सु- ). —$M_{4}$ om. (hapl.) lines 2782–2785. —( L. 2782 ) Madras ed. ततः ( for तु सु- ). T $G_{3}$ $M_{2}$ ततः पात्रं समादा( $M_{2}$ °धा )य ( for the prior half ). $T_{1}$ तथा; $G_{3}$ हि वा ( for तु वा ). —( L. 2783 ) Some MSS. मृण्मयं. —( L. 2784 ) $T_{1}$ यज्ञियानां; $G_{1.2}$ $M_{2.3}$ याज्ञिकानां. —( L. 2785 ) $T_{1}$ च ( for तु ). —( L. 2786 ) $M_{3}$ च ( for तु ). $G_{1.2}$ चापरं; $M_{2.3}$ न परं ( for नापरं ). —( L. 2787 ) $G_{1}$ तिष्ठंस्तु; $M_{4}$ तिष्ठेच्च. $M_{4}$ om. ( hapl. ) the post. half and the prior half of line 2788. —( L. 2788 ) $G_{2}$ न हसेन्न च वीक्षेत. $G_{1.2}$ स्त्रियः; $M_{4}$ स्त्रिया. —( L. 2789 ) $G_{1.2}$ $M_{3}$ वा ( for च ). $M_{4}$ दृष्ट्वा पुरीषं मूत्रं च. $M_{4}$ च ( for वा ). —$T_{2}$ $M_{2}$ om. ( hapl. ) lines 2791–2792. —( L. 2791 ) $G_{3}$ आक्रम्य ( for आरुह्य ). $G_{1}$ सर्वथा प्रपयेद्द्विजः. —( L. 2793 ) $M_{2.3}$ स्वावसथं ( for त्वा° ). $M_{4}$ प्राप्य ( for प्राप्तो ). $M_{3}$ भिक्षान्नं ( for भिक्षां नि- ). —( L. 2794 ) T $G_{3}$ $M_{3.4}$ पादावाजानू ( $G_{3}$ $M_{4}$ °नु ); $M_{2}$ पाणिपादौ द्वौ ( for पादावा जान्वोर् ). T हस्तम्. $M_{3.4}$ ( *sup. lin.* ) आकोपरं. $M_{2}$ आजानू हस्तकौ पुनः. —( L. 2799 ) T $G_{1}$ चैव; $G_{3}$

यथा च वर्धते सोमो ह्रसते च यथा पुनः ।
तथा पिण्डाश्च वर्धन्ते ह्रसन्ते च दिने दिने ।
त्रिकालं स्नानमस्योक्तं द्विकालमथ वा सकृत् । [ 2805 ]
ब्रह्मचारी सदा वापि न च वस्त्रं प्रपीडयेत् ।
स्थाने न दिवसं तिष्ठेद्रात्रौ वीरासनं व्रजेत् ।
भवेत्स्थण्डिलशायी वाप्यथ वा वृक्षमूलिकः ।
वल्कलं यदि वा क्षौमं शाणं कार्पासकं तु वा ।
आच्छादनं भवेत्तस्य वस्त्रार्थं पाण्डुनन्दन । [ 2810 ]
एवं चान्द्रायणे पूर्णे मासस्यान्ते प्रयत्नवान् ।
ब्राह्मणान्भोजयेद्भक्त्या दद्याच्चैव च दक्षिणाम् ।
चान्द्रायणेन चीर्णेन यत्कृतं तेन दुष्कृतम् ।
तत्सर्वं तत्क्षणादेव भस्मीभवति काष्ठवत् ।
ब्रह्महत्याथ गोहत्या सुवर्णस्तैन्यमेव च । [ 2815 ]
भ्रूणहत्या सुरापानं गुरोर्दारव्यतिक्रमः ।
एवमन्यानि पापानि पातकीयानि यानि च ।
चान्द्रायणेन नश्यन्ति वायुना पांसवो यथा ।
अनिर्दशाया गोः क्षीरमौष्ट्रमाविकमेव च ।
मृतसूतकयोश्चान्नं भुक्त्वा चान्द्रायणं चरेत् । [ 2820 ]
उपपातकिनश्चान्नं पतितान्नं तथैव च ।
शूद्रस्योच्छेषणं चैव भुक्त्वा चान्द्रायणं चरेत् ।
आकाशस्थं तु हस्तस्थमासनस्थं तथैव च ।
परहस्तस्थितं चैव भुक्त्वा चान्द्रायणं चरेत् ।
अथाग्रेदिधिषोरन्नं दिधिषूपपतेस्तथा । [ 2825 ]
परिवेत्तुस्तथा चान्नं परिवित्तान्नमेव च ।
कुण्डान्नं गोलकान्नं च देवलान्नं तथैव च ।
तथा पुरोहितस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ।
सुरासवं विषं सर्पिर्लाक्षा लवणमेव च ।
तैलं चापि च विक्रीणन्द्विजश्चान्द्रायणं चरेत् । [ 2830 ]
एकोद्दिष्टं तु यो भुङ्क्ते दिनमध्यगतोऽपि यः ।
भिन्नभाण्डे तु यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ।
यो भुङ्क्तेऽनुपनीतेन यो भुङ्क्ते च स्त्रिया सह ।
यो भुङ्क्ते कन्यया सार्धं द्विजश्चान्द्रायणं चरेत् ।
उच्छिष्टं स्थापयेद्विप्रो यो मोहाद्भोजनान्तरे । [ 2835 ]
दद्याद्वा यदि संमोहाद्द्विजश्चान्द्रायणं चरेत् ।
तुम्बकोशातकं चैव पलण्डुं गृञ्जनं तथा ।
छत्राकं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत् ।
तथा पर्युषितं चान्नं पक्कं परगृहागतम् ।
विपक्कं च तथा मांसं भुक्त्वा चान्द्रायणं चरेत् । [2840]
उदक्यया शुना वापि चण्डालैर्वा द्विजोत्तमः ।
दृष्टमन्नं तु भुञ्जानो द्विजश्चान्द्रायणं चरेत् ।

---

अन्यान्; $G_3$ $M_4$ दद्याद् ( for अन्नं ). — ( L. 2800 ) T $G_3$ तथा ( for अथ ). — ( L. 2801 ) T अंगुलीभिस्त्रिभिः; $G_3$ °स्यग्रस्थितं ( for °ग्रे स्थितं ). $M_4$ -मंत्रितं ( for -मन्त्रयेत् ). — ( L. 2802 ) $M_2$ पुनः ( for शुचिः ). — ( L. 2803 ) T तथा ( for the second यथा ). — ( L. 2807 ) $G_3$ स्थानेषु दिवसे तिष्ठेद् ( for the prior half ). $M_2$ स्वैरासनं ( for वीरा° ). — ( L. 2808 ) $T_2$ व्रते ( for भवेत् ). $M_{2,3}$ च ( for the first वा ). T $G_{1,3}$ om. [अ]पि. $M_4$ -मूलकं ( for -मूलिकः ). — ( L. 2809 ) $M_4$ वाप्यथ ( for यदि वा ). T $G_3$ शोणं. $M_{2-4}$ कार्पासिकं. Kumbh. ed. and Madras ed. तथा ( for तु वा ). — ( L. 2810 ) T $G_1$ $M_2$ वस्त्रार्धं. — ( L. 2811 ) T प्रयत्नतः. — ( L. 2812 ) $G_3$ $M_{2-4}$ तु ( for the second च ). — ( L. 2815 ) $G_1$ $M_{2,3}$ च ( for [अ]थ ). T -स्तेयम् ( for -स्तैन्यम् ). $M_{2-4}$ वा ( for च ). — ( L. 2816 ) $G_1$ $M_{2,4}$ -व्यतिक्रमं. — ( L. 2817 ) T $G_3$ तपनीयानि ( for पातकी° ). $M_3$ कानिचित् ( for यानि च ). — ( L. 2819 ) $M_{2,4}$ वा ( for च ). — ( L. 2820 ) T $G_{1,3}$ भक्त्या ( for भुक्त्वा ). — ( L. 2821 ) T $G_3$ पतितानां. — $M_4$ om. ( hapl. ) lines 2822–2826. $G_1$ om. ( hapl. ) from the post. half of line 2822 up to the prior half of line 2837. $G_3$ om. ( hapl. ) lines 2823–2828. $T_1$ $M_2$ read lines 2823–2824, after line 2828. — ( L. 2823 ) Madras ed. अधः स्रस्तं ( for आसनस्थं ). — After line 2824, $M_2$ ins. :

आसन्दीस्थस्तु यो भुङ्क्ते शयनीयगतोऽपि च ।
यो भुङ्क्ते वा सहस्थस्तु द्विजश्चान्द्रायणं चरेत् ।

— ( L. 2825 ) $T_2$ तथाग्रे-; $M_{2,3}$ अथाग्र-. $M_{2,3}$ अपि ( for तथा ). — ( L. 2826 ) $T_1$ $M_2$ परिवित्तेस् ( for °वेत्तुस् ). $T_1$ परिवेत्तान्नमेव च; $M_3$ परिवित्तुस्तथैव च ( for the post. half ). — ( L. 2829 ) $M_{2,3}$ सु( $M_2$ पु )रामांसं ( for °सवं ). $M_4$ घृतं ( for विषं ). — ( L. 2830 ) $M_2$ सोमं ( for चापि ). — ( L. 2831 ) $G_2$ $M_4$ जन-; $M_3$ जल- ( for दिन- ). $M_2$ यो भुंक्ते जलमध्यगः ( for the post. half ). — ( L. 2832 ) $G_3$ -भांडेपि; Kumbh. ed. and Madras ed. -भांडेषु ( for -भाण्डे तु ). — ( L. 2834 ) $M_4$ चैव ( for सार्धं ). $G_2$ $M_3$ कन्यया सह यो भुंक्ते. — ( L. 2837 ) $M_2$ तुंबं. $G_3$ -कोशातकीं. $M_3$ तुंबं कोशातकीं चैव. $M_2$ फलंडुं. — ( L. 2838 ) T $G_3$ वृंताकं; $M_{3,4}$ चि( $M_4$ छि )त्राकं ( for छत्राकं ). $M_2$ जग्ध्वा ( for भुक्त्वा ). — $M_{2,4}$ om. ( hapl. ) lines 2839–2840. — ( L. 2839 ) $G_{1,2}$ द्विजः ( for तथा ). — ( L. 2841 ) $M_2$ उदक्या वा ( for °क्यया ). T $G_{2,3}$ च

एतत्पुरा विशुद्ध्यर्थमृषिभिश्चरितं व्रतम् ।
पावनं सर्वपापानां पुण्यं पाण्डव चोदितम् ।
एतेन वसवो रुद्राश्चादित्याश्च दिवं गताः । [ 2845 ]
एतदार्थं परं गुह्यं पवित्रं पावनं स्मृतम् ।
यथोक्तमेतद्यः कुर्याद्द्विजः पापप्रणाशनम् ।
स दिवं याति पूतात्मा निर्मलादित्यसंनिभः ।

Colophon.

वैशंपायन उवाच ।

केशवेनैवमुक्ते तु चान्द्रायणविधिक्रमे ।
अपृच्छत्पुनरन्यांश्च धर्मान्धर्मात्मजो नृप । [ 2850 ]

युधिष्ठिर उवाच ।

सर्वभूतपते श्रीमन्सर्वभूतनमस्कृत ।
सर्वभूतहितं धर्मं सर्वज्ञ कथयस्व मे ।

भगवानुवाच ।

यद्दरिद्रजनस्यापि स्वर्ग्यं सुखकरं भवेत् ।
सर्वपापप्रशमनं तच्छृणुष्व युधिष्ठिर ।
कार्त्तिकाद्यास्तु ये मासा द्वादशैव प्रकीर्तिताः । [ 2855 ]
तेष्वेकभुक्तनियमः सर्वेषामुच्यते मया ।
कार्त्तिके यस्तु वै मासे नन्दायां संयतेन्द्रियः ।
एकभुक्तेन मद्भक्तो मासमेकं तु वर्तते ।
जलं वा न पिबेन्मासे नान्तरं भोजनात्परम् ।
आदित्यरूपं मां नित्यमर्चयन्सुसमाहितः । [ 2860 ]
व्रतान्ते भोजयेद्विप्रान्दक्षिणां संप्रदाय च ।
क्रोधलोभविनिर्मुक्तस्तस्य पुण्यफलं शृणु ।
विधिवत्कपिलादाने यत्पुण्यं समुदाहृतम् ।
तत्पुण्यं समनुप्राप्य सूर्यलोके महीयते ।
ततश्चापि च्युतः कालात्पुरुषेषूपजायते । [ 2865 ]
मार्गशीर्षं तु यो मासमेकभुक्तेन वर्तते ।
कामं क्रोधं च लोभं च परित्यज्य यथाविधि ।
ध्यात्वा चादित्यरूपं मामर्चयेन्नियतेन्द्रियः ।
जपन्नेव तु गायत्रीं मामिकां वाग्यतः शुचिः ।
मासे परिसमाप्ते तु भोजयित्वा द्विजाञ्शुचीन् । [ 2870 ]
तानर्चयति मद्भक्त्या तस्य पुण्यफलं शृणु ।
अग्निहोत्रे कृते पुण्यमाहिताग्नेस्तु यद्भवेत् ।
तत्पुण्यफलमासाद्य यानेनाम्बरशोभिना ।
सप्तर्षिलोके चरति यथाकामं यथासुखम् ।

---

(for वा). $M_4$ चंडालैश्च नृपोत्तम. —(L. 2842) T दृष्टमन्नं न भुंजीयाद् (for the post. half). — $G_3$ *om.* line 2843. — (L. 2843) T चरित-. — (L. 2844) $G_{1, 2}$ $M_3$ -भूतानां (for -पापानां). $M_{2, 3}$ चोत्तमं (for चोदितम्). — (L. 2845) T om. the first च. — (L. 2846) T $G_3$ पवित्रं पापनाशनं (for the post. half). — (L. 2847) $T_1$ -प्रणाशनः. — $G_3$ om. line 2848. — (L. 2848) $T_1$ दिवं स (by transp.). T $G_2$ विमलादित्य-संनिभः. — Colophon. — *Sub-parvan* : T $G_2$ $M_4$ वैष्णवधर्म ; $G_3$ $M_2$ धर्मशास्त्र ; $M_3$ विष्णुधर्म. — *Adhy. name :* $G_{1, 2}$ $M_{2-4}$ चांद्रायणविधिः. — *Adhy. no.* : $T_1$ 100; $T_2$ $M_4$ 109; $G_{1, 2}$ 99; $G_3$ 110; $M_2$ 16; $M_3$ 98. — (L. 2849) $T_2$ [ए]वमुक्तस्तु ; $M_2$ [ए]तदाख्याते. — (L. 2850) $M_{2, 4}$ अप्यन्यान् (for अन्यांश्च). — (L. 2851) $T_2$ -नमस्तु ते ; $M_2$ °स्कृतः. — (L. 2852) $M_2$ सर्वं त्वं ; $M_4$ धर्मज्ञ (for सर्वज्ञ). $G_{1, 2}$ नः (for मे). — (L. 2853) $T_2$ $G_3$ $M_{2-4}$ स्वर्गं. $M_2$ सुखतरं (for °करं). — (L. 2855) MSS. कार्तिकाद्यास्. $M_{2, 3}$ [ए]ते (for [ए]व). — (L. 2856) $G_{1, 2}$ $M_4$ [ए]व (for [ए]क-). $T_2$ -भक्त- ; $G_2$ $M_2$ -भुक्ति- (for -भुक्त-). — (L. 2857) MSS. कार्तिके. T मासे वै (by transp.). $M_2$ संयतो नरः (for °तेन्द्रियः). — (L. 2859) $T_2$ मासं (for मासे). $T_1$ $G_1$ जलपानं पिबेन्मासम् (for the prior half). $T_1$ $G_1$ अंतरा (for नान्तरं). — (L. 2860) $T_1$ $G_1$ -पुत्रं (for -रूपं). $M_{2, 3}$ मा (for मां). $M_2$ वापि (for नित्यम्). $G_3$ अर्चयेत् (for °यन्). $M_2$ नित्यमर्चन्समाहितः. — (L. 2861) $M_2$ मासांते (for व्रतान्ते). $M_2$ दक्षिणाः. $T_1$ च (for सं-). $T_2$ $G_{1, 3}$ $M_{2, 4}$ ददेत्पुनः (for संप्रदाय च). — (L. 2864) $M_{2, 3}$ -प्राप्तः (for -प्राप्य). T मम (for सूर्य-). — (L. 2865) $M_4$ कुरुष्वेषु (sic) (for पुरुषेषु). T दिशा वर्षेषु जायते. — After line 2865, T $M_3$ ins. :

तत्र स्थित्वा चिरं कालमस्मिन्विप्रो भविष्यति ।

$M_3$ cont. : $M_2$ ins. after line 2865 :

तत्र प्रकामं क्रीडित्वा मानुषेषूपजायते ।
राजराजार्चितो विप्रः कोटीधनपतिर्भवेत् ।

— (L. 2866) $G_1$ मार्गशीर्षे. T $G_3$ यः क्षिपेत् (for वर्तते). — (L. 2867) $T_1$ $G_1$ कामः (sic) (for कामं). — (L. 2868) $M_2$ संयतेंद्रियः. — (L. 2869) $M_4$ च (for तु). $T_1$ मामेकां (sic) ; $T_2$ ममैकां ; $M_3$ मामकीं. — (L. 2870) $G_{1, 2}$ शुचिः (for शुचीन्). — (L. 2871) T $G_{1, 3}$ अर्चयंति. — (L. 2872) T हुते ; $M_2$ तु ते (for कृते). $G_3$ पुण्ये. $G_3$ $M_4$ च (for तु). — (L. 2873) $M_4$ पुण्यं. — (L. 2874) $G_{1, 2}$ स ह सप्तर्षिलोकेषु (for the prior half). $G_3$ $M_{3, 4}$ यथा-कालं (for °कामं). — (L. 2876) $M_4$ प्रकाशं (for

ततश्चापि च्युतः कालाद्धरिवर्षेपु जायते । [ 2875 ]
तत्र प्रकामं क्रीडित्वा राजा पश्चाद्भविष्यति ।
पौषमासं क्षपेदेवमेकभुक्तेन यो नरः ।
अर्चयन्नेव मां नित्यं मद्व्रतेनान्तरात्मना ।
अहिंसासत्यसहितः क्रोधहर्षविवर्जितः ।
एवं युक्तस्य राजेन्द्र शृणु यत्फलमुत्तमम् । [ 2880 ]
विप्रातिथ्यसहस्रेषु यत्पुण्यं समुदाहृतम् ।
तत्पुण्यं समनुप्राप्य शक्रलोके महीयते ।
अवकीर्णस्ततः कालादिलावर्षेपु जायते ।
तत्र स्थित्वा चिरं कालमस्मिन्विप्रो भविष्यति ।
माघमासं तथा यस्तु वर्तते चैकभुक्ततः । [ 2885 ]
मदर्चनपरो भूत्वा डम्भक्रोधविवर्जितः ।
मामिकामपि गायित्रीं संध्यायां तु जपेद्बुधः ।
दत्त्वा तु दक्षिणामन्ते भोजयित्वा द्विजानपि ।
नमस्करोति तान्भक्त्या मद्व्रतेनान्तरात्मना ।
त्रिकालं स्नानयुक्तस्य तस्य पुण्यफलं शृणु । [ 2890 ]
नीलकण्ठप्रयुक्तेन यानेनाम्बरशोभिना ।
पितृलोकं व्रजेच्छ्रीमान्सेव्यमानोऽप्सरोगणैः ।
तत्र प्रकामं क्रीडित्वा भद्राश्वेपूपजायते ।
ततश्च्युतश्चतुर्वेदी विप्रो भवति भूतले ।
यः क्षपेत्फाल्गुनं मासमेकभुक्तो जितेन्द्रियः । [ 2895 ]
नमो ब्रह्मण्यदेवायेत्येतन्मन्त्रं जपेत्सदा ।
पायसं भोजयेद्विप्रान्व्रतान्ते संयतेन्द्रियः ।
मदर्चनपरोऽक्रोधस्तस्य पुण्यफलं शृणु ।
विमानं सारसैर्युक्तमारूढः कामगामि च ।
नक्षत्रलोके रमते नक्षत्रसदृशाकृतिः । [ 2900 ]
ततश्चापि च्युतः कालात्केतुमालेपु जायते ।
तत्र प्रकामं क्रीडित्वा मानुपेपु मुनिर्भवेत् ।
चैत्रमासं तु यो राजन्नेकभुक्तेन वर्तते ।
ब्रह्मचारी तु मद्भक्त्या तस्य पुण्यफलं शृणु ।
यदग्निहोत्रिणः पुण्यं यथोक्तं व्रतचारिणः । [ 2905 ]
तत्पुण्यफलमासाद्य चन्द्रलोके महीयते ।
ततोऽवतीर्णो जायेत वर्षे रमणके पुनः ।
भुक्त्वा कामांस्ततस्तस्मिन्निह राजा भविष्यति ।
वैशाखं यस्तु वै मासमेकभुक्तेन वर्तते ।
द्विजमग्रासने कृत्वा भुञ्जन्भूमौ च वाग्यतः । [ 2910 ]
नमो ब्रह्मण्यदेवायेत्यर्चयित्वा दिवाकरम् ।
व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ।
फलं यद्विधिवत्प्रोक्तमग्निष्टोमातिरात्रयोः ।
तत्पुण्यं फलमासाद्य देवलोके महीयते ।
ततो हैमवते वर्षे जायते कालपर्ययात् । [ 2915 ]
तत्र प्रकामं क्रीडित्वा विप्रः पश्चाद्भविष्यति ।
ज्येष्ठमासं तु यो राजन्नेकभुक्तेन वर्तते ।
विप्रमग्रासने कृत्वा भूमौ भुञ्जन्यथाविधि ।

---

°मं ). —( L. 2877 ) T $G_{1.2}$ $M_{2.3}$ पौष्यमासं. $T_2$ $G_1$ क्षिपेद्. T $G_3$ यस्तु ( for एवम् ). T वै ( for यो ). $G_2$ ( also as above ) द्विजः ( for नरः ). — ( L. 2878 ) $M_4$ आदित्यं ( for मां नित्यं ). $M_2$ अर्चन्नेव तु मां नित्यं. T $G_3$ मद्भक्तेन ( for मद्व्रतेन ). — ( L. 2879 ) $M_{2-4}$ -निरतः ( for -सहितः ). T $G_3$ क्रोधासूयावि( $G_3$ °दि )वर्जितः. — ( L. 2881 ) $M_3$ विप्रातिथि-. T -सहस्रे तु ( for °स्रेषु ). — ( L. 2882 ) $M_{2-4}$ फलं ( for पुण्यं ). $G_3$ $M_2$ -प्राप्तः ( for -प्राप्य ). — *$M_4$ om. line 2883.* — ( L. 2883 ) Madras ed. अवतीर्णस् ( for °कीर्णस् ). — ( L. 2884 ) $G_1$ लोके ( for विप्रो ). — ( L. 2885 ) $T_1$ om. च. $M_{2.3}$ -भुक्तितः ; $M_4$ -भक्ततः. — ( L. 2886 ) T ममार्चन- ( for मद° ). — ( L. 2887 ) $T_2$ तथा मम ; $G_?$ एकाहम् ; $M_2$ मामिकां वा ( for मामिकाम् ). $G_1$ सावित्रीं ( for गायित्रीं ). $M_2$ पुनः ; $M_4$ द्विजः ( for बुधः ). — ( L. 2889 ) T $G_3$ तान्सर्वान् ; $M_{2.3}$ मद्भक्त्या. —( L. 2890 ) $G_2$ त्रिकाल- ( for °लं ). $T_2$ -संयुक्तस् ( for -युक्तस्य ). $G_1$ त्रिकालज्ञानयुक्तस्य. — ( L. 2891 ) $G_1$ -प्रसक्तेन ( for -प्रयु° ). — ( L. 2892 ) $M_4$ शीघ्रं ( for श्रीमान् ). $G_2$ सेवमानो. — ( L. 2895 ) $T_2$ क्षिपेत् ; $G_{1.2}$ $M_3$ चरेत् ( for क्षपेत् ). $G_{1.2}$ $M_4$ [ऽ]प्यसंशयः ( $G_1$ °यं ); $M_{2.3}$ न संशयः ( for जितेन्द्रियः ). — ( L. 2896 ) $M_4$ [इ]त्युक्त्वा ( for [इ]त्येतन् ). $G_2$ जपन्सदा ; $M_3$ उदाहरत् ( for जपेत्सदा ). — ( L. 2898 ) $G_3$ तदर्चन-. $M_{2.3}$ भूत्वा ( for ऽक्रोधस् ). — ( L. 2900 ) $M_2$ सुखं नक्षत्रलोकेषु ( for the prior half ). — $G_1$ om. line 2902. —( L. 2903 ) $M_4$ -भक्तेन. — After line 2903, the sequence of lines in T is : 2910–2912, 2921, 2914–2916, 2909, 2910–2912 ( r. ), 2913, 2906–2908, 2917–2920, 2921 ( r. ). T om. lines 2904–2905. —( L. 2904 ) $G_3$ $M_3$ मद्भक्तस्. — ( L. 2905 ) $M_4$ यथोक्त-. $M_2$ ब्रह्मचारिणः ( for व्रत° ). — $M_4$ om. lines 2907–2908. —( L. 2907 ) T रामणके. — ( L. 2908 ) T भुक्त्वा भोगांस्ततस्तस्माद् ( for the prior half ). — $M_4$ om. lines 2909–2914. — ( L. 2909 ) $G_{1.2}$ $M_3$ वैशाखे यस्तु वै मासे ( *for the prior half* ) and श्लोक- ( *for* एक- ). $G_3$ -भक्तेन. — ( L. 2910 ) T ( first time ) अग्राशि( $T_2$ °स )नं. $G_3$ स- ( for च ). T ( first time ) नित्यशः ( for

नमो ब्रह्मण्यदेवायेत्यर्चयन्मां समाहितः ।
दम्भानृतविनिर्मुक्तस्तस्य पुण्यफलं शृणु । [ 2920 ]
चीर्णे चान्द्रायणे सम्यग्यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमासाद्य देवलोके महीयते ।
अथोत्तरकुरुष्वेव जायते निर्गतस्ततः ।
ततश्चापि च्युतः कालादिह लोके द्विजो भवेत् ।
आषाढमासं यो राजन्नेकभुक्तेन वर्तते । [ 2925 ]
ब्रह्मचारी जितक्रोधो मदर्चनपरायणः ।
विप्रमग्रासने कृत्वा भूमौ भुञ्जञ्जितेन्द्रियः ।
कृत्वा त्रिषवणं स्नानमष्टाक्षरविधानतः ।
व्रतान्ते भोजयेद्विप्रान्पायसेन युधिष्ठिर ।
गुडोदनेन वा राजंस्तस्य पुण्यफलं शृणु । [ 2930 ]
कपिलाशतदानस्य यत्पुण्यं पाण्डुनन्दन ।
तत्पुण्यफलमासाद्य देवलोके महीयते ।
ततोऽवतीर्णः काले तु शाकद्वीपे प्रजायते ।
ततश्चापि च्युतः कालादिह विप्रो भविष्यति ।
श्रावणं यः क्षपेन्मासमेकभुक्तेन वर्तते । [ 2935 ]
नमो ब्रह्मण्यदेवायेत्युक्त्वा मामर्चयेत्सदा ।
विप्रमग्रासने कृत्वा भूमौ भुञ्जन्यथाविधि ।
पायसेनार्चयेद्विप्राञ्जितक्रोधो जितेन्द्रियः ।
लोभमोहविनिर्मुक्तस्तस्य पुण्यफलं शृणु ।
कपिलादानस्य यत्पुण्यं विधिदत्तस्य पाण्डव । [ 2940 ]
तत्पुण्यं समनुप्राप्य शक्रलोके महीयते ।
ततश्चापि च्युतः कालात्कुशद्वीपे प्रजायते ।
तत्र प्रकामं क्रीडित्वा विप्रो भवति मानुषे ।
यस्तु भाद्रपदं मासमेकभुक्तेन वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यसंधो जितेन्द्रियः । [ 2945 ]
विप्रमग्रासने कृत्वा पाकभेदविवर्जितः ।
नमो ब्रह्मण्यदेवायेत्युक्त्वास्य चरणौ स्पृशेत् ।
तिलान्वापि घृतं वापि व्रतान्ते दक्षिणां ददत् ।
मद्भक्तस्य नरश्रेष्ठ तस्य पुण्यफलं शृणु ।
यत्फलं विधिवत्प्रोक्तं राजसूयाश्वमेधयोः । [ 2950 ]
तत्पुण्यफलमासाद्य शक्रलोके महीयते ।
ततश्चापि च्युतः कालाज्जायते धनदालये ।
तत्र प्रकामं क्रीडित्वा राजा भवति मानुषे ।
यश्चाप्याश्वयुजं मासमेकभुक्तेन वर्तते ।
मद्गायत्रीं जपेद्भक्त्या मद्गतेनान्तरात्मना । [ 2955 ]
द्विसंध्यं वा त्रिसंध्यं वा शतमष्टोत्तरं तु वा ।
विप्रमग्रासने कृत्वा संयतेन्द्रियमानसः ।
व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ।
अश्वमेधस्य यत्पुण्यं विधिवत्पाण्डुनन्दन ।
तत्पुण्यफलमासाद्य मम लोके महीयते । [ 2960 ]
ततश्चापि च्युतः कालाच्छ्वेतद्वीपे प्रजायते ।
तत्र भुक्त्वा महाभोगानत्र विप्रवरो भवेत् ।

Colophon.

---

वाग्यतः ). — ( L. 2914 ) $T_2$ $M_{2.3}$ पुण्य- ( for पुण्यं ). — ( L. 2916 ) $G_2$ $M_{2.3}$ मोदित्वा ( for क्रीडित्वा ). — ( L. 2917 ) T ज्येष्ठमासे. $G_{1.2}$ विप्रो ह्येक- ( for राजन्नेक- ). $M_4$ -भक्तेन. — ( L. 2918 ) $M_2$ जितेंद्रियः ( for यथाविधि ). — ( L. 2919 ) $G_1$ $M_3$ [इ]त्युच्चरन् ( for [इ]त्यर्चयन् ). $M_4$ यथाविधि ( for समाहितः ). — ( L. 2920 ) $M_4$ कामक्रोध- ( for दम्भानृत- ). T -विमुक्तस्तु ( for -विनिर्मुक्तस् ). — ( L. 2921 ) $M_4$ चीर्ण- ( for चीर्णे ). — ( L. 2922 ) $G_1$ तत्पुण्यं. T तपोलोके; $G_1$ शक्र° ( for देव° ). — ( L. 2923 ) $G_{1.2}$ -कुरौ वर्षे ( for -कुरुष्वेव ). — ( L. 2925 ) Madras ed. -भक्तेन. — ( L. 2927 ) $M_2$ भुंजन्भूमौ ( by transp. ). $M_3$ द्विजोत्तमः ( for जितेन्द्रियः ). — ( L. 2928 ) Madras ed. त्रिषवण-. $G_1$ -विधारितः ( for °नतः ). — ( L. 2930 ) $G_{1.2}$ $M_{2-4}$ गुल्योदनेन ( for गुडोदनेन ). $G_{1.2}$ $M_3$ राजेंद्र ( for वा राजंस् ). — ( L. 2931 ) $G_2$ $M_3$ -दश- ( for -शत- ). $M_2$ -दत्तस्य ( for -दानस्य ). — ( L. 2932 ) $M_4$ मम ( for देव- ). — ( L. 2933 ) Madras ed. कालेन ( for काले तु ). T स ( for प्र- ). — ( L. 2935 ) $G_1$ क्षिपेन्. $M_4$ -भक्तेन. T $G_3$ $M_4$ संयु( T °य )-तः; $G_3$ पांडव; $M_{2.3}$ ( *sup. lin.* as above ) भक्तिमान् ( for वर्तते ). — ( L. 2936 ) T $G_2$ अर्चयन्. — ( L. 2938 ) $G_3$ $M_{2.4}$ [अ]र्चयन् ( for °येद् ). $M_2$ विप्रो. — ( L. 2940 ) *Hypermetric.* T $M_4$ कपिलादस्य; $G_3$ °दशस्य; $M_2$ °शतस्य ( for °दानस्य ). $M_3$ कपिलादानपुण्यं यद् ( for the prior half ). — ( L. 2941 ) $M_{2.3}$ -प्राप्तः. — $T_2$ om. line 2942. — ( L. 2942 ) $M_4$ महीयते ( for प्रजा° ). — ( L. 2943 ) $G_3$ मानुषः. — ( L. 2944 ) Madras ed. -भक्तेन. — ( L. 2947 ) $M_2$ तु ( for [अ]स्य ). — ( L. 2948 ) $T_1$ $G_{1.2}$ om. the first वा. $M_2$ तिलान्वाथ; $M_3$ °न्यापि (sic) ( for °न्वापि ). Madras ed. घृतान्. T ददेत्; $G_3$ ददन्; $M_2$ दिशेत् ( for ददत् ). — ( L. 2954 ) $T_1$ -युजि; $M_2$ -युजेन् ( sic ) ( for -युजं ). Madras ed. -भक्तेन. — ( L. 2955 ) $T_1$ महत्पुण्यं; $T_2$ जपान्नित्यं ( for जपेद्भक्त्या ). — After line 2956, T ins. :

नमो ब्रह्मण्यदेवायेत्यसकृन्मां प्रणम्य च ।

— ( L. 2957 ) $T_2$ विजितेंद्रियमानसः. — ( L. 2959 ) $M_3$ अश्वमेधे च ( for °धस्य ). — T $G_3$ om. line 2961.

युधिष्ठिर उवाच ।

एवं संवत्सरं पूर्णमेकभुक्तेन यः क्षिपेत् ।
तस्य पुण्यफलं यद्वै तन्ममाचक्ष्व केशव ।

भगवानुवाच ।

शृणु पाण्डव सत्यं मे वचनं पुण्यमुत्तमम् । [ 2965 ]
यदकृत्वाथ वा कृत्वा नरः पापैः प्रमुच्यते ।
एकभुक्तेन वर्तेत नरः संवत्सरं तु यः ।
ब्रह्मचारी ह्यधःशायी जितक्रोधो जितेन्द्रियः ।
शुचिः स्नानरतो ऽव्यग्रः सत्यवागनसूयकः ।
अर्चयन्नेव मां नित्यं मद्गतेनान्तरात्मना । [ 2970 ]
संध्ययोस्तु जपेन्नित्यं मद्गायत्रीं समाहितः ।
नमो ब्रह्मण्यदेवायेत्यसकृन्मां प्रणम्य च ।
विप्रमग्रासने कृत्वा यावकं भैक्षमेव च ।
भुक्त्वा तु वाग्यतो भूमावाचान्तस्य द्विजन्मनः ।
नमोऽस्तु वासुदेवायेत्युक्त्वा तु चरणौ स्पृशेत् । [2975]
मासे मासे समासे तु भोजयित्वा द्विजाञ्शुचीन् ।
संवत्सरे ततः पूर्णे दद्यात्तु व्रतदक्षिणाम् ।
नवनीतमयीं गां वा तिलधेनुमथापि वा ।
विप्रहस्तच्युतैस्तोयैः सहिरण्यैः समुक्षितः ।
तस्य पुण्यफलं राजन्कथ्यमानं मया शृणु । [ 2980 ]
दशजन्मकृतं पापं ज्ञानतोऽज्ञानतोऽपि वा ।
तद्विनश्यति तस्याशु नात्र कार्या विचारणा ।

युधिष्ठिर उवाच ।

सर्वेषामुपवासानां यच्छ्रेयः सुमहत्फलम् ।
यच्च निःश्रेयसं लोके तद्भवान्वक्तुमर्हति ।

भगवानुवाच ।

शृणु राजन्यथापूर्वं यथा गीतं तु नारदे । [ 2985 ]
तथा ते कथयिष्यामि मद्भक्ताय युधिष्ठिर ।
यस्तु भक्त्या शुचिर्भूत्वा पञ्चम्यां मे नराधिप ।
उपवासव्रतं कुर्यात्त्रिकालं चार्चयंस्तु माम् ।
सर्वक्रतुफलं लब्ध्वा मम लोके महीयते ।

युधिष्ठिर उवाच ।

भगवन्देवदेवेश पञ्चमी नाम का तव । [ 2990 ]
तामहं श्रोतुमिच्छामि कथयस्व ममाच्युत ।

भगवानुवाच ।

पर्वद्वयं च द्वादश्यां श्रवणं च नराधिप ।
तत्पञ्चमीति विख्याता मत्प्रिया च विशेषतः ।
तस्मात्तु ब्राह्मणश्रेष्ठैर्मन्निवेशितबुद्धिभिः ।
उपवासस्तु कर्तव्यो मत्प्रियार्थं युधिष्ठिर । [ 2995 ]
द्वादश्यामेव वा कुर्यादुपवासमशक्नुवन् ।
तेनाहं परमां प्रीतिं यास्यामि नरपुंगव ।
अहोरात्रेण द्वादश्यां मार्गशीर्षे तु केशवम् ।
उपोष्य पूजयेद्यो मां सोऽश्वमेधफलं लभेत् ।

---

—(L. 2962) G3 M4 तत्र (for अत्र). M2.4 द्विजवरो; M3 विप्रवरो. G2 ततो विप्रो भवेन्नरः. — Colophon om. in T. — *Sub-parvan :* M2-4 वैष्णव(M3 विष्णु)-धर्म. — *Adhy. name :* G1.2 M3 एकभुक्तिविधिः; M2 एकभुक्तिविधानं. — *Adhy. no.:* G1.2 100; G3 111; M2 17; M3 99; M4 110. —(L. 2963) T पुण्यम् (for पूर्णम्). M2.4 -भक्तेन. T2 संक्षिपेत्; G3 M2.3 यः क्षपेत्; M4 वर्तते (for यः क्षिपेत्). —(L. 2964) T विद्वांस् (for यद्वै). —(L. 2965) M4 सत्त्वं (for सत्यं). —(L. 2966) T G2 कृत्वा वा (by transp.). G3 यः कृत्वा तु व्रतं चैतन्; M2 तच्छ्रुत्वाथ कृतो वापि (for the prior half). G3 वि- (for प्र-). —(L. 2970) M2 अर्चन्नेव तु (for °यन्नेव). T1 मा नित्यं; M4 मादित्यं (for मां नित्यं). —(L. 2971) G1.2 M4 जपन्. —(L. 2973) G3 अग्रासनं and भक्ष्यम्. —(L. 2974) G1.2 M4 भूत्वा (for भूमाव्). —(L. 2975) M2 देवदेवाय (for वासु°). —(L. 2977) M2 कृतदक्षिणाः; M4 घृतदक्षिणां (for व्रत°). —(L. 2978) M4 धेनुं (for गां वा). —(L. 2979) M2 स हि पुण्यैः (for सहिरण्यैः). —(L. 2980) M2 वक्ष्यमाणं (for कथ्यमानं). — After line 2980, T G2 and Madras ed. ins. an addl. colophon. — *Sub-parvan :* T G1 वैष्णवधर्म. — *Adhy. no.:* T1 G2 100; T2 110. —(L. 2984) G3 M2.3 अर्हसि. —(L. 2985) T2 M2.4 मया (for यथा-). M4 सर्वं (for -पूर्वं). G2 मोदते (for नारदे). Kumbh. ed. मयाभीष्टं तु मोदते (for the post. half). —(L. 2986) G3 यथा (for तथा). M2 मद्भक्तस्य (for °क्ताय). —(L. 2987) G3 M2.3 (*inf. lin.*) यो (for मे). —(L. 2988) M4 उपवासं. G1 कार्यं (for कुर्यात्). G1 यो (for च). G3 तु सः; M4 बुधः (for तु माम्). —(L. 2991) G1.2 M3 अनघ (for अच्युत). —(L. 2992) G1.2 M3 पर्वद्वये. G3 M2-4 द्वादश्यौ. —(L. 2993) Madras ed. मत्पंचमी. —(L. 2994) M2 तस्माद्भागवतैर्भक्तैर् (for the prior half). —(L. 2995) G1.2 विशेषतः (for युधिष्ठिर). —(L. 2998) G3 अहोरात्रं च (*for* °रात्रेण). G1.2 M4 मार्गशीर्षेण; G3 °र्षे च (for °र्षे तु). —(L. 2999) T धीमान् (for यो मां). —(L. 3000)

द्वादश्यां पुष्यमासे तु नाम्ना नारायणं तु माम् । [3000]
उपोष्य पूजयेद्यो मां वाजपेयफलं लभेत् ।
द्वादश्यां माघमासे तु मामुपोष्य तु माधवम् ।
पूजयेद्यः समाप्नोति राजसूयफलं लभेत् ।
द्वादश्यां फाल्गुने मासि गोविन्दाख्यमुपोष्य माम् ।
अर्चयेद्यः समाप्नोति ह्यतिरात्रफलं नृप । [3005]
द्वादश्यां मासि चैत्रे तु मां विष्णुं समुपोष्य यः ।
पूजयंस्तदवाप्नोति पौण्डरीकस्य यत्फलम् ।
द्वादश्यां मासि वैशाखे मधुसूदनसंज्ञितम् ।
उपोष्य पूजयेद्यो मां सोऽग्निष्टोमस्य पाण्डव ।
द्वादश्यां ज्येष्ठमासे तु मामुपोष्य त्रिविक्रमम् । [3010]
अर्चयेद्यः समाप्नोति गवां मेधफलं नृप ।
आषाढे वामनाख्यं मां द्वादश्यां समुपोष्य च ।
नरमेधस्य स फलं प्राप्नोति भरतर्षभ ।
द्वादश्यां श्रावणे मासि श्रीधराख्यमुपोष्य माम् ।
पूजयेद्यः समाप्नोति पञ्चयज्ञफलं नृप । [3015]
मासे भाद्रपदे यो मां हृषीकेशाख्यमर्चयेत् ।
उपोष्य स समाप्नोति सौत्रामणिफलं नृप ।
द्वादश्यामाश्वयुङ्मासे पद्मनाभमुपोष्य माम् ।
अर्चयेद्यः समाप्नोति गोसहस्रफलं नृप ।
द्वादश्यां कार्त्तिके मासि मां दामोदरसंज्ञितम् । [3020]
उपोष्य पूजयेद्यस्तु सर्वक्रतुफलं लभेत् ।
केवलेनोपवासेन द्वादश्यां पाण्डुनन्दन ।
यत्फलं पूर्वमुद्दिष्टं तस्यार्धं लभते फलम् ।
श्रवणेऽप्येवमेवं मां योऽर्चयेद्भक्तिमान्नरः ।
मम सालोक्यमाप्नोति नात्र कार्या विचारणा । [3025]
मासे मासे समभ्यर्च्य क्रमशो मामतन्द्रितः ।
पूर्णे संवत्सरे कुर्यात्पुनः संवत्सरार्चनम् ।
एवं द्वादशवर्षं यो मद्भक्तो मत्परायणः ।
अविघ्नमर्चयानस्तु मम सालोक्यमाप्नुयात् ।
अर्चयेत्प्रीतिमान्यो मां द्वादश्यां वेदसंहिताम् । [3030]
स पूर्वोक्तफलं राजँल्लभते नात्र संशयः ।
गन्धं पुष्पं फलं तोयं पत्रं वा फलमेव वा ।
द्वादश्यां मम यो दद्यात्ततो नान्योऽस्ति मत्प्रियः ।
एतेन विधिना सर्वे देवाः शक्रपुरोगमाः ।
मद्भक्ता नरशार्दूल स्वर्गभोगांस्तु भुञ्जते । [3035]

वैशंपायन उवाच ।

एवं वदति देवेशे केशवे पाण्डुनन्दनः ।
कृताञ्जलिः स्तोत्रमिदं भक्त्या धर्मात्मजोऽब्रवीत् ।

युधिष्ठिर उवाच ।

सर्वलोकेश देवेश हृषीकेश नमोऽस्तु ते ।

---

M4 पौषमासस्य (for पुष्यमासे तु). —(L. 3001) T G3 सद्यो; M2 यस्तु; M4 यः स (for यो मां). Kumbh. ed. वाजिमेध- (for वाजपेय-). —(L. 3003) G3 स आप्नोति (for समा°). M4 वाजपेय- (for राजसूय-). —(L. 3004) T1 G1 M2 मासे. —(L. 3005) G3 स आप्नोति (for समा°). —(L. 3006) M2 चैत्रमासे (for मासि चैत्रे), and मां च विष्णुमुपोष्य तु (for the post. half). —(L. 3007) T M4 पूजयेत्सममा(M4 °वा)प्नोति; G3 Madras ed. पूजयन्फ(G3 °येत्फ)लमाप्नोति; M2 पूजयेद्यः स चा° (for the prior half). M2 पौंडरीकफलं नृप. —(L. 3008) G1 -संज्ञिकं (for -संज्ञितम्). M2 उपोष्य यो मां वैशाखे द्वादश्यां मधुसूदनं. —(L. 3009) M2 पूजयेत्फलमाप्नोति (for the prior half). T G3 अग्निष्टोमफलं लभेत्. —(L. 3013) T1 पूजयन्फलमाप्नोति; M2 पूजयेन्नरमेधस्य (for the prior half). T1 नरमेधस्य यत्फलं; T2 G1 M4 प्राप्नुयान्नर- (T2 °नृप)सत्तम; M2 स फलं प्राप्नुयान्नृप. —M2 om. (hapl.) lines 3014–3015. —(L. 3014) G3 मासे. —(L. 3015) M3 अर्चयेद् (for पूज°). M4 स चाप्नोति (for समा°). —(L. 3016) G1 M3 मासि. M2 हृषीकेशमुपोष्य तु (for the post. half). —(L. 3017) M2 अर्चयेत्फलमाप्नोति सौत्रामणिं नृपोत्तम. —(L. 3018) T मासि. —(L. 3019) M2 स चाप्नोति (for समा°). G3 नरः (for नृप). —(L. 3020) G3 M2 मासे. G3 -संज्ञिकं (for °तम्). —(L. 3023) M4 नरः; Kumbh. ed. नृप (for फलम्). —(L. 3024) T1 श्रावणे. T2 G3 तु (for ऽपि). —(L. 3025) M2 आयाति (for आप्नोति). —(L. 3028) G1 एतं; G2 एतद् (for एवं). M2, 3 -वर्षाणि (for -वर्षं यो). —(L. 3029) M2 अविघ्नेन (for °घ्नम्). Kumbh. ed. सायुज्यम् (for सालोक्यम्). T अश्नुते (for आप्नुयात्). M2 तत्सालोक्यमवाप्नुयात्. —(L. 3030) M2, 3 अभ्यसे(M3 °र्चये)त्प्रतिमासं यो (for the prior half). —(L. 3031) T1 प्राप्य मद्व्रते (for राजँल्लभते). —(L. 3032) M2, 3 तथा (for the first फलं). T2 अर्चयेत् (for पत्रं वा). G3 जलम्; Madras ed. मूलम् (for the second फलम्). —(L. 3033) G1 M3 तत्समो न; M2 ततोन्यो वा (for ततो नान्यो). M4 पुण्यकृत् (for मत्प्रियः). —(L. 3035) G1, 2 M2 -लोकांस् (for -भोगांस्). —(L. 3037) T G3 M2, 4 कृतांजलिपुटस्तोत्रमि(G3 °स्तत्र इ)दं भक्त्याभ्यु(T2 °क्त्याप्यु-; G3 °क्त्या ह्यु)वाच ह (G3 च). —(L. 3038) M2 नमः (for ऽस्तु ते). —(L. 3039) G1, 2 नित्यं

सहस्रशिरसे तुभ्यं सहस्राक्ष नमो नमः ।
त्रयीमय त्रयीनाथ त्रयीस्तुत नमो नमः । [ 3040 ]
यज्ञात्मन्यज्ञसंभूत यज्ञनाथ नमो नमः ।
चतुर्मूर्ते चतुर्बाहो चतुर्व्यूह नमो नमः ।
लोकात्मँल्लोककृन्नाथ लोकावास नमो नमः ।
सृष्टिसंहारकर्त्रे ते नरसिंह नमो नमः ।
भक्तप्रिय नमस्तेऽस्तु भक्तवत्सल ते नमः । [ 3045 ]
ब्रह्मावास नमस्तेऽस्तु ब्रह्मनाथ नमो नमः ।
रुद्ररूप नमस्तेऽस्तु रुद्रकर्मरताय ते ।
पञ्चयज्ञ नमस्तेऽस्तु सर्वयज्ञ नमो नमः ।
कृष्णप्रिय नमस्तेऽस्तु कृष्ण नाथ नमो नमः ।
योगावास नमस्तेऽस्तु योगनाथ नमो नमः । [ 3050 ]
हयचक्र नमस्तेऽस्तु चक्रपाणे नमो नमः ।
पञ्चभूत नमस्तेऽस्तु पञ्चायुध नमो नमः ।

वैशंपायन उवाच ।

भक्तिगद्गदया वाचा स्तुवत्येवं युधिष्ठिरे ।
गृहीत्वा केशवो हस्ते प्रीतात्मा तं न्यवारयत् ।
निवार्य च पुनर्वाचा भक्तिनम्रं युधिष्ठिरम् । [ 3055 ]
वक्तुमेवं नरश्रेष्ठं धर्मपुत्रं प्रचक्रमे ।

भगवानुवाच ।

अन्यवत्किमिदं राजन्मां स्तौषि नरपुंगव ।
तिष्ठ पृच्छ यथापूर्वं धर्मनिव युधिष्ठिर ।

युधिष्ठिर उवाच ।

भगवंस्त्वत्प्रसादात्तु स्मृत्वा स्मृत्वा पुनः पुनः ।
न शान्तिरस्ति देवेश नृत्यतीव च मे मनः । [ 3060 ]
इदं च मम संप्रश्नं वक्तुमर्हसि माधव ।
कृष्णपक्षेषु द्वादश्यां पूजनीयः कथं भवान् ।

भगवानुवाच ।

शृणु राजन्यथातत्त्वं तत्सर्वं कथयामि ते ।
फलं तु कृष्णद्वादश्यामर्चनायां फलं मम ।
एकादश्यामुपोष्याथ द्वादश्यामर्चयेत्तु माम् । [ 3065 ]
विप्रानपि यथालाभं भोजयेद्भक्तिमान्नरः ।
स गच्छेद्दक्षिणामूर्तिं मां वा नात्र विचारणा ।
चन्द्रसालोक्यमथ वा ग्रहनक्षत्रपूजितः ।

Colophon.

वैशंपायन उवाच ।

केशवेनैवमाख्याते धर्मपुत्रः पुनः प्रभुम् ।

---

(for तुभ्यं). M4 [ऽ]स्तु ते (for नमः). — T om. line 3040. M1 om. (hapl.) lines 3040–3041. — (L. 3041) M2 [ऽ]स्तु ते (for नमः). — (L. 3042) M4 [ऽ]स्तु ते (for नमः). — (L. 3043) T G3 M3 लोकनाथेश; M4 सर्वलोकेश (for लोककृन्नाथ). T लोकाधार; G3 लोकज्येष्ठ; M2.3 (*inf. lin.*) लोकनाथ (for लोकावास). G1.2 [ऽ]स्तु ते (for नमः). — (L. 3044) T1 G2.3 -हर्त्रे (for -कर्त्रे). M2.3 नारसिंह. — T1 om. (hapl.) lines 3045–3052. M4 om. (hapl.) line 3045. T2 reads lines 3045–3046 after line 3048; G3 reads them after line 3050. M2 om. from the post. half of line 3045 up to the prior half of line 3048. — (L. 3046) M3 ब्रह्मवास; M4 ब्रह्मरूप (for ब्रह्मावास). — (L. 3047) M3 रौद्र- (for रुद्र-). G3 M4 रुद्ररूपधराय ते. — After line 3048, Madras ed. ins.:

सृष्टिसंहारकर्त्रे ते रुद्रप्रिय नमोऽस्तु ते ।

— T2 om. (hapl.) lines 3049–3050. G3 om. (hapl.) line 3049. — (L. 3049) M2 transp. the prior half and the post. half. G1 M3 om. (hapl.) the post. half and the prior half of line 3050. — (L. 3050) G2 योगप्रिय (for योगावास). M4 योगावास; Kumbh. ed. and Madras ed. योगिनाथ (for योग°). — (L. 3051) G1.2 [ऽ]स्तु ते (for नमः). — (L. 3054) M4 दक्षिणे (for केशवो). T1 सं-; T2 स; M2.3 तु (for तं). — (L. 3055) T1 स (for च). T G1.2 चाह (for वाचा). — (L. 3056) G3 M4 एव (for एवं). G2.3 M2.4 नरश्रेष्ठ. — (L. 3057) M4 मा. M2 स्तौषि मां (by transp.). — (L. 3058) G1.2 धर्मपुत्र (for धर्मनिव). — (L. 3059) T प्रभावं; G3 M2–4 प्रसादं (for °दात्). — (L. 3060) G1.2 M3 मे देव (for देवेश). — (L. 3061) M4 इमं (for इदं). M2 इदं च सम्यक्प्रश्नं त्वं (for the prior half). T G3 केशव; M2 मानद (for माधव). — (L. 3062) T G3 -पक्षे च; M2–4 -पक्षे तु (for -पक्षेषु). M2.3 अर्चनीयः (for पूज°). — (L. 3063) G2 यथा तत्र; M2–4 यथातथ्यं. Madras ed. पूर्वं (for सर्वं). M2 [अ]हं (for ते). — (L. 3064) G1.2 परमं; M3 वरं तु (for फलं तु). T M4 अर्चनाद्यत्; G3 °नायाः (for °नायां). M2 अहं (for फलं). — (L. 3066) T यथायोगं (for °लाभं). — (L. 3067) M2.3 मम (for मां वा). — (L. 3068) T -सायुज्यम् (for -सालोक्यम्). M4 नक्षत्रग्रहपूजितं. — Colophon. — *Sub-parvan:* T M2.4 वै( T2 श्रीवै )ष्णवधर्म. — *Adhy. name:* G1.2 M2.3 उपवासविधिः. — *Adhy. no.:* T1 102; T2 M4 111; G1.2 101;

पप्रच्छ दानकालस्य विशेषं च विधिं नृप । [ 3070 ]
युधिष्ठिर उवाच ।
देव किं फलमाख्यातं दानस्य विषुवेषु च ।
सूर्येन्दूपप्लवे चैव दत्ते दाने च यत्फलम् ।
भगवानुवाच ।
शृणुष्व राजन्विषुवे सोमार्कग्रहणेषु च ।
व्यतीपातेऽयने चैव दानं स्यादक्षयं नृप ।
राजन्नयनयोर्मध्ये विषुवं संप्रचक्षते । [ 3075 ]
समरात्रं दिने तत्र संध्यायां विषुवे नृप ।
ब्रह्माहं शंकरश्चापि तिष्ठामः सहिताः सकृत् ।
क्रियाकरणकार्याणामेकीभावत्वकारणात् ।
अस्माकमेकीभूतानां निष्फलं तत्परं पदम् ।
तन्मुहूर्तं परं पुण्यं राजन्विषुवसंज्ञितम् । [ 3080 ]
तदेवाद्याक्षरं ब्रह्म परं ब्रह्मेति कीर्तितम् ।
तस्मिन्मुहूर्ते सर्वेऽपि चिन्तयन्तः परं पदम् ।
देवाश्च पितरो रुद्रा वसवश्चाश्विनौ तथा ।
साध्या विश्वे च गन्धर्वाः सिद्धा ब्रह्मर्षयस्तथा ।
सूर्यादयो ग्रहाश्चैव सागराः सरितस्तथा । [ 3085 ]
मरुतोऽप्सरसो नागा यक्षराक्षसगुह्यकाः ।
एते चान्ये च राजेन्द्र विषुवे संयतेन्द्रियाः ।
सोपवासाः प्रयत्नेन भवन्ति ध्यानतत्पराः ।
अन्नं गावस्तिलान्भूमिं कन्यादानं तथैव च ।
गृहमाच्छादनं धान्यं वाहनं शयनं तथा । [ 3090 ]
यच्चान्यच्च मया प्रोक्तं तत्प्रयच्छ युधिष्ठिर ।
दीयते विषुवेष्वेवं श्रोत्रियेभ्यो विशेषतः ।
तस्य दानस्य कौन्तेय क्षयो नैवोपपद्यते ।
वर्धतेऽहरहः पुण्यं तद्दानं कोटिसंमितम् ।
विषुवे स्नपनं यस्तु मम कुर्याद्धरस्य वा । [ 3095 ]
अर्चनं च यथान्यायं तस्य पुण्यफलं शृणु ।
दशजन्मकृतं पापं तस्य सद्यो विनश्यति ।
दशानामश्वमेधानामिष्टानां लभते फलम् ।
विमानं दिव्यमारूढः कामरूपी यथासुखम् ।
स याति मामकं लोकं रुद्रलोकमथापि वा । [ 3100 ]
तत्रस्थैर्देवगन्धर्वैर्गीयमानो यथासुखम् ।
दिव्यवर्षसहस्राणि कोटिमेकं तु मोदते ।
ततश्चापि च्युतः कालादिह लोके द्विजोत्तमः ।
चतुर्णामपि वेदानां पारगो ब्रह्मविद्भवेत् ।
चन्द्रसूर्यग्रहे वापि मम वा शंकरस्य वा [ 3105 ]
गायत्रीं मामिकां वापि जपेद्यः शंकरस्य वा ।
शङ्खतूर्यनिनादैश्च कांस्यघण्टास्वनैरपि ।
कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं शृणु ।

---

G3 112; M1 18; M3 100. — (L. 3069) G3 केशवे च (for °वेन). M1 समाख्यातो; M3 [प्र]वमाख्यातो. G1 M2 पुनः पुनः; G3 तु तं प्रभुं; M3 पुनः प्रभुः; M4 प्रतापवान् (for पुनः प्रभुम्). — (L. 3070) M2.3 अपृच्छद् (for पप्रच्छ). — (L. 3071) G1.2 विषुवेष्वमरेश्वर (for the post. half). — (L. 3072) M2 om. (hapl.) from the post. half up to the prior half of line 3074. G1.2 वक्तुमर्हसि य( G2 त )त्फलं (for the post. half). — (L. 3074) G1 व्यतीपातदिने चैव; G3 °पातायने चैव. M2 दत्तं (for दानं). G फलं (for नृप). — (L. 3075) T1 G2.3 M4 मध्यं. — (L. 3076) G1.2 समे रात्रि (G2 °त्रि-); M1 समरात्रि; M4 समे च त्रि- (for समरात्रं). G3 दिनं. M2 त्रिसंध्यां (for संध्यायां). — (L. 3077) G1 विक्रमः सहितः सकृद् (for the post. half). — (L. 3078) M2-4 -कारण- (for -करण-). G1 -कारणत्व- (hypermetric); M4 -भूतत्व- (for -भावत्व-). — (L. 3079) G1 निष्कृतिं; Madras ed. निष्कलं (for निष्फलं). G3 परं परं; M3 पदं परं (by transp.). — (L. 3080) M4 तं (for तन्). T G3 दिव्यं (for पुण्यं). M4 विपुल- (for विषुव-). — (L. 3082) T G2 एतन् (for तस्मिन्). G1.3 M1 तु (for ऽपि). G1 चिंतयंति. M1 परस्परं (for परं पदम्). — (L. 3083) M2 शक्रश् (for देवाश्). — (L. 3084) G1.2 M3 च विश्वे (by transp.); G3 M4 विश्वे स-. — (L. 3085) G1.2 M4 सोमादयो (for सूर्या°). M2.3 सोमो ग्रहगणाश्चैव (for the prior half). G1.2 सरितः सागरास्तथा. — (L. 3086) M2.3 चाप्सरो (for ऽप्सरसो). M2 यक्षा (for यक्ष-). — (L. 3087) G2.3 विषये (for विषुवे). — (L. 3089) M2 गावं. T2 तथा (for तिलान्). M2 कन्याम् (for भूमिं). M1 अन्यदन्यच्च तादृशः (for the post. half). — (L. 3090) G1.2 आयतनं (for आच्छादनं). — (L. 3091) T G3 नोक्तं (for प्रोक्तं). — (L. 3092) M2.4 [ए]व (for [ए]वं). — (L. 3093) G1.2 M3 क्षयं. — (L. 3095) G स्नापनं; M2 स्नपना. — (L. 3096) G1.2 अर्चनां. M2.3 पंचगव्येन विधिवत् (for the prior half). — (L. 3099) M1 आरूढं. — G1 om. (hapl.) lines 3100-3101. — (L. 3100) M4 ब्रह्म- (for रुद्र-). — (L. 3101) M2 तत्र वै (for तत्रस्थैर्). — (L. 3102) T -सहस्राणां; M2 °स्रं तु (for °स्राणि). — (L. 3103) M2 द्विजो भवेत् (for द्विजोत्तमः). — (L. 3104) T G3 ब्राह्मणो (for ब्रह्मविद्). — (L. 3105)

गान्धर्वैर्होमजप्यैश्च शब्दैरुत्कृष्टनादिभिः ।
दुर्बलोऽपि भवेद्राहुः सोमश्च बलवान्भवेत् । [ 3110 ]
सूर्येन्दूपप्लवे चैव श्रोत्रियेभ्यः प्रदीयते ।
तत्सहस्रसमं भूत्वा दातारमुपतिष्ठति ।
महापातकयुक्तोऽपि यद्यपि स्यान्नरो नृप ।
निर्लेपस्तत्क्षणादेव तेन दानेन जायते ।
चन्द्रसूर्यप्रकाशेन विमानेन विराजता । [ 3115 ]
याति सोमपुरं रम्यं सेव्यमानोऽप्सरोगणैः ।
यावदृक्षाणि तिष्ठन्ति गगने शशिना सह ।
तावत्कालं स राजेन्द्र सोमलोके महीयते ।
ततश्चापि च्युतः कालादिह लोके युधिष्ठिर ।
वेदवेदाङ्गविद्विप्रः कोटीधनपतिर्भवेत् । [ 3120 ]

युधिष्ठिर उवाच ।

भगवंस्तव गायत्री बुध्यते तु कथं नृभिः ।
किं वा तस्याः फलं देव ममाचक्ष्व सुरेश्वर ।

भगवानुवाच ।

द्वादश्यां विषुवे चैव चन्द्रसूर्यग्रहे तथा ।
अयने श्रवणे चैव व्यतीपाते तथैव च ।
अश्वत्थदर्शने चैव तथा मद्दर्शनेऽपि च । [ 3125 ]
जप्त्वा तु मम गायत्रीमथ वाष्टाक्षरं नृप ।
आर्जितं दुष्कृतं तस्य नाशयेन्नात्र संशयः ।

युधिष्ठिर उवाच ।

अश्वत्थदर्शनं चैव किं त्वद्दर्शनसंमितम् ।
एतत्कथय देवेश परं कौतूहलं हि मे ।

भगवानुवाच ।

अहमश्वत्थरूपेण पालयामि जगत्त्रयम् । [ 3130 ]
अश्वत्थो न स्थितो यत्र नाहं तत्र प्रतिष्ठितः ।
यत्राहं संस्थितो राजन्नश्वत्थश्चापि तत्र वै ।
यस्त्वेनमर्चयेद्भक्त्या स मां साक्षात्समर्चति ।
यस्त्वेनं प्रहरेत्कोपान्मामेव प्रहरेत्तु सः ।
तस्मात्प्रदक्षिणं कुर्यान्न छिन्द्यादेनमन्वहम् । [ 3135 ]
व्रतस्य पारणं तीर्थमार्जवं तीर्थमुच्यते ।
देवशुश्रूषणं तीर्थं गुरुशुश्रूषणं तथा ।
गुरुशुश्रूषणं तीर्थं तीर्थज्ञानस्य धारणम् ।
नराणां पोषणं तीर्थं गार्हस्थ्यं तीर्थमुच्यते ।
आतिथेयं परं तीर्थमतिथिस्तीर्थमुच्यते । [ 3140 ]
ब्रह्मचर्यं परं तीर्थं त्रेताग्निस्तीर्थमुच्यते ।
मूलं धर्मं तु विज्ञाय मनस्तत्रावधार्यताम् ।

---

G1, 2 व्योम्नि ; M2 धाम्नि ( for वापि ). — ( L. 3107 ) Kumbh. ed. -स्तनैश्चैव ( for -निनादैश्च ). — ( L. 3108 ) M2 महत् ( for शृणु ). — ( L. 3109 ) T G2 गंधर्वैर्. G3 गंधर्वैर्वा मध्यमैश्च ( for the prior half ). G1, 2 जपैर् ( for शब्दैर् ). G1 -नामाभिः ; M2, 3 -वादिभिः ( for -नादिभिः ). — ( L. 3110 ) G3 M2 हि ; M3 [ऽ]भि- ( for ऽपि ). — ( L. 3111 ) M2 यद्वै ( for चैव ). T2 ग्रहणे विषुवे चैव ( for the prior half ). — ( L. 3112 ) G1 M2, 3 -गुणं ( for -समं ). T -तिष्ठते. — ( L. 3113 ) M2 -संयुक्तो ( for -युक्तोऽपि ). G1, 2 नरोत्तम ( for नरो नृप ). — ( L. 3114 ) G1, 2 निष्पापस् ( for निर्ले° ). T2 नादेन ( for दानेन ). — ( L. 3118 ) T महाराज ( for स राजेन्द्र ). — ( L. 3119 ) M4 नराधिप ( for युधिष्ठिर ). — ( L. 3120 ) T कोटि- ( for कोटी- ). — ( L. 3121 ) G1 M2, 3 जप्यते ( for बुध्यते ). G1, 2 विभो ; M4 मया ( for नृभिः ). — ( L. 3122 ) M2, 3 तन्ममाचक्ष्व केशव ( for the post. half ). — ( L. 3123 ) T G3 [ऽ]पि वा ( for तथा ). — ( L. 3124 ) M2 अयने ग्रहणे पुण्ये ( for the prior half ). T2 व्यतिपादे. — ( L. 3125 ) G2 -दर्शनेनैव ; M2 °नेनापि ( for °ने चैव ). G1 M2 मद्दर्शनेन ( for °नेऽपि ). — ( L. 3126 ) G1, 2 M3 जप्या ( for जप्त्वा ). M2 [अ]ष्टाक्षरीं. — ( L. 3127 ) T G3 अर्जितं. M2 यावज्जीवं विनाशयेत् ( for the post. half ). — M2 om. lines 3128–3129. — ( L. 3128 ) T1 G3 -दर्शने. G1 किंचिद् ( for किं त्वद् ). — G1 om. line 3131. — ( L. 3133 ) T1 मा ( for मां ). — ( L. 3134 ) M2 यः ( for सः ). — ( L. 3135 ) T2 एवम् ( for एनम् ). — M2, 3 read lines 3136–3281 after line 3329. — ( L. 3136 ) M2, 3 चरणं ( for पारणं ). G3 पूर्णम् ( for तीर्थम् ). M4 om. ( hapl. ) from the post. half up to the prior half of line 3150. Madras ed. सर्वतीर्थेषु पांडव ( for the post. half ). — ( L. 3137 ) T1 देवे ; G3 वेद- ( for देव- ). M2, 3 द्विज- ( for गुरु- ). T1 G1 त्रेताग्निस्तीर्थमुच्यते ( for the post. half ). — After line 3137, Madras ed. ins. :

पुत्रस्य पारणं तीर्थमार्जवं तीर्थमुच्यते ।

— G1 om. line 3138 and the prior half of line 3139. — ( L. 3138 ) T द्विज- ; G2 पितृ- ( for गुरु- ). M2, 3 ज्ञानं ; Madras ed. अर्थं ( for तीर्थ- ). G3 M2, 3 पारणं ( for धारणम् ). G2 मातृशुश्रूषणस्तथा ( for the post. half ). — ( L. 3139 ) G2, 3 दाराणां ( for न° ). G2 तोषणं ( for पो° ). M2, 3 दारसंतोषणं तीर्थं. — ( L. 3140 ) G2, 3 M2, 3 आतिथेयाः. G1, 2 ब्रह्मतीर्थं सनातनं ( for the post. half ). — ( L. 3141 ) T गुरुशुश्रूषणं तथा ( for the post. half ). — ( L. 3142 ) G3 M2, 3 मूलं ध( M3 °त्व )र्मस्य

गच्छ तीर्थानि कौन्तेय धर्मो धर्मेण वर्धते ।
द्विविधं तीर्थमित्याहुः स्थावरं जङ्गमं तथा ।
स्थावराज्जङ्गमं श्रेष्ठं ततो ज्ञानपरिग्रहः । [ 3145 ]
कर्मणापि विशुद्धस्य पुरुषस्येह भारत ।
हृदये सर्वतीर्थानि तीर्थभूतः स उच्यते ।
गुरुतीर्थं परं ज्ञानमतस्तीर्थं न विद्यते ।
ज्ञानतीर्थं परं तीर्थं ब्रह्मतीर्थं सनातनम् ।
क्षमा तु परमं तीर्थं सर्वतीर्थेषु पाण्डव । [ 3150 ]
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
मानितोऽमानितो वापि पूजितोऽपूजितोऽपि वा ।
आकृष्टस्तर्जितो वापि क्षमावांस्तीर्थमुच्यते ।
क्षमा दमः क्षमा दानं क्षमा यज्ञः क्षमा तपः ।
क्षमाहिंसा क्षमा धर्मः क्षमा चेन्द्रियनिग्रहः । [ 3155 ]
क्षमा दया क्षमा यज्ञः क्षमयैतद्धृतं जगत् ।
क्षमावान्प्राप्नुयात्स्वर्गं क्षमावान्प्राप्नुयाद्यशः ।
क्षमावान्प्राप्नुयान्मोक्षं तस्मात्सा तीर्थमुच्यते ।
आत्मा नदी भारतपुण्यतीर्थ-
मात्मा तीर्थं सर्वतीर्थप्रधानम् । [ 3160 ]
आत्मा तु यज्ञः सततं मन्यते वै
स्वर्गो मोक्षः सर्वमात्मन्यधीनम् ।
आचारनैर्मल्यमुपागतेन
सत्यप्रसन्नक्षमशीतलेन ।
ज्ञानाम्बुना स्नाति च यो हि नित्यं [ 3165 ]
किं तस्य भूयः सलिलेन कृत्यम् ।

युधिष्ठिर उवाच ।

भगवन्सर्वपापघ्नं प्रायश्चित्तमदुष्करम् ।
त्वद्भक्तस्य सुरश्रेष्ठ मम त्वं वक्तुमर्हसि ।

भगवानुवाच ।

रहस्यमिदमत्यर्थमश्राव्यं पापकर्मणाम् ।
अधार्मिकाणामश्राव्यं प्रायश्चित्तं ब्रवीमि ते । [ 3170 ]
पावनं ब्राह्मणं दृष्ट्वा मद्गतेनान्तरात्मना ।
नमो ब्रह्मण्यदेवायेत्यभिवादनमाचरेत् ।
प्रदक्षिणं च त्रिः कुर्यात्पुनरष्टाक्षरेण तु ।
तेन तुष्टो नरश्रेष्ठ तत्पापं क्षपयाम्यहम् ।
यत्र कृष्टां वराहस्य मृत्तिकां शिरसा वहन् । [ 3175 ]
प्राणायामशतं कृत्वा नरः पापैः प्रमुच्यते ।
दक्षिणावर्तशङ्खाद्वा कपिलाशृङ्गतोऽपि वा ।
प्राक्स्रोतसं नदीं गत्वा ममायतनसंनिधौ ।

---

विज्ञाय. — ( L. 3145 ) $G_3$ -परिग्रहात्. — ( L. 3147 ) $M_2$ -भूतस्य ( for -भूतः स ). — ( L. 3148 ) $G_3$ $M_3$ गुरुस्; $M_2$ कुरु- ( for गुरु- ). T एतत् ( for अतस् ). — ( L. 3149 ) T ज्ञानं ( for ज्ञान- ). T $G_3$ $M_2$ तपस् ( for परं ). — ( L. 3150 ) $M_2$ तद् ( for तु ) and भारत ( for पाण्डव ). — ( L. 3151 ) T $G_2$ $M_2$ परलोकः ( for परश्चैव ). — ( L. 3153 ) $M_2$ तापितो ( for तर्जितो ). — ( L. 3154 ) T $G_{1,2}$ क्षमा यशः; $M_3$ क्षमाशयः ( for क्षमा दमः ). T $G_{1,3}$ $M_4$ सत्यं; $M_3$ यज्ञं ( for यज्ञः ). $G_{1,2}$ $M_3$ दमः ( for तपः ). — ( L. 3155 ) $M_2$ -विग्रहः ( for -निग्रहः ). — ( L. 3156 ) $M_2$ शीलं ( for दया ). $M_3$ यज्ञं. $G_{1,2}$ $M_3$ [ए]व ( for [ए]तद् ). — After line 3156, $G_{1,2}$ $M_3$ ins.:

क्षमावान्ब्राह्मणो देवः क्षमावान्ब्राह्मणो वरः ।

— $M_3$ om. ( hapl. ) line 3157. — ( L. 3158 ) $G_{1,2}$ साधुः स; Madras ed. तीर्थं स ( for सा तीर्थम् ). $G_3$ तस्माच्छ्रेष्ठा क्षमोच्यते ( for the post. half ). — ( L. 3159 ) T -तीर्थां. — ( L. 3160 ) T ह्यात्मा ( for आत्मा ). — ( L. 3161 ) T आत्मा यज्ञः साम चात्मा त( $T_2$ य )था वै; $G_3$ $M_4$ आत्मा यज्ञः ( $M_4$ °तः ) सममात्मन्यथा वै; $M_{2,3}$ Madras ed. आत्मा यज्ञः सर्वमात्मन्यथैव ( Madras ed. °थो वै ). — ( L. 3162 ) T आत्मप्रधानं; $M_4$ °न्यधीतं. — ( L. 3163 ) $G_3$ आचार्य- ( for °र- ). T $G_3$ $M_{3,4}$ आचा( $G_3$ °धा )रवस्त्रांतरक्षाळि- ( $T_1$ °क्षाळ-; $M_2$ °गाळि )तेन. — ( L. 3164 ) $G_3$ -क्षण- ( for -क्षम- ). $T_1$ सत्यः प्रसन्नः क्षणशीतलेन; $T_2$ सत्यः प्रसादक्षम°; $G_{1,2}$ सत्यः क्षमानिस्थ( $G_2$ °स्त )ळ°. — ( L. 3165 ) $G_3$ पूर्णांबुना; $M_2$ ज्ञानं पुरा ( for ज्ञानाम्बुना ). T $G_{1,2}$ $M_3$ हि ( for च ). T यश्च नित्यं; $G_{1,2}$ $M_3$ नित्यमेवं ( for यो हि नित्यं ). — ( L. 3166 ) $G_3$ भोगेन धनेन ( for भूयः सलिलेन ). $G_{1,2}$ तीर्थं ( for कृत्यम् ). — ( L. 3167 ) $M_{2,3}$ सुदुष्करं. — ( L. 3168 ) $M_4$ नर- ( for सुर- ). $M_{2-4}$ वक्तुं त्वम् ( by transp. ). — ( L. 3169 ) $M_2$ अत्यंतम् ( for अत्यर्थम् ). $G_2$ $M_{2,3}$ पापकर्मिणां. — ( L. 3170 ) $M_2$ अवैष्णवानाम् ( for अधार्मिकाणाम् ). — ( L. 3172 ) $M_2$ [इ]त्यभिवाद्य यथाविधि ( for the post. half ). — ( L. 3173 ) Kumbh. ed. and Madras ed. यः ( for त्रिः ). — ( L. 3174 ) $M_2$ नरव्याघ्र ( for °श्रेष्ठ ). $G_{1,2}$ $M_3$ तेन तुष्टेन ( $G_2$ °ष्टे तु ) विप्रेण ( for the prior half ). T क्षमयामि ( for क्षप° ). — ( L. 3175 ) $G_{1,2}$ पोत्रकृष्टां; $M_{2,3}$ क्षेत्रकृष्टां ( $M_2$ °ष्णां ) ( for यत्र कृष्टां ). — ( L. 3176 ) $M_3$ वि- ( for प्र- ). — ( L. 3177 ) $M_4$ -शंखं. — ( L. 3178 ) $M_{2-4}$ मम सूक्तेन संयतः ( for the post. half ). — $M_3$ reads line 3179 twice. —( L. 3179 ) $G_3$ $M_3$ ( second time ) सकृदेव हि ( $G_3$ तु )

सलिलेन तु यः स्नायात्सकृदेव रविग्रहे ।
तस्य यत्संचितं पापं तत्क्षणादेव नश्यति । [ 3180 ]
मस्तकान्निःसृतैस्तोयैः कपिलाया युधिष्ठिर ।
गोमूत्रेणापि यः स्नायाद्रोहिण्या मम वा दिने ।
विप्रपादच्युतैर्वापि तोयैः पापं प्रणश्यति ।
नमस्येद्यस्तु मद्भक्त्या शिंशुमारं प्रजापतिम् ।
चतुर्दशाङ्गसंयुक्तं तस्य पापं प्रणश्यति । [ 3185 ]
ततश्चतुर्दशाङ्गानि शृणु तस्य नराधिप ।
शिरो धर्मो हनुर्ब्रह्मा पुच्छावुत्तरदक्षिणौ ।
हृदयं तु भवेद्विष्णुर्हस्तौ स्यातां तथाश्विनौ ।
अग्निर्मध्यं भवेद्राजँल्लिङ्गं संवत्सरं भवेत् ।
मित्रावरुणकौ पादौ पुच्छमूलं हुताशनः । [ 3190 ]
ततः पश्चाद्भवेदिन्द्रस्ततः पश्चात्प्रजापतिः ।
अभयं च ततः पश्चात्स एव ध्रुवसंज्ञितः ।
एतान्यङ्गानि सर्वाणि शिंशुमारप्रजापतेः ।
पिबेत्तु पञ्चगव्यं यः पौर्णमास्यामुपोष्य तु ।
तस्य नश्यति तत्सर्वं यत्पापं पूर्वसंचितम् । [ 3195 ]
तथैव ब्रह्मकूर्चं तु समन्त्रं तु पृथक्पृथक् ।
मासि मासि पिबेद्यस्तु तस्य पापं प्रणश्यति ।
पापं च ब्रह्मकूर्चं च शृणु मन्त्रं च भारत ।
पालाशं पद्मपत्रं वा ताम्रं वाथ हिरण्मयम् ।
सादयित्वा तु गृह्णीयात्तत्तु पात्रमुदाहृतम् । [ 3200 ]
गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
तेजोऽसि शुक्रमित्याज्यं देवस्येति कुशोदकम् ।
आपो हि ष्ठेति संगृह्य यवचूर्णं यथाविधि ।
ब्रह्मणे च यथा हुत्वा समिद्धे च हुताशने । [ 3205 ]
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ।
उद्धृत्य प्रणवेनैव पिबेत्तु प्रणवेन तु ।
महतापि स पापेन त्वचेवाहिर्विमुच्यते ।
भद्रं न इति यः पादं पठेदृक्संहितां यथा ।
अन्तर्जले वाथादित्ये तस्य पापं प्रणश्यति । [ 3210 ]
मम सूक्तं जपेद्यस्तु नित्यं मद्गतमानसः ।
न पापेन तु लिप्येत पद्मपत्रमिवाम्भसा ।

Colophon.

---

( for सलिलेन तु ). $M_4$ सलिलेन ( for सकृदेव ). $M_2$ सलिले रविविग्रहे ; $M_3$ ( first time ) सलिले चावगाहयेत् ( for the post. half ). —( L. 3183 ) $G_{1.2}$ $M_3$ विप्रपादाच्. —( L. 3184 ) $G_{1.2}$ शिशुमार-. $M_2$ शिंशुमारः प्रजापतिः. —( L. 3185 ) $G_1$ -संरिक्तं ( for -संयुक्तं ). $G_{1.2}$ तत्क्षणादेव नश्यति ( for the post. half ). — After line 3185, $M_{2,3}$ ins. :

युधिष्ठिरः ।

चतुर्दश सुरश्रेष्ठ तस्याङ्गानि प्रजापतेः ।
क्रमेण नामतस्तानि वक्तुमर्हसि मानद ।

भगवान् ।

— ( L. 3186 ) $G_2$ $M_3$ युधिष्ठिर ( for नराधिप ). —( L. 3187 ) $M_{2,3}$ यमो ( for धर्मो ). $G_1$ वृपाव्; $G_2$ पृष्ठाव् ( for पुच्छाव् ). —( L. 3188 ) $G_{1.2}$ अंसौ ; $M_{2,3}$ हस्ते ( for हस्तौ ). —( L. 3189 ) $G_{1.2}$ $M_4$ अत्रिर् ( for अग्निर् ). $M_{2,3}$ संवत्सरो. $G_3$ लिंगस्यातं यथा भवेत् ( for the post. half ). —( L. 3190 ) $M_2$ मित्रावरुणतौ. $G_{1.2}$ $M_3$ ऊरुद्वंद्वं ( for पुच्छमूलं ). —( L. 3191 ) $M_{2,3}$ अतः ( for ततः ). $T_1$ $G_3$ बृहस्पतिः ( for प्रजापतिः ). —( L. 3192 ) $G_3$ उभयं ( for अ° ). T $G_2$ ध्रुवः ( for ततः ). —( L. 3194 ) T पंचगव्येन ; $G_3$ °गव्यं स ( for °गव्यं यः ). $M_{2,4}$ उपोषितः. —( L. 3197 ) T मासे मासे. $G_3$ क्षिपेद् ( for पिबेद् ). —( L. 3198) $M_2$ तंत्रं ; Kumbh. ed. तत्र ( for मन्त्रं ). $M_4$ पात्रं च ब्रह्मकूर्चस्य मंत्रं च शृणु भारत. —( L. 3199 ) $M_{2-4}$ पलाशं. —( L. 3200 ) $G_3$ साधयित्वा ( for साद° ). $M_4$ पूर्वम् ( for पात्रम् ). —( L. 3201 ) $T_1$ गायत्रिया ( hypermetric ). $M_4$ गृह्यते मूत्रं ; Kumbh. ed. गृह्णते मूत्रं ( for गृह्य गोमूत्रं ). —( L. 3202) $G_2$ गो- ( for च ). $T_2$ -क्रावेति ; $G_2$ -क्राव्ण्णोति ; $M_3$ -क्राविण्णोति ( hypermetric ) ( for -क्राव्णेति ). $M_2$ दधितक्रेति तथा दधि ( sic ). —( L. 3203 ) T तेजः शुक्रमसीत्याज्यं ; $G_{2,3}$ तेजोसि शुक्रमसीत्याज्यं ( hypermetric ); $M_{2,3}$ आज्यं शुक्रमसीत्येव ( for the prior half ). $G_{1.2}$ त्वेति ( hypermetric ) ( for [इ]ति ). —( L. 3204 ) $G_1$ आपो हि ष्ठेत्यृचा गृह्य. $M_4$ यवपूर्वं. $M_2$ यथाक्रमं ( for °विधि ). —( L. 3205 ) $T_2$ ब्रह्मणेति ( for °णे च ). $M_4$ तथा. T $M_2$ हुत्वा ब्रह्माहुतीः सर्वाः ( for the prior half ). —( L. 3206 ) समिधैश्. $M_{2,3}$ समृद्धेग्नौ यथाविधि. —( L. 3207 ) $M_2$ निर्मथ्यं $G_{1.2}$ निर्मथ्य ; $M_2$ उद्धृत्य. —( L. 3209 ) T $G_3$ पार्थ ( for पादं ). $G_1$ पठन् ; $M_2$ जपेद् ( for पठेद् ). $G_{1.2}$ सदा ; $G_3$ इमां ; $M_{2,3}$ समं ; $M_4$ अयं ( for यथा ). —( L. 3210 ) $G_1$ [अ]भ्यादित्ये. —( L. 3211 ) T पठेद् ( for जपेद् ). —( L. 3212 ) $M_{2-4}$ न स पापेन लिप्येत. — Colophon. — *Sub-parvan* : T $M_4$ श्रीवैष्णवधर्म ;

युधिष्ठिर उवाच ।

कीदृशा ब्राह्मणाः पुण्या भावशुद्धाः सुरेश्वर ।
यत्कर्म सफलं नेति कथयस्व ममाच्युत ।

भगवानुवाच ।

शृणु पाण्डव तत्सर्वं ब्राह्मणानां यथाक्रमम् । [ 3215 ]
सफलं निष्फलं चैव तेषां कर्म ब्रवीमि ते ।
त्रिदण्डधारणं मौनं जटाधारणमुण्डनम् ।
वल्कलाजिनसंवासो व्रतचर्याभिषेचनम् ।
अग्निहोत्रं वने वासः स्वाध्यायं दानसत्क्रिया ।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मलः । [ 3220 ]
अग्निहोत्रं वृथा राजन्वृथा वेदास्तथैव च ।
शीलेन देवास्तुष्यन्ति श्रुतयस्तत्र कारणम् ।
क्षान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम् ।
तमग्र्यं ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः ।
अग्निहोत्रव्रतपरान्स्वाध्यायनिरताञ्शुचीन् । [ 3225 ]
उपवासरतान्दान्तांस्तान्देवा ब्राह्मणान्विदुः ।
न जातिः पूज्यते राजन्गुणाः कल्याणकारणाः ।
चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः ।
मनःशौचं कर्मशौचं कुलशौचं च भारत ।
शरीरशौचं वाक्शौचं शौचं पञ्चविधं स्मृतम् । [ 3230 ]
पञ्चस्वेतेषु शौचेषु हृदि शौचं विशिष्यते ।
हृदयस्य तु शौचेन स्वर्गं गच्छन्ति मानवाः ।
अग्निहोत्रपरिभ्रष्टः प्रसक्तः क्रयविक्रये ।
वर्णसंकरकर्ता च ब्राह्मणो वृषलैः समः ।
यस्य वेदश्रुतिर्नष्टा कर्षकश्चापि यो द्विजः । [ 3235 ]
विकर्मसेवी कौन्तेय स वै वृषल उच्यते ।
वृषो हि धर्मो विज्ञेयस्तस्य यः कुरुते लयम् ।
वृषलं तं विदुर्देवा निकृष्टं श्वपचादपि ।
स्तुतिभिर्ब्रह्मपूताभिर्यः शूद्रं स्तौति मानवः ।
न च मां स्तौति पापात्मा स मामाक्रोशयेद्भृशम् । [ 3240 ]
श्वदृतौ तु यथा क्षीरं ब्रह्म वै वृषले तथा ।
दुष्टतामेति तत्सर्वं शुना लीढं हविर्यथा ।
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ।
यान्युक्तानि मया सम्यग्विद्यास्थानानि भारत । [ 3245 ]
उत्पन्नानि पवित्राणि पावनार्थं तथैव च ।
तस्मात्तानि न शूद्रस्य स्प्रष्टव्यानि युधिष्ठिर ।

---

$M_2$ वैष्णवे धर्मशास्त्रे; $M_3$ विष्णुधर्म. — *Adhy. name :* $M_2$ प्रायश्चित्तविधिः. — *Adhy. no.*: $T_1$ $G_{1.2}$ $M_3$ 102; $T_2$ $M_4$ 112; $G_3$ 113; $M_2$ 12. — (L. 3213) $M_4$ भावात् (for भाव-). — (L. 3214) $M_4$ यत्तत्कर्मफलं नैति (for the prior half). $G_{1.2}$ [अ]नघ (for [अ]च्युत). — (L. 3215) $M_2$ युधिष्ठिर; $M_4$ विशेषतः (for यथाक्रमम्). — (L. 3216) $T_2$ $G_3$ $M_2$ [इ]ति (for [ए]व). — $G_3$ om. line 3217. — (L. 3217) $M_2$ -धारिणं. $G_1$ -मंडनं (for -मुण्डनम्). — (L. 3218) $M_2$ -संवासा. — (L. 3219) $M_{2.3}$ स्वाध्यायो. $G_{1.2}$ दार- (for दान-). $M_2$ -संक्रिया (for -सत्क्रिया). — (L. 3221) $M_4$ यथा (for the second वृथा). $G_3$ देवास् (for वेदास्). — After line 3221, $M_{2.3}$ ins.:

शीलहीनस्य विप्रस्य शीलं सर्वस्य साधनम् ।

— (L. 3222) $M_{2-4}$ वेदास् (for देवास्). $G_3$ शीलेन देवास्तुष्येरन्कर्मणा पितरस्तथा. — (L. 3223) $M_2$ जितमानं (for जितात्मानं). — (L. 3224) $G_3$ अहं (for अग्र्यं). $G_3$ श्रुतिः (for स्मृताः). — (L. 3226) $T_2$ $G_3$ -व्रतपरांस्; $M_4$ -परान्दांतांस् (for -रतान्दा°). — (L. 3227) $G_{1.2}$ न जात्या पूजितो राजन्; $M_{2.3}$ न जातिपूज्यास्ते राजन् (for the prior half). $M_{2.3}$ कल्याणकारकाः. — (L. 3228) $T_1$ $M_4$ उत्तमं (for ब्राह्मणं). — (L. 3231) $M_{2.3}$ [ए]षु च; $M_4$ [ए]व तु (for [ए]तेषु). $G_1$ धृति- (for हृदि). — (L. 3233) T -परिभ्रष्टाः. T $G_{1.2}$ प्रसक्ताः; $G_3$ प्रसह्य. G क्रयविक्रयैः ($G_3$ °यः). — (L. 3234) T -कर्तारो (for -कर्ता च). T ब्राह्मणा वृषलैः समाः. — (L. 3235) $G_3$ यस्य वेदस्मृतिर्नास्ति (for the prior half). $G_1$ कर्षकाश्चापि ये द्विजाः. — (L. 3237) $M_{2.3}$ धर्मो हि (by transp.). — (L. 3238) T $G_3$ विजानीयान् (for विदुर्देवा). $M_{2.3}$ निकृष्टाः. $G_1$ श्वपचादिभिः. — (L. 3239) $G_3$ स्मृतिभिर्; $M_4$ श्रुति° (for स्तुति°). T $G_3$ -भूताभिर्; $M_4$ -पूर्वाभिः (for -पूताभिर्). $M_{2.3}$ यः स्तौति वृषलस्तु मां; $M_4$ शूद्रः स्तौतीति मां नरः (for the post. half). — (L. 3240) $M_4$ स (for च). T $G_3$ ममाक्रोशकरो भृशं (T also नृप); $M_2$ स मामाक्रोशते भृशं; Madras ed. स तु चंडाल एव च (for the post. half). — (L. 3241) $T_1$ श्वधृतौ; $T_2$ श्वादृतं; $G_1$ श्वद्रुतौ; $G_3$ श्वाभृतं (for श्वदृतौ). $T_2$ $G_3$ च (for तु). $G_1$ ब्रह्माळ (for वृषले). T $G_3$ ब्रह्म तस्य विन($G_3$ प्रण)श्यति. — (L. 3242) T $G_3$ अदुष्टो रु($T_2$ °ष्टे दु-; $G_3$ °ष्टो दु)ष्टतामेति; $M_{2-4}$ अदु-($M_4$ °दु)ष्टं दुष्टतामेति (for the prior half). $G_3$ तीर्थं (for लीढं). — (L. 3243) T षट्चतुर्वेदा; $G_3$ षट्च सर्वेषां; $M_2$ चतुरो वेदा (for वेदाश्चत्वारो). — (L. 3244) T $G_3$ पुराणं धर्मशास्त्रं च (for the prior half). — (L. 3245) $G_1$ यद्वि (for यानि). — (L. 3246)

सर्वं तच्छूद्रसंस्पृष्टमपवित्रं न संशयः ।
लोके त्रीण्यपवित्राणि पञ्चामेध्यानि भारत ।
श्वा च शूद्रः श्वपाकश्चेत्यपवित्राणि पाण्डव । [3250]
देवलः कुक्कुटो यूप उदक्या वृषलीपतिः ।
पञ्चैते स्युरमेध्याश्च स्प्रष्टव्या न कथंचन ।
स्पृष्ट्वैतानष्ट वै विप्रः सचेलो जलमाविशेत् ।
मद्भक्ताञ्शूद्रसामान्यानवमन्यन्ति ये नराः ।
नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः । [3255]
चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान् ।
अवमत्य पतन्त्येव रौरवे नरके नराः ।
मम भक्तस्य भक्तेषु प्रीतिरभ्यधिका नृप ।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ।
कीटपक्षिमृगाणां च मयि संन्यस्तचेतसाम् । [3260]
उर्ध्वामेव गतिं विद्धि किं पुनर्ज्ञानिनां नृणाम् ।
पत्रं वाप्यथ वा पुष्पं फलं वा जलमेव वा ।
ददाति मम शूद्रोऽपि शिरसा धारयामि तत् ।
विप्रानेवार्चयेद्भक्त्या शूद्रः प्रायेण मत्प्रियः ।
तेषां तेनैव रूपेण पूजां गृह्णामि भारत । [3265]
वेदोक्तेनैव मार्गेण सर्वभूतहृदि स्थितम् ।
मामर्चयन्ति ते विप्रा मत्सायुज्यं व्रजन्ति ते ।
मद्भक्तानां हितायैव प्रादुर्भावः कृतो मया ।
प्रादुर्भावाकृतिः काचिदर्चनीया युधिष्ठिर ।
आसामन्यतमां मूर्तिं यो मद्भक्त्या समर्चति । [3270]
तेनैव परितुष्टोऽहं भविष्यामि न संशयः ।
मृदा च मणिरत्नैश्च ताम्रेण रजतेन वा ।
कृत्वा प्रतिकृतिं कुर्यादर्चनां काञ्चनेन वा ।
पुण्यं दशगुणं विद्यादेतेषामुत्तरोत्तरम् ।
जयकामोऽर्चयेद्राजा विद्याकामो द्विजोत्तमः । [3275]
वैश्यो वा धनकामस्तु शूद्रः पुण्यफलप्रियः ।
सर्वकामाः स्त्रियो वापि सर्वान्कामानवाप्नुयुः ।

Colophon.

युधिष्ठिर उवाच ।
कीदृशानां तु शूद्राणां नानुगृह्णासि चार्चनम् ।
उद्वेगस्तव कस्मात्तु तन्मे ब्रूहि सुरेश्वर ।
भगवानुवाच ।
अव्रतेनाप्यभक्तेन स्पृष्टां शूद्रेण चार्चनाम् । [3280]

---

G1.2 M4 भुवनार्थं (for पाव°). T G3 युधिष्ठिर (for तथैव च). —(L. 3247) G3 शूद्रान्ये; M2.3 शूद्राद्यैः. T प्रष्टव्यानि (for स्पष्ट°). M2 तथैव च (for युधिष्ठिर). —(L. 3248) G1 सर्वतः; M4 सर्वं च (for सर्वं तत्). M2.3 -वक्त्रस्थम् (for -संस्पृष्टम्). —G3 om. lines 3249–3250. —(L. 3250) T शूद्रश्च (by transp.). —(L. 3251) G1.2 गायकः (for देवलः). G3 काकयूपश्च (for कुक्कुटो यूप). G1.2 क्षुदक्या. —(L. 3252) T2 य एते; G1 पंचैव (for पञ्चैते). T युधिष्ठिर; G3 कदाचन (for कथंचन). —(L. 3253) M2 [ए]तानि च (for °नष्ट). —(L. 3254) G3 -सामान्याद्; M4 -चंडालान्. —G3 om. (hapl.) lines 3255–3257. M2 om. lines 3255–3256. —(L. 3255) G2 -कोटीर् (for -कोटिं). —(L. 3257) T2 अवमन्य; G1.2 °मानात्; M3 °पत्य (for °मत्य). T पतति. G2 M3.4 नरके रौरवे (by transp.). T नरः. —(L. 3258) T G3 M4 मद्भक्त- (for भक्तस्य). G1.2 मम (for नृप). —(L. 3259) G2 भक्तस्य (for मद्भक्त-). M4 मम प्रीतिकरा नृप (for the post. half). —(L. 3260) G3 -मानसां (for -चेतसाम्). —(L. 3261) M4 ऊर्ध्वम्. —(L. 3262) G1.2 M4 [अ]थ्याप; M2.3 तोयम् (for जलम्). —M4 om. line 3263. —(L. 3263) T G3 तं (for तत्). —(L. 3264) Madras ed. शूद्र- (for शूद्रः). T G3 प्रायांश्च; G2 प्रायश्च (for प्रायेण). T1 G2 M2 मत्प्रियान्. —(L. 3265) T G1.2 तस्य (for तेषां). —(L. 3267) M2.3 सायुज्यं यांति ते मयि (M3 °म) (for the post. half). —(L. 3268) T G3 M4 ब्राह्मणानां; M2 भक्तानां तु (for मद्भक्तानां). —(L. 3269) T G1 प्रादुर्भावकृतिः. —(L. 3270) G2 अन्यतमां (for अन्य°). M2 असामान्यतमां मूर्तिं (for the prior half). M2 मे भक्त्या (for मद्भक्त्या). —(L. 3272) T G2.3 M4 मृदश्म- (for मृदा च). —(L. 3273) G2 मूर्तीनां (for अर्चनां). —(L. 3274) M4 कुर्याद् (for विद्याद्). —(L. 3275) M2 जयेद् (for ऽर्चयेद्). G3 नित्यं फलैः पुष्पैर् (for राजा विद्याकामो). T [ऽ]र्चयेद्द्विजः (for द्विजोत्तमः). —(L. 3276) G1.2 सुख- (for पुण्य-). Madras ed. शूद्रः पुण्यं फलं प्रियः (for the post. half). —(L. 3277) G1 सर्वकामः. T G3 M2.3 सर्वकामप्रियो (T1 G3 °या) वापि (for the prior half). M2 सर्व- (for सर्वान्). T1 G1 समाप्नुयात् (G1 °युः) (for अवाप्नुयुः). —Colophon. —*Sub-parvan:* T2 G1.2 M2 वैष्णवधर्म. —*Adhy. name:* G1.2 भक्तार्चनविधिः. —*Adhy. no.:* T1 104; T2 M4 113; G1.2 M3 103; M2 20; G3 114. —(L. 3278) G3 भग्नव्रतानां (for कीदृशानां तु). G विप्राणां (for शूद्राणां). T2 नाम (for नानु-). G3 M2 -गृह्णामि (for °सि). G2 [अ]र्चनां. —(L. 3279) G3 इत्युक्तं ते यत्तु पूर्वं (for the prior half). T G2 M3 सुरोत्तम (for सुरेश्वर). M2 तन्ममाचक्ष्व केशव (for the post. half). —M4 om. (hapl.) lines 3280–3289. —(L. 3280) G3 स्पृष्टां विधिविवर्जितां; M2.3 स्पृष्टा शूद्रेण

तां वर्जयामि यत्नेन श्वपाकविहितामिव ।
नन्वहं शंकरश्चापि गावो विप्रास्तथैव च ।
अश्वत्थो मम रूपाणि सत्यमेतद्युधिष्ठिर ।
एतत्त्रयं हि मद्भक्तो नावमन्येत कर्हिचित् ।
अवमानितमेतत्तु दहत्यासप्तमं कुलम् । [3285]
अश्वत्थो ब्राह्मणा गावो मन्मयास्तारयन्ति ह ।
तस्मादेतत्प्रयत्नेन त्रयं पूजय पाण्डव ।

युधिष्ठिर उवाच ।

ब्राह्मणेनैव देहेन शूद्रत्वं कथमाप्नुयात् ।
ब्रह्म वा नश्यति कथं वक्तुं देव त्वमर्हसि ।

भगवानुवाच ।

कूपस्नानं तु यो विप्रः कुर्याद्वादशवार्षिकम् । [3290]
स तेनैव शरीरेण शूद्रत्वं यात्यसंशयम् ।
यस्तु राजाश्रयेणैव जीवेद्द्वादशवार्षिकम् ।
स शूद्रत्वं व्रजेद्विप्रो वेदानां पारगोऽपि सन् ।
पत्तने नगरे वापि यो द्वादशसमा वसेत् ।
स शूद्रत्वं वसेद्विप्रो नात्र कार्या विचारणा । [3295]
उत्पादयति यः पुत्रं शूद्रायां कामतो द्विजः ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ।
मद्यपी स्त्रीसुखं मोहादास्वादयति यो नरः ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ।
यः सोमलतिकां विप्रः केवलं भक्षयेद्वृथा । [3300]
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ।
मैथुनं कुरुते यस्तु जिह्वायां ब्राह्मणो नृप ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ।
विप्रत्वं दुर्लभं प्राप्य दुर्मार्गैरेवमादिभिः ।
विनाशयन्ति ये तत्तु ताञ्शोचामि युधिष्ठिर । [3305]
तस्मात्सर्वप्रयत्नेन मत्प्रियो यो युधिष्ठिर ।
जातिभ्रंशकरं कर्म न कुर्यादीदृशं द्विजः ।

Colophon.

युधिष्ठिर उवाच ।

देशान्तरगते विप्रे संयुक्ते कालधर्मणा ।
शरीरनाशे संप्राप्ते कथं प्रेतविकल्पना ।

भगवानुवाच ।

श्रूयतामाहिताग्नेस्तु तथा भूतस्य संस्क्रिया । [3310]
पालाशवृन्तैः प्रतिमा कर्तव्या कल्पचोदिता ।
त्रीणि षष्टिशतान्याहुरस्थीन्यस्य नराधिप ।
तेषां विकल्पना कार्या यथाशास्त्रविनिश्चयम् ।
अशीत्यर्धं शिरसि च ग्रीवायां दश एव च ।
बाह्वोश्चापि शतं दद्यादङ्गुलीषु पुनर्दश । [3315]
उरसि त्रिंशतं दद्याज्जठरे चापि विंशतिम् ।

याचैना ( for the post. half ). — ( L. 3281 ) G राजेंद्र ( for यत्नेन ). — M2, 3 om. line 3282. — ( L. 3282 ) T अहं च ( for नन्वहं ). G3 वेदवेदांतविद्विप्रो गौश्चैव च सुदोहना. — ( L. 3283 ) Madras ed. [ऽ]मर- ( for मम ). G1 रूपं हि ( for रूपाणि ). G2, 3 त्रयम् ( for सत्यम् ). M2, 3 गावो विप्रास्तथाश्वत्थं मम रूपं युधिष्ठिर. —( L. 3286 ) T G3 M3 अश्वत्था. M2 ब्राह्मणो. G2 M2 हि ( for ह ). — ( L. 3288 ) T M3 ब्राह्मणोनेन देहेन ; M2 °णा स्वेन रूपेण ( for the prior half ). M2 आप्नुयुः ( for °यात् ). G1, 2 कथं शूद्रत्वमाप्नुयात्. — ( L. 3289 ) G2 ब्रह्मद्दा न्यस्याति कथं ; M2 तेषां ब्रह्म कथं नश्येद् ( for the prior half ). G3 एतत् ; M2 एव ( for देव ). — ( L. 3291 ) M2 पांडव ; M1 [अ]पंशयः. G3 शूद्र एव न संशयः ( for the post. half ). — After line 3291, M2 ins.:

शूद्रग्रामेऽथ वाप्येकः कुर्याद्वादशवार्षिकम् ।
गृह्योक्तमपि कुर्वाणाः शूद्रत्वं यान्ति ते द्विजाः ।

— ( L. 3293 ) T सः ( for सन् ). M2 प्रेत्य चंडालतामपि ( for the post. half ). — ( L. 3294 ) T G3 M3 पट्टणे ( for पत्तने ). — ( L. 3296 ) G2 शूद्रायां काममोहितः. — ( L. 3297 ) M2 समम् ( for सद्य ). — After line 3297, T M2, 3 read lines 3300–3301. G1 om. line 3298. — ( L. 3298 ) T1 G2 मद्यपं. G2 M2, 4 द्विजः ( for नरः ). — ( L. 3302 ) G3 पांडुनंदन ; M2 कामगो द्विजः ( for ब्राह्मणो नृप ). — ( L. 3305 ) T2 G3 विनाशयति. T2 एतत् ( for ये तत् ). G3 M2 तत् ( for ताञ् ). — After line 3305, T M3 ins.:

शूद्रस्त्रीसङ्गमो यस्तु सदा ब्राह्मणदूषकः ।
परहिंसापरो यस्तु तं तु शोचामि भारत ।

— ( L. 3306 ) M2 मत्प्रियाय ( for °यो यो ). — G3 om. line 3307. — Colophon. — *Sub-parvan :* T G1, 2 M3, 4 वैष्णवधर्मं ; M2 वैष्णवे धर्मशास्त्रे. — *Adhy. no.:* T1 M3 105 ; T2 M4 114 ; G1, 2 104 ; G3 115 ; M2 21. — ( L. 3308 ) M2, 3 देशांतरगतो विप्रः. T G1 संयुते ; M2, 3 संयुक्तः. M2 कालधर्मिणः. — ( L. 3309 ) M2, 3 आहिताग्निः सुरश्रेष्ठ ( for the prior half ). T G1, 2 प्रेतत्वकल्पना. — ( L. 3310 ) G3 आहिताग्निस्तु. — ( L. 3313 ) G1, 2 M2, 3 -विनिश्चितं ( for °श्चयम् ). — ( L. 3314 ) M2, 3 तु शिरसि ( for शिरसि च ). G3 शतम् ( for दश ). — ( L. 3316 ) G1 उरसस् ; M2, 3 उरस-. T G त्रिशतं. M2, 3 विंशति ; Madras ed. °तिः. — ( L. 3318 ) M2 शतपूर्वैश्च ( for °मूर्वोस्तु ). M2, 3 तदर्धं

